मित्यादिना सङ्कल्पविशेषवचनात्सच्छब्दनिर्दिष्टं तद्वस्तु यच्छ्रीनिवासाख्य पर ब्रह्मेति प्रकाशयति, तच्छ्रीनिवासाख्य ब्रह्म भजे इति ॥

भावः। सद्विद्याप्रकरणे [1] " सदेव सोम्येदमग्र आसीत् " इत्यस्मिन् जगत कारणावस्थाप्राप्तिप्रतिपादनपरवाक्ये सच्छब्दनिर्दिष्टस्य वस्तुन [1] " तदैक्षत बहु स्या प्रजायेयेति " इति तदनन्तरवाक्ये बहुभवनसङ्कल्परूप-सङ्कल्पविशेषोऽभिहित । स च श्रीनिवासाख्यदेवताविशेषप्रत्यभिज्ञापक । अत उक्तप्रत्यभिज्ञापकेन लिङ्गेन सच्छब्दनिर्दिष्ट जगत्कारण वस्तु श्रीनिवास एवेति निश्चीयते ॥

तथा हि—तैत्तिरीये आनन्दवल्ल्या [2] " सोऽकामयत । बहु स्या प्रजायेयेति " इति श्रूयमाणबहुभवनसङ्कल्पविशेष एवाय [1] " तदैक्षत बहु स्या प्रजायेयेति " इति श्रूयमाण सङ्कल्प इति प्रत्यभिज्ञायते। तत्र तादृशसङ्कल्प-वतस्तच्छब्दपरामृष्टस्यानन्दमयस्य उत्तरत्र [3] " स यश्चाय पुरुषे, यश्चासा-वादित्ये, स एक " इत्यादित्यमण्डलान्तर्वर्तिपुरुषेणैक्यप्रतिपादनात् तस्य चान्तरादित्यविद्याया [4] " तस्य यथा कप्यास पुण्डरीकमेवमक्षिणी " इति पुण्डरीकाक्षत्वश्रवणात् बहुभवनसङ्कल्पकर्ता आनन्दमय पुरुष पुण्डरीकाक्षा-ख्यदेवताविशेष एवेति निर्धारणात्, स पुण्डरीकाक्ष एवाय [1] " तदैक्षत बहु स्या " मिति बहुभवनसङ्कल्पकर्ता सच्छब्दवाच्य इति प्रत्यभिज्ञायते। एव एव-विधसङ्कल्पतन्मूलकजगत्सृष्ट्याक्षिप्तसर्वज्ञत्वसर्वशक्तित्वसत्यसङ्कल्पत्वादिगुण - वत तथाविधसङ्कल्पवत स्वस्वरूपेण तेज प्रभृतिजडरूपेण बहुभवनासम्भवात् तेज प्रभृतिशरीरद्वारा बहुभवनमेव तत्र विवक्षितमिति वक्तव्यतया तथाविध-सङ्कल्पेन तन्निर्वाहाय तम प्रभृतिपृथिव्यन्तशरीरकत्वमाक्षिप्यते । तदाक्षिप्तस्य तम प्रभृतिशरीरकत्वस्य सुबालोपनिषदि श्रीनिवासापरनामधेयनारायणा-ख्यदेवताविशेषे श्रवणात् तम प्रभृतिसर्वशरीरक स श्रीनिवास एवाय

[1] छा ६ २ १ [2] तै आन ६ [3] तै सु १०४ [4] छा १ ६ ६

[1]"तदैक्षत बहु स्यामिति" बहुभवनसंकल्पकर्तेति प्रत्यभिज्ञायते। एवं सूत्रस्थेन 'ईक्षति' शब्देनासंकोचात् [2]"सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवताः अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति नामरूपव्याकरणसंकल्पस्यापि सद्विद्याप्रकरणस्थस्य ग्रहणेन, तेनापि [3]"वेदाहमेतं पुरुषं महान्तं आदित्यवर्णं तमसस्तु पारे। सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाऽभिवदन्यदास्ते" इति पुरुषसूक्तोक्तो नामरूपव्याकर्ता लक्ष्मीपतिः श्रीनिवासाख्यो महापुरुष एवेयं नामरूपव्याकरणसंकल्पपूर्वकं नामरूपव्याकर्त्री सच्छब्दनिर्दिष्टा परा देवतेति प्रत्यभिज्ञायते ॥

एवं सद्विद्याप्रकरणे [4]"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति श्रूयमाणेन मोक्षोपायोपासनविषयत्वेन [5]"तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते" इत्यादिना पुरुषसूक्तोत्तरनारायणानुवाकयोरुक्तं लक्ष्मीपतेः श्रीनिवासस्यासाधारणं मोक्षोपायोपासनविषयत्वं स्मार्यते। तेनापि सैवेयं मोक्षोपायोपासनविषयः सच्छब्दनिर्दिष्टा परा देवतेति प्रत्यभिज्ञायते। अत एभिः प्रत्यभिज्ञापकैर्लिङ्गैस्सद्विद्यायां सच्छब्दनिर्दिष्टा परा देवता श्रीनिवास एवेति निर्धार्यत इति। एषु चतुर्थं प्रत्यभिज्ञापकं [6]"तन्निष्ठस्य मोक्षोपदेशात्" इत्युत्तरसूत्रे उपात्तमिति द्रष्टव्यम्। अत्र उक्तरीत्या श्रीनिवासाख्यदेवताविशेषप्रत्यभिज्ञापनार्थमेवेक्षणस्य हेतुत्वोक्तिः। तेन ईक्षणहेतुना प्रधानभेदं प्रसाध्य उत्तरसूत्रे ईक्षणस्य गौणत्वमाशङ्क्य 'आत्मशब्दादि'ति हेतुना गौणत्वशंकानिराकरणापेक्षया 'आत्मशब्दादि'ति हेतुनैव प्रधानभेदसाधनस्योचिततया उक्तरीत्या गौणत्वशङ्कानिरासकहेतुसापेक्षेणेक्षणेन प्रधानभेदसाधनमनुचितमिति शङ्काया नावकाशः इति ॥

[1] छा. ६-२-३ [2] छा. ६-३-२ [3] तै. आर. ३-१३, पुरुष [4] छा. ६-१४-२. [5] तै. आ. ३-१२, पुरुष. [6] ब्र. सू. १-१-७.

पूर्वपक्षः ।

[1]"सदेव सोम्येदमग्र आसीत्" इति जगतः कारणावस्थाप्रतिपादनपरवाक्ये सच्छब्दनिर्दिष्टं वस्तु प्रधानाख्यं त्रिगुणद्रव्यमेव भवितुमर्हति ! सत्वरजस्तमोरूपगुणत्रयात्मकस्य जगत उपादानकारणं यत्तस्यैवोक्तश्रुताभिधानेन तस्य सत्वादिगुणत्रयमयत्वस्याऽवश्यकत्वात् अस्मिन् प्रकरणे उत्तरत्र [2]"तत्तेज ऐक्षत" इत्यादिषु तेजःप्रभृतीनां ईक्षणश्रवणेन तेषां चेतनासाधारणमुख्येक्षणासम्भवात् कार्योन्मुख्यरूपं गौणेक्षणमेव तत्रोच्यत इत्यंगीकार्यम् । तत्साहचर्यात् [3]"तदैक्षत बहु स्यां" इत्यत्र सच्छब्दनिर्दिष्टस्यापि गौणमेवेक्षणमुच्यत इति निश्चीयते । अतः प्रधानस्यापि तदुपपद्यत इति ॥

सिद्धान्तः ।

उत्तरत्र [4]"सन्मूलास्सोम्येमाः" इत्युपक्रम्य "स आत्मा" इत्यनेन प्रकृतस्य सतश्चेतनत्वाभिधानेन [5]"तदैक्षत बहु स्या"मित्यत्र चेतनासाधारणमुख्येक्षणस्यैव विवक्षितत्वावगमात्, तत्र सच्छब्दवाच्यं जगत्कारणं न प्रधानम् । [5]"तत्तेज ऐक्षत" इत्यादिषु मुख्येक्षणमेव विवक्षितमिति द्वितीयाध्यायद्वितीयपादे उपपादयिष्यते ॥

किं चास्मिन्प्रकरणे उत्तरत्र [6]"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति श्रूयते । यावद्देहाद्विमुक्तो भवति तावानेव सदुपासकस्य, सत्प्राप्तौ विलम्बः । देहपातानन्तरं सच्छब्दितं कारणवस्तु प्राप्नोतीति तदर्थः । अनेन च सदुपासकस्य देहपातादूर्ध्वं मोक्षप्राप्तिवचनेन मोक्षोपायोपासनविषयत्वं सच्छब्दनिर्दिष्टस्य प्रतीयते । तच्च प्रधानस्य न घटते । एवं प्रधानस्यात्र सच्छब्देन विवक्षितत्वे तस्याऽपुरुषार्थत्वेन हेयत्वमुच्येत । तत्तु नोक्तम् । प्रत्युत मोक्षोपायत्वेनोपादेयत्वमुक्तम् ॥

[1] छा. ६-२-१. [2] छा. ६-२-३. [3] छा ६-२-३. [4] छा. ६-८-६.
[5] छा. ६-२-३. [6] छा. ६-१४-२.

एवं सद्विद्योपक्रमे [1]"येनाश्रुतं श्रुतं" इत्यादिना एकज्ञानेन तत्कार्यस्य सर्वस्य जगतो ज्ञातत्वं प्रतिज्ञाय, तयोः कार्यकारणभावोपपादनाय [2]"सदेव सोम्येदमग्र आसीत्" इत्युपक्रान्तम्। अतो यज्ज्ञानेन सर्वस्य ज्ञातत्वं प्रतिज्ञातं तदेवात्र सच्छब्देन निर्दिश्यते। तस्याचेतनप्रधानरूपत्वे तज्ज्ञानेन चेतनस्य ज्ञातत्वं न संभवति। परमात्मरूपत्वे तु तस्यैकस्यैव स्थूलसूक्ष्मचिदचिच्छरीरकत्वेन कार्यत्वकारणत्वयोरुत्तरत्र प्रकृत्यधिकरणे वक्ष्यमाणत्वात् कारणस्य तस्य ज्ञानेन कार्यस्य तस्य ज्ञाततासम्भवादुक्तप्रतिज्ञोपपद्यते ॥

एवमुत्तरत्र सुषुप्त्यभिधानप्रकरणे "[3]सता सोम्य तदा सम्पन्नो भवति" इति सुषुप्तस्य सच्छब्दनिर्दिष्टकारणवस्तुनि लयमभिधाय, [3]"स्वमपीतो भवति" इत्यनेन तस्य लयस्य जीवात्मनस्स्वस्मिन् लयरूपत्वमभिहितम्। तच्च सच्छब्दनिर्दिष्टस्य जीववाचकस्वशब्दवाच्यत्वे घटते। प्रधानस्य जीववाचकशब्दवाच्यत्वासंभवाद्वाक्यस्य प्रधानपरत्वे न घटते। परमात्मपरत्वे तु तस्य सर्ववस्तुवाचकशब्दवाच्यताया उपपादयिष्यमाणत्वाद्घटते ॥

एवं महोपनिषदादिषु श्रीनिवासापरनामधेयनारायणस्यैव कारणताप्रतिपादनात्, प्रकृते कारणवाचिनस्सामान्यस्य सच्छब्दस्य सामान्यविशेषन्यायेन विशेषे नारायणे पर्यवसानमावश्यकम्। एवं छान्दोग्य एव [4]"एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः" इत्यत्रापहतपाप्मत्वादिप्रत्यभिज्ञापिनस्य नारायणस्यैव मुमुक्षूपास्यत्वोक्त्या तस्य कारणत्वसिद्धेश्च, न प्रधानं कारणत्वाभिप्रेत सच्छब्दवाच्यम्। अपि तु श्रीनिवासनामधेयदेवताविशेष एवेति निर्धार्यते। अतो नात्र साङ्ख्योक्तस्य प्रधानस्य प्रसक्तिगन्धः। सत्त्वादिगुणत्रयमयस्य

[1] छा ६-१-३. [2] छा ६-२-१. [3] छा ६-८-१ [4] छा ८-१-५

जगतस्तथाविधं प्रधानमेव कारणं भवितुमर्हतीत्युक्तिस्तु विलक्षणत्वाधिकरणे परिहरिष्यते ॥

ईक्षत्यधिकरणम् ॥ ५ ॥

अथानन्दमयाधिकरणं ॥ ६ ॥

पूर्वाधिकरणे जगत्कारणस्य संकल्पविशेषश्रवणात् तस्य मुख्यत्वात् तदाश्रयभूतं जगत्कारण नाचेतनमित्युक्तम् । तर्हि जीव एव जगत्कारणमस्तु तस्य सङ्कल्परूपमुख्येक्षणसम्भवादित्याशंकापरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## ॥ आनन्दमयोऽभ्यासात् ॥ १-१-१३ ॥

[विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १-१-१४ ॥
तद्धेतुव्यपदेशाच्च ॥ १-१-१५ ॥
मान्त्रवर्णिकमेव च गीयते ॥ १-१-१६ ॥
नेतरोऽनुपपत्तेः ॥ १-१-१७ ॥
भेदव्यपदेशाच्च ॥ १-१-१८ ॥
कामाच्च नानुमानापेक्षा ॥ १-१-१९ ॥
अस्मिन्नस्य च तद्योगं शास्ति ॥ १-१-२० ॥]

[1]"भेदव्यपदेशाच्चान्य" इत्युत्तरसूत्रात् 'अन्य' इति पदमाकृष्यते । ततश्चानन्दवल्ल्या [2]"तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमय" इति आनन्दमयशब्दवाच्य जीवादन्य , अभ्यासात्–उत्तरोत्तरं शतगुणितक्रमेणाऽऽवर्त्यमानस्यानन्दस्यास्मिन् प्रकरणे आनन्दमयसन्निधितया श्रवणादिति सूत्रार्थ ॥

[1] ब्रा सू. १-१-२२ ॥ [2] तै आन २-५

अत्राभ्यासशब्दस्याऽऽवृत्त्याऽन्योऽप्यर्थो विवक्षितः । अभ्यासात्- मुहुरुक्तेरित्यर्थः । [1]"स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इत्यानन्दमयादित्यमण्डलान्तस्थयोरैक्यस्यानन्दवल्ल्या भृगुवल्ल्या च मुहुरुक्तेरित्यर्थः । अनेन च पदविवक्षात्पर्यलिङ्गान्तर्गतं तयोरैक्यतात्पर्यलिङ्गमभ्यासाख्यं दर्शितम् । उक्तरीत्याऽऽवृत्त्याऽर्थान्तरलाभार्थमेव 'अभ्यासात्' इत्युक्तम् ॥

निरुपधिकानन्दाद्यैरानन्दमयं व्यनक्ति तद्विद्या ।
इतरव्यावृत्तैर्यत्तद्ब्रह्म श्रीनिवासनाम भजे ॥ ७ ॥

तद्विद्या— आनन्दमयविद्या, आनन्दमयं— स्वस्मिन्नुपास्यमानन्दमयशब्दनिर्दिष्टमात्मानं, इतरव्यावृत्तैः—श्रीनिवासाख्याद्ब्रह्मणः इतरेभ्यो व्यावृत्तैः, जीवात्मस्वसम्भवद्भिरित्यर्थः । निरुपधिकानन्दाद्यैः—निरुपधिकः स्वाभाविकः, इतरसङ्कल्पनधीन इति यावत् यः आनन्दः, तत्प्रभृतिभिः अत्राद्यशब्देन मोक्षप्रदत्वादिकं गृह्यते । यत् श्रीनिवासाख्यं ब्रह्मेति व्यनक्ति प्रकाशयति, तत् श्रीनिवासाख्यं ब्रह्म भजे इति ॥

भावः । आनन्दवल्ल्या आनन्दमयविद्याप्रकरणे तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यानन्दमयमात्मानं प्रस्तुत्य, अनन्तरं [2]"सैषानन्दस्य मीमांसा भवति" इत्यारभ्य [3]"ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः, श्रोत्रियस्य चाकामहतस्य" इत्यन्तेनानन्दमयात्मसम्बन्धिन आनन्दस्येयत्ताभिधानप्रकरणे 'चतुर्मुखस्य य आनन्दः शतगुणितस्स ब्रह्मण एक आनन्दः' इत्युक्त्वा, [3]"श्रोत्रियस्य चाकामहतस्य" इत्यनेन तदुत्तरवाक्येन मुक्तस्यापि तादृशानन्दवत्त्वमुक्तम् । 'अकामहतस्य' विषयविरक्तस्य 'श्रोत्रियस्य' श्रुतवेदान्तस्य वेदान्तश्रवणेन ब्रह्मोपासनद्वारा मुक्तिं प्राप्तस्येति यावत् ।

[1] तै. न. १०८॥ [2] तै. आन. ॥ [3] तै. आन, ८ ॥

शतगुणितश्चतुर्मुखानन्दो मुक्तस्यैक आनन्द इत्यर्थः। अत्र मुक्तानन्दस्य ब्रह्मोपासनाधीनत्वमुक्तम्। ततश्च मुक्तानन्दस्योपासनप्रीतभगवत्सङ्कल्पकृतत्वं लभ्यते। [1]"स एको ब्रह्मण आनन्द" इत्यत्र तु कारणविशेषानुक्त्या ब्रह्मानन्दस्येतरसंकल्पानधीनस्वरूपं स्वाभाविकत्वं लभ्यते। तेन निरुपाधिकानन्दवत्त्वं श्रीनिवासापरनामधेयस्य ब्रह्मण एव नान्यस्येति लाभात्तथाविधानन्दवत्त्वेन आनन्दमयशब्दनिर्दिष्टं वस्तु श्रीनिवासाभिधानं परब्रह्मेति स्फुटीभवति ॥

एवमानन्दमयविद्यायां [2]"को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति" इति श्रूयते। अस्यायमर्थः- पूर्वोक्त आकाश आनन्दः–निरुपाधिकापरिच्छिन्नानन्दवान्न स्याद्यदि, को वा–ब्रह्मादिस्तम्बपर्यन्तेषु को वा, अन्यात्–त्रैवर्गिकानन्दं लभेत। को वा प्राण्यात्–मोक्षानन्दं लभेत। एष एव हि–आनन्दमय आत्मैव, आनन्दयाति–आनन्दयति। त्रैवर्गिकमापवर्गिकञ्चानन्दं प्रापयतीत्यर्थः। उत्तरनारायणे च [3]"तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय," इत्यनेनाप्ययमेवार्थः प्रतिपाद्यते। तं महापुरुषं विद्वान्–उपासीनः, अमृतो भवति–मुक्तो भवति। अयनाय–मोक्षप्राप्तये, अन्यः पन्थाः–महापुरुषातिरिक्त उपायो न विद्यत इति तदर्थः। [4]"एष ह्येवानन्दयाति" इत्यन्वयमुखेनोक्तोऽर्थो [5]"नान्यः पन्था विद्यते अयनाय" इति व्यतिरेकमुखेनोक्तः। अत उभयोरैकार्थ्यात् तस्य च लक्ष्मीपतिविषयत्वात् स लक्ष्मीपतिरेवायमानन्दमय इति प्रत्यभिज्ञायते ॥

एवं आनन्दमयविद्यायां [6]"स यश्चायं पुरुषे, यश्चासावादित्ये स एकः" इत्यनेनानन्दमयस्यादित्यमण्डलान्तर्वर्तिपुण्डरीकाक्षस्य चैक्योपदेशात् स

[1] तै. आन. २-८. ॥ [2] तै. आन. २-७. ॥ [3] तै. आर. ३-१३-४० ॥
[4] तै. आन. २-७. [5] तै. आर. ३-१३-४०. [6] तै. मु. १०-४.

पुण्डरीकाक्ष एवायमानन्दमय इति लभ्यते। अत एभि. प्रत्यभिज्ञापकलिंगैरानन्दमयविद्यावेद्य· पुण्डरीकाक्ष. श्रीनिवास एवेति स्फुटीभवति। अनन्तरोक्तप्रत्यभिज्ञापकद्वयं श्लोके आद्यशब्देन गृह्यते। तत्र त्रैवर्गिकापवर्गिकानन्दहेतुत्वरूपं प्रत्यभिज्ञापकं [1] "तद्धेतुव्यपदेशाच्च" इति सूत्रेण कण्ठोक्तम्। पुण्डरीकाक्षरूपत्वं तु आवृत्तेन सौत्रेणाभ्यासपदेन संगृहीतम्। निरुपाधिकानन्दवत्त्वस्य सूत्रोपात्तस्योक्तदेवताविशेषप्रत्यभिज्ञापकत्वं यद्यपि न संभवति उक्तश्रीनिवासाख्यदेवताविशेषस्य निरुपाधिकानन्दवत्ताया विशिष्य क्वाप्यनुक्ते, तथापि [2] "तमेवं विद्वानमृत इह भवति" इत्यादेः [3] "को ह्येवान्यात्क· प्राण्यात्" इत्यादेश्चैकार्थ्यस्य प्रागुपपादिततया तत्र महापुरुषशब्दितस्य लक्ष्मीपते· श्रीनिवासाख्यदेवताविशेषस्य स्वस्मादन्येषां सर्वेषामानन्दयितुर्निरुपाधिकानन्दवत्त्वमर्थसिद्धम्। न हि स्वयमन्याधीनानन्दवान् त्रैकाल्यवर्तिनामन्येषामानन्दयिता भवतीत्यर्थसिद्धं निरुपाधिकानन्दवत्त्वं महापुरुषप्रत्यभिज्ञापकं भवतीति सूत्रकाराभिप्राय इति ॥

पूर्वपक्षः।

आनन्दवल्ल्या [4] "ब्रह्मविदाप्नोति परं" इति ब्रह्म प्रक्रम्य [5] "सत्यं ज्ञानमनन्तं ब्रह्म" इति तल्लक्षणमभिधाय, [6] "तस्माद्वा एतस्मादात्मन आकाशस्संभूत." इत्यादिना प्रक्रान्तस्य ब्रह्मण आत्मत्वं तस्मादाकाशाद्युत्पत्तिञ्चाभिधाय, [7] "तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्माऽऽनन्दमय" इति प्रक्रान्ता आत्मोपदेशपरम्परा आनन्दमये समापिता। अत प्रक्रान्तं ब्रह्म आनन्दमयात्मेवेति निश्चीयते। तस्य न

---

[1] शा. सू १-१-१४ [2] तै. आर. ३-१२ ८० [3] तै. आन २-७
[4] तै, आन. २-१. [5] तै. आन.२-१. [6] तै. आन.२-१ [7] तै. आन. २-५

आनन्दमयात्मनः [1]"तस्यैष एव शारीर आत्मा" इत्युत्तरवाक्ये शरीरसंबन्धित्वरूपं शारीरत्वमुक्तम्। कर्मपरवशजीवस्यैव कर्मफलभोगार्थशरीरसंबन्धः संभवति, न त्वकर्मवश्यस्य परमात्मन इति शरीरसंबन्धितया श्रुतोऽयमानन्दमय आत्मा जीवात्मैवेति निश्चीयत इति ॥

## सिद्धान्तः।

निरुपाधिकानन्दवत्त्वादीनां जीवात्मन्यसंभवान्निखिलजगच्छरीरकस्य परमात्मनोऽसंकोचन्यायलभ्यसकलशरीरकत्वरूपशारीरत्वस्य संभवात्तथाविधानन्दवत्तया श्रुतोऽयमानन्दमयः परमात्मैव। न चाविकारस्य परमात्मनो विकारवाचिमयडन्तानन्दमयशब्दवाच्यानन्दविकारत्वासंभवान्नायमानन्दमयशब्दवाच्यः परमात्मेति वाच्यम्। 'अन्नमयो यज्ञ' इत्यादाविव 'आनन्दमय' इत्यत्र मयटः प्राचुर्यार्थकत्वेन प्रचुरानन्दवत्त्वस्यैवानन्दमयशब्देन बोधनात्। तस्य चोत्तरत्र [2]"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति" इति वाङ्मनसापरिच्छेद्यानन्दवत्तया श्रुते परमात्मन्येवोपपत्तेः। न चानन्दमयशब्दस्य प्रचुरानन्दवत्परत्वाभ्युपगमेऽप्यानन्दगतप्राचुर्यस्य प्रतियोगिसापेक्षतया दुःखापेक्षया प्राचुर्यस्यैव लाभेनानन्दमयात्मनोऽल्पदुःखसंबन्धलाभात् हेयप्रत्यनीकतयाऽभ्युपगते परमात्मनि लेशतोऽपि हेयसंबन्धासंभवेन प्रचुरानन्दवत्त्वमपि तस्य नोपपद्यत इति वाच्यम्। आनन्दमयशब्दवाच्यानन्दप्राचुर्यविवरणाय प्रवृत्तायां [3]"सैषानन्दस्य मीमांसा भवति" इत्यादिना श्रुतायामानन्दमीमांसायां [4]"ते ये शतं प्रजापतेरानन्दाः" इत्यन्तेन प्रस्तुतचतुर्मुखान्तसकलजीवानन्दापेक्षया शतगुणिताधिक्यरूपप्राचुर्यस्यैवानन्दमयशब्देन विवक्षितत्वविवरणेन प्रकृतानन्दमयात्मनि दुःखसंबन्धाप्रसक्तेः ॥

[1] तै. आन २-५.　[2] तै.आन २-९　[3] तै. आन २-८.　[4] तै. आन. २-८.

किं च [1]"सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति" इति पूर्ववाक्ये जीवात्मनो ब्रह्मोपासनेन ब्रह्मप्राप्त्यभिधानेन प्राप्तुर्जीवस्य प्राप्यस्य ब्रह्मणश्च प्राप्तृप्राप्यभावेन भेदो निर्दिष्टः, जीवः प्राप्ता ब्रह्म प्राप्यमिति। न च बद्धावस्थो जीवः प्राप्ता, मुक्तावस्थः स एव प्राप्य इत्येकस्य जीवस्यैवावस्थाभेदेन प्राप्तृप्राप्यभावोपपत्त्या, न तावन्मात्रोक्त्या जीवब्रह्मणोर्भेदसिद्धिरिति वाच्यम्। प्राप्यस्य ब्रह्मणो निरुपाधिकविपश्चित्त्वोक्त्या जीवस्यावस्थाभेदेन प्राप्यत्वोक्तेरयोगात्। न हि जीवस्य मुक्तावस्थायामपि निरुपाधिकविपश्चित्त्वं संभवति। अत्राभिधीयमानं विपश्चित्त्वं हि [1]"तस्माद्वा एतस्मादात्मन आकाशस्संभूतः" इत्यादिना वक्ष्यमाणजगत्सृष्ट्युपयोगिसर्वज्ञत्वरूपम्। यथा मुण्डकोपनिषदि [2]"यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयं तपः। तस्मादेतत् ब्रह्म नामरूपमन्नं च जायते" इति ब्रह्मणो जगत्सृष्ट्युपयुक्तसर्वज्ञत्वमभिधाय जगत्स्रष्टृत्वमभिधीयते; तद्वदिहापि वक्ष्यमाणजगत्सृष्ट्युपयोगिसर्वज्ञत्वमभिधाय, तस्य जगत्स्रष्टृत्वमभिधीयत इति प्रतीतेः। ततश्चात्र विपश्चिच्छब्दोक्तस्य सर्वज्ञत्वस्योपाध्यनुक्त्या निरुपाधिकत्वलाभेन निरुपाधिकसार्वज्ञ्यवत्त्वं मुक्तावस्थस्यापि जीवस्य नोपपद्यत इति प्राप्यतयोक्तं ब्रह्म बद्धमुक्तोभयावस्थजीवादन्यदेवेति निश्चीयते। ततश्च निरुपाधिकसर्वज्ञत्ववतोऽस्यैव ब्रह्मणः [3]"तस्माद्वा एतस्मादि"त्युत्तरवाक्ये आत्मत्वमुपदिश्य स्थूलारुन्धतीन्यायेन उपदिदिक्षित आत्मा [4]"अन्योऽन्तर आत्माऽऽनन्दमयः" इत्युपसंहियत इति प्रतीयते। ततश्चास्यानन्दमयात्मन पूर्वोक्तमन्त्रवर्णे जीवाद्भिन्नत्वोक्तेरानन्दमय आत्मा जीवात्मेति निश्चीयते॥

---

[1] तै. आन. २-१ [2] मु. १-९. [3] तै. आन २-५.
[4] तै. आन. २-५.

किं च [1] " तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः " इति प्रकृतवाक्य एव विज्ञानमयशब्दोक्ताज्जीवादानन्दमयात्मनोऽन्यत्वं साक्षादेवोक्तम् । न चात्र विज्ञानमयशब्देन स्वार्थकमयडन्तेन बुद्धिरुच्यते, न जीव इति वाच्यं; विज्ञानमयविषये अनन्तरश्लोके [2] " विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च " इत्यत्र विज्ञानशब्दनिर्दिष्टस्य विज्ञानमयस्य वैदिकलौकिकक्रियाकर्तृत्वोक्त्यसंगतिप्रसंगात् । न हि बुद्धेः कर्मसु कर्तृत्वमुपपद्यते । विज्ञानमयस्य जीवात्मनो [3] "यो विज्ञाने तिष्ठन्" इत्यन्तर्यामिब्राह्मण इवात्रापि विज्ञानशब्देन निर्देशस्य वैदिकलौकिकक्रियाकर्तृत्वोक्तेश्चोपपत्तेः । [3] " यो विज्ञाने तिष्ठन् " इत्यत्र विज्ञानशब्दस्थाने माध्यन्दिनशाखायां [4] "य आत्मनि तिष्ठन्" इत्यात्मशब्दपाठात् विज्ञान शब्दार्थ आत्मेति निश्चीयते । अतः पूर्ववाक्यस्थविज्ञानमयशब्दोक्तो जीव एव । ततश्चानन्दमयस्यात्मनो जीवाद्भेदव्यपदेशः सिद्धः ॥

एवं [5] " तस्यैष एव शारीर आत्मा यः पूर्वस्य " इत्यानन्दमयात्मविषयवाक्ये जीवात्मन आनन्दमयात्मनश्च शरीरात्मभावव्यपदेशादपि तयोर्भेदः सिद्धः । य आनन्दमय पूर्वस्यान्नमयादेश्शरीरप्रतिसंबन्धी आत्मा एष–आनन्दमय एव, तस्य विज्ञानमयशब्दोक्तजीवात्मनः, शारीर आत्मा– शरीरप्रतिसंबन्धी आत्मा इति हि तदर्थः । अनेन विज्ञानमयस्य जीवात्मनः शरीरत्वमानन्दमयस्यात्मनस्तं प्रत्यात्मत्वं च [3] " यो विज्ञाने तिष्ठन्, यस्य विज्ञानं शरीरम् " इत्यन्तर्यामिब्राह्मणोक्तं प्रत्यभिज्ञायते । अयमेव [6] " यः पृथिव्यां तिष्ठन् ," "यः प्राणे तिष्ठन्, " "यो मनसि तिष्ठन्, "

[1] तै. आन. २-५ [2] तै. आन २-५. [3] बृ. ५-७-२२. काण्वपाठः
[4] बृ. ५-७-२२ माध्यन्दिनपाठः [5] तै. आन. २-५. [6] बृ. ५-७-३.

किं च [1] "सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति" इति पूर्ववाक्ये जीवात्मनो ब्रह्मोपासनेन ब्रह्मप्राप्त्यभिधानेन प्राप्तुर्जीवस्य प्राप्यस्य ब्रह्मणश्च प्राप्तृप्राप्यभावेन भेदो निर्दिष्टः, जीवः प्राप्ता ब्रह्म प्राप्यमिति। न च बद्धावस्थो जीवः प्राप्ता, मुक्तावस्थ स एव प्राप्य इत्येकस्य जीवस्यैवावस्थाभेदेन प्राप्तृप्राप्यभावोपपत्त्या, न तावन्मात्रोक्त्या जीवब्रह्मणोर्भेदसिद्धिरिति वाच्यम्। प्राप्यस्य ब्रह्मणो निरुपाधिकविपश्चित्त्वोक्त्या जीवस्यावस्थाभेदेन प्राप्यत्वोक्तेरयोगात्। न हि जीवस्य मुक्तावस्थायामपि निरुपाधिकविपश्चित्त्वं संभवति। अत्राभिधीयमानं विपश्चित्त्वं हि [1] "तस्माद्वा एतस्मादात्मन आकाशस्संभूतः" इत्यादिना वक्ष्यमाणजगत्सृष्ट्युपयोगिसर्वज्ञत्वरूपम्। यथा मुण्डकोपनिषदि [2] "यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयं तप। तस्मादेतत् ब्रह्म नामरूपमन्नं च जायते" इति ब्रह्मणो जगत्सृष्ट्युपयुक्तसर्वज्ञत्वमभिधाय जगत्स्रष्टृत्वमभिधीयते; तद्वदिहापि वक्ष्यमाणजगत्सृष्ट्युपयोगिसर्वज्ञत्वमभिधाय, तस्य जगत्स्रष्टृत्वमभिधीयत इति प्रतीतेः। ततश्चात्र विपश्चिच्छब्दोक्तस्य सर्वज्ञत्वस्योपाध्यनुक्त्या निरुपाधिकत्वलाभेन निरुपाधिकसार्वज्ञ्यवत्त्वं मुक्तावस्थस्यापि जीवस्य नोपपद्यत इति प्राप्यतयोक्तं ब्रह्म बद्धमुक्तोभयावस्थजीवादन्यदेवेति निश्चीयते। ततश्च निरुपाधिकसर्वज्ञत्ववतोऽस्यैव ब्रह्मणः [3]"तस्माद्वा एतस्मादि"त्युत्तरवाक्ये आत्मत्वमुपदिश्य स्थूलारुन्धतीन्यायेन उपदिदिक्षित आत्मा [4]"अन्योन्तर आत्माऽऽनन्दमय" इत्युपसंह्रियत इति प्रतीयते। ततश्चास्यानन्दमयात्मनः पूर्वोक्तमन्त्रवर्णे जीवाद्भिन्नत्वोक्तेर्नायमानन्दमय आत्मा जीवात्मेति निश्चीयते॥

---

[1] तै आन. २-१ [2] मु. १-९ [3] तै आन. २-५. [4] तै. आन २-५

किं च [1] "तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः" इति प्रकृतवाक्य एव विज्ञानमयशब्दोक्ताज्जीवादानन्दमयात्मनोऽन्यत्वं साक्षादेवोक्तम् । न चात्र विज्ञानमयशब्देन स्वार्थकमयडन्तेन बुद्धिरुच्यते, न जीव इति वाच्यं; विज्ञानमयविषये अनन्तरश्लोके [2] "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इत्यत्र विज्ञानशब्दनिर्दिष्टस्य विज्ञानमयस्य वैदिकलौकिकक्रियाकर्तृत्वोक्त्यसंगतिप्रसंगात् । न हि बुद्धेः कर्मसु कर्तृत्वमुपपद्यते । विज्ञानमयस्य जीवात्मनो [3] "यो विज्ञाने तिष्ठन्" इत्यन्तर्यामिब्राह्मण इवात्रापि विज्ञानशब्देन निर्देशस्य वैदिकलौकिकक्रियाकर्तृत्वोक्तेश्चोपपत्तेः । [3] "यो विज्ञाने तिष्ठन्" इत्यत्र विज्ञानशब्दस्थाने माध्यन्दिनशाखायां [4] "य आत्मनि तिष्ठन्" इत्यात्मशब्दपाठात् विज्ञान शब्दार्थ आत्मेति निश्चीयते । अतः पूर्ववाक्यस्थविज्ञानमयशब्दोक्तो जीव एव । ततश्चात्रानन्दमयस्यात्मनो जीवाद्भेदव्यपदेशः सिद्धः ॥

एवं [5] "तस्यैष एव शारीर आत्मा यः पूर्वस्य" इत्यानन्दमयात्मविषयवाक्ये जीवात्मन आनन्दमयात्मनश्च शरीरात्मभावव्यपदेशादपि तयोर्भेदः सिद्धः । य आनन्दमयः पूर्वस्यान्नमयादेश्शरीरप्रतिसंबन्धी आत्मा एष—आनन्दमय एव, तस्य विज्ञानमयशब्दोक्तजीवात्मनः, शारीर आत्मा—शरीरप्रतिसंबन्धी आत्मा इति हि तदर्थः । अनेन विज्ञानमयस्य जीवात्मनः शरीरत्वमानन्दमयस्यात्मनस्तं प्रत्यात्मत्वं च [3] "यो विज्ञाने तिष्ठन्, यस्य विज्ञानं शरीरम्" इत्यन्तर्यामिब्राह्मणोक्तं प्रत्यभिज्ञायते । अयमेव [6] "यः पृथिव्यां तिष्ठन्," "य प्राणे तिष्ठन्," "यो मनसि तिष्ठन्,"

---

[1] तै. आन. २-५. [2] तै. आन. २-५. [3] बृ. ५-७-२२. काण्वपाठः [4] बृ. ... माध्यन्दिन ... [5] तै. आन. ... [6] बृ. ...

किं च [1]" सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति " इति पूर्ववाक्ये जीवात्मनो ब्रह्मोपासनेन ब्रह्मप्राप्त्यभिधानेन प्राप्तुर्जीवस्य प्राप्यस्य ब्रह्मणश्च प्राप्तृप्राप्यभावेन भेदो निर्दिष्टः, जीवः प्राप्ता ब्रह्म प्राप्यमिति। न च बद्धावस्थो जीवः प्राप्ता, मुक्तावस्थः स एव प्राप्य इत्येकस्य जीवस्यैवावस्थाभेदेन प्राप्तृप्राप्यभावोपपत्त्या, न तावन्मात्रोक्त्या जीवब्रह्मणोर्भेदसिद्धिरिति वाच्यम्। प्राप्यस्य ब्रह्मणो निरुपाधिकविपश्चित्त्वोक्त्या जीवस्यावस्थाभेदेन प्राप्यत्वोक्तेरयोगात्। न हि जीवस्य मुक्तावस्थायामपि निरुपाधिकविपश्चित्त्वं संभवति। अत्राभिधीयमानं विपश्चित्त्वं हि [1]" तस्माद्वा एतस्मादात्मन आकाशस्संभूतः" इत्यादिना वक्ष्यमाणजगत्सृष्ट्युपयोगिसर्वज्ञत्वरूपम्। यथा मुण्डकोपनिषदि [2]" यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयं तपः। तस्मादेतत् ब्रह्म नामरूपमन्नं च जायते" इति ब्रह्मणो जगत्सृष्ट्युपयुक्तसर्वज्ञत्वमभिधाय जगत्स्रष्टृत्वमभिधीयते। तद्वदिहापि वक्ष्यमाणजगत्सृष्ट्युपयोगिसर्वज्ञत्वमभिधाय, तस्य जगत्स्रष्टृत्वमभिधीयत इति प्रतीतेः। ततश्चात्र विपश्चिच्छब्दोक्तस्य सर्वज्ञत्वस्योपाध्यनुक्त्या निरुपाधिकत्वलाभेन निरुपाधिकसार्वज्ञ्यवत्त्वं मुक्तावस्थस्यापि जीवस्य नोपपद्यत इति प्राप्यतयोक्तं ब्रह्म बद्धमुक्तोभयावस्थजीवादन्यदेवेति निश्चीयते। ततश्च निरुपाधिकसर्वज्ञत्ववतोऽस्यैव ब्रह्मणः [3]"तस्माद्वा एतस्मादि"त्युत्तरवाक्ये आत्मत्वमुपदिश्य स्थूलारुन्धतीन्यायेन उपदिदिक्षित आत्मा [4]" अन्योन्तर आत्माऽऽनन्दमयः" इत्युपसंह्रियत इति प्रतीयते। तनश्चास्यानन्दमयात्मनः पूर्वोक्तमन्त्रवर्णे जीवाद्भिन्नत्वोक्तेर्नायमानन्दमय आत्मा जीवात्मेति निश्चीयते॥

---

[1] तै आन. २-१ [2] मु. १ १ [3] तै आन. २-५
[4] तै आन. २-५

किं च [1] "तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः" इति प्रकृतवाक्य एव विज्ञानमयशब्दोक्ताज्जीवादानन्दमयात्मनोऽन्यत्वं साक्षादेवोक्तम् । न चात्र विज्ञानमयशब्देन स्वार्थकमयडन्तेन बुद्धिरुच्यते, न जीव इति वाच्यं; विज्ञानमयविषये अनन्तरश्लोके [2] "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इत्यत्र विज्ञानशब्दनिर्दिष्टस्य विज्ञानमयस्य वैदिकलौकिकक्रियाकर्तृत्वोक्त्यसंगतिप्रसंगात् । न हि बुद्धेः कर्मसु कर्तृत्वमुपपद्यते । विज्ञानमयस्य जीवात्मनो [3] "यो विज्ञाने तिष्ठन्" इत्यन्तर्यामिब्राह्मण इवात्रापि विज्ञानशब्देन निर्देशस्य वैदिकलौकिकक्रियाकर्तृत्वोक्तेश्चोपपत्तेः । [3] "यो विज्ञाने तिष्ठन्" इत्यत्र विज्ञानशब्दस्थाने माध्यन्दिनशाखायां [4] "य आत्मनि तिष्ठन्" इत्यात्मशब्दपाठात् विज्ञान शब्दार्थ आत्मेति निश्चीयते । अतः पूर्ववाक्यस्थविज्ञानमयशब्दोक्तो जीव एव । ततश्चाऽऽनन्दमयस्यात्मनो जीवाद्भेदव्यपदेशः सिद्धः ॥

एवं [5] "तस्यैष एव शारीर आत्मा यः पूर्वस्य" इत्यानन्दमयात्मविषयवाक्ये जीवात्मन आनन्दमयात्मनश्च शरीरात्मभावव्यपदेशादपि तयोर्भेदः सिद्धः । य आनन्दमयः पूर्वस्यात्मनमयादिशरीरप्रतिसंबन्धी आत्मा एष –आनन्दमय एव, तस्य विज्ञानमयशब्दोक्तजीवात्मनः, शारीर आत्मा–शरीरप्रतिसन्धी आत्मा इति हि तदर्थ । अनेन विज्ञानमयस्य जीवात्मनः शरीरत्वमानन्दमयस्यात्मनस्तं प्रत्यात्मत्वं च [3] "यो विज्ञाने तिष्ठन्, यस्य विज्ञानं शरीरम्" इत्यन्तर्यामिब्राह्मणोक्तं प्रत्यभिज्ञायते । अयमेव [6] "यः पृथिव्यां तिष्ठन्," "यः प्राणे तिष्ठन्," "यो मनसि तिष्ठन्,"

---

[1] तै. आन. २-५ [2] तै आन. २-५ [3] बृ. ५-७-२२ काण्वपाठ. [4] बृ. ५-७-२२ माध्यन्दिनपाठ [5] तै. आन. २-५. [6] बृ. ५-७-३.

इत्यन्तर्यामिब्राह्मणोक्तः पृथिवीप्राणमनसामात्मनश्च शरीरात्मभावः, तत्प्रत्यभिज्ञापनायान्नमयादिषु "तस्यैष एव शारीर आत्मा" इति व्यपदिश्यते । अन्तर्यामिब्राह्मणोक्तशरीरात्मभावप्रत्यभिज्ञापनं च प्रकृतस्यानन्दमयस्यात्मनः श्रीनिवासापरनामधेयनारायणत्वज्ञापनार्थम् । इत्थं चानन्दमयस्यात्मनो जीवाद्भेदस्साक्षाद्भेदनिर्देशेन तयोः शरीरात्मभावोक्त्या च द्वेधोपदिष्टो भवति । इदमुभयमपि [1] "भेदव्यपदेशाच्च" इति प्रकृताधिकरणसूत्रे विवक्षितम् । 'भेदस्य विविधोपदेशः भेदव्यपदेशः' इति वैविध्योपदेशार्थकेन व्यपदेशशब्देनोभयोस्संग्रहात् ॥

अपि च, अस्यानन्दमयस्यात्मनः [2]"सोऽकामयत बहु स्यां प्रजायेयेति" इत्याद्युत्तरवाक्ये सकल्पमात्रेण जगत्सृष्टिरुच्यते । तच्चानन्दमयस्य जीवात्मत्वे न घटते । जीवात्मनस्तत्तद्वस्तुसृष्टौ शरीरसंबन्धापेक्षादर्शनात् ; अत्र च शरीरनैरपेक्ष्येण जगत्सृष्ट्युक्तेः । यद्यपि मुक्तात्मनः [3]"सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ते" इत्यादिश्रुतिषु सङ्कल्पमात्रेण पित्रादिसृष्टिः श्रूयते, तथापि [4]"अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति परमात्मोपसंपत्त्याऽऽविर्भूतसत्यसङ्कल्पत्वादिस्वरूपस्य मुक्तस्य सङ्कल्पमात्रात्सृष्टिस्तत्रोच्यते । इह तु सत्यसङ्कल्पत्वतिरोभावाविर्भावयोरश्रवणादतिरोहितसत्यसङ्कल्पत्वादिमत एव सङ्कल्पमात्रेण सृष्टिप्रतीत्या नायमानन्दमय आत्मा मुक्तात्मेति निश्चीयते ॥

अपि च प्रकृतानन्दमयविषये [5]"रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्युत्तरवाक्ये जीवात्मन आनन्दमयात्मलाभात् आनन्दलाभः श्रूयते । ततश्च यल्लाभाधीनानन्दलाभवान् यः, तयोर्भेदस्यावर्जनीयतया आनन्दमयस्यात्मनो जीवाद्भेदः स्वरससिद्धो दुरपह्नवः ॥

[1] शा. सू. १-१-१७ [2] तै. आन. ७-६. [3] छा. ८-२-१. [4] छा. ८-१२-२. [5] तै. आन. ७-१ ॥

तत्रैवं [1]"अन्योऽन्तर आत्माऽऽनन्दमय" इत्यत्र मयड्डुक्तानन्दप्राचुर्येण, [2]"सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिपूर्वपठितमन्त्रवर्णे प्राप्यप्राप्तृभावोक्त्या, 'अन्य' इति 'शारीर आत्मे'ति च भेदभेदकधर्मयोरुक्त्या, सङ्कल्पमात्रादेव जगत्सृष्ट्युक्त्या, जीवात्मनामानन्दयितृत्वोक्त्या, जीवात्मन आनन्दमयात्मलाभेन आनन्दलाभोक्त्या च, प्रकृतानन्दमय आत्मा जीवात्मनो अन्य एवेति सिद्धम् ॥

इत्यानन्दमयाधिकरणम्–६ ॥

---

॥ अथान्तराधिकरणम् ॥ ७ ॥

आनन्दमयस्य प्रकारान्तरेण जीवत्वशंकायां, तत्परिहाराय प्रवृत्तमिदमधिकरणम् ।

## ॥ अन्तस्तद्धर्मोपदेशात् ॥ १-१-२१ ॥

भेदव्यपदेशाच्चान्यः ॥ १-१-२२ ॥

अत्र [3]"भेदव्यपदेशाच्चान्य" इत्युत्तरसूत्रात् 'अन्य' इति पदमाकृष्यते । ततश्च अन्तः–आदित्यमण्डलान्तर्वर्ती पुरुषः, अन्यः–जीवादन्यः, तद्धर्मोपदेशात्–तस्य परमात्मनो ये धर्मास्तेषामस्मिन्नुपदिश्यमानत्वादिति सूत्रार्थः ॥

आदित्यमण्डलान्तर्वर्तिनमुपदिश्य पुण्डरीकाक्षम् ।
विद्या व्यनक्ति तं यत्तद्ब्रह्म श्रीनिवासनाम भजे ॥ ८ ॥

अर्थः । विद्या–अन्तरादित्यविद्या आदित्यमण्डलान्तस्स्थं पुरुषं पुण्डरीकाक्षमुपदिश्य, तस्य पुण्डरीकाक्षत्वमुपदिश्येत्यर्थः । तं–आदित्यमण्डलान्तर्वर्तिपुरुषं, यत्, व्यनक्ति श्रीनिवासाख्यं परं ब्रह्मेति ज्ञापयति, तत् श्रीनिवासाख्यं ब्रह्म भज इति ॥

---

[1] तै.आन. २-५. [2] तै.आन २-१. [3] ब्र.सू. १-१-२२.

भावः । अन्तरादित्यविद्याप्रकरणे [1]"अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते, हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः, तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी, तस्योदिति नाम, स एष सर्वेभ्यः पाप्मभ्य उदितः । उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद" इति श्रूयते । अत्र आदित्यमण्डलान्तर्वर्तिपुरुषस्य [1]"यथा कप्यासं पुण्डरीकमेवमक्षिणी" इत्यनेन पुण्डरीकसदृशाक्षिमत्त्वस्यापहतपाप्मत्वपर्यवसितसर्वपाप्मोदितत्वस्य, सर्वपापविनिर्मुक्तत्वरूपमोक्षपुरुषार्थप्राप्त्युपायोपासनविषयतायाश्च प्रतिपादनात्, तत्रापहतपाप्मत्वलिङ्गेन, [2]"एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यपहतपाप्मत्वेन श्रुतस्य नारायणस्य प्रत्यभिज्ञापनात्, मोक्षोपायोपासनविषयत्वेन [3]"तमेवं विद्वानमृत इह भवति" इति पुरुषसूक्तोक्तमहापुरुषप्रत्यभिज्ञापनात्, पुण्डरीकाक्षत्वस्य नारायण एव सुप्रसिद्धत्वाच्च, उक्तधर्मवत्तया प्रतिपादित आदित्यमण्डलान्तर्वर्ती पुरुषः श्रीनिवास एवेति निर्धार्यते ॥

पूर्वपक्षः ।

आनन्दमयाधिकरणे [4]"तस्यैष एव शारीर आत्मा" इत्यानन्दमयात्मनः शरीरसम्बन्धश्रवणात् आनन्दमयो जीव एव भवितुमर्हति इति पूर्वपक्षे प्राप्ते, निरुपाधिकानन्दवत्त्वादिभिर्हेतुभिः आनन्दमयस्य जीवातिरिक्तत्वं साधितम् । तच्चानुपपन्नम् । तत्र तस्याऽऽनन्दमयस्य [5]"स यश्चायं पुरुषे यश्चासावादित्ये, स एकः" इत्यादित्याख्यदेवताविशेषैक्यश्रवणात्, आदित्याख्यदेवताविशेषस्यान्तरादित्यविद्यायां केशश्मश्रुनखादिविशेषविशिष्टहिरण्मयशरीरवत्त्वाभिधानात्, तस्य शरीरस्थ केवलोपचितपुण्यविशेषमात्रारब्धतायाः तत्रैव सर्वपापराहित्यश्रवणसिद्धत्वात्,

[1] छा १-६-६, ७ [2] सुबाल ७ [3] तै आर ३ १२ [4] तै. आन ५
[5] तै द १०-४.

तथाविधशरीरसंबन्धस्यैवानन्दवल्ल्यां शारीरशब्देन ग्रहणौचित्यात्, तथाविधशरीरवत्तायाश्चाकर्मवश्यत्वेनाभिमते ब्रह्मणि असंभवात, आदित्याख्यः कश्चिज्जीव एवोपचितपुण्यविशेषवशादैश्वर्यविशेषं प्राप्तो जगत्कारणत्वेनानन्दवल्ल्यां प्रतिपाद्यत इति ॥

## सिद्धान्तः ।

नात्र आदित्यमण्डलान्तर्वर्तिपुरुषस्योपचितपुण्यविशेषनिबन्धनः शारीरविशेषसंबन्ध प्रतिपाद्यते। तत्रैव [1]"स एष सर्वेभ्य पाप्मभ्य उदितः" इत्यनेन दहरविद्याप्रकरणे [2]"न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते । अपहतपाप्मा ह्येष ब्रह्मलोक" इत्यत्रोक्तार्थस्य प्रत्यभिज्ञापनेन तस्य सुकृतदुष्कृतरूपोभयविधकर्मात्यन्ताभावसिद्धेः । अतोऽत्र प्रतिपिपादयिषितं शरीरं नोपचितसुकृतनिमित्तम् । अपि तु [3]"आदित्यवर्णं तमसः परस्तात्" इत्यादिश्रुतिप्रसिद्धं स्वेच्छामात्रपरिगृहीतमप्राकृतं शरीरम् ॥

किञ्चास्याऽऽदित्यमण्डलान्तर्वर्तिपुरुषस्य अन्तर्यामिब्राह्मणे [4]"य आदित्ये तिष्ठन् यस्यादित्य शरीरं य आदित्यमन्तरो यमयति" इति "यस्सर्वेषु देवेषु तिष्ठन्" इति चादित्याख्यदेवताविशेषस्य चतुर्मुखप्रभृतीनां सर्वेषां देवानां च नियन्तृतया तेभ्यो भेदप्रतिपादनाच्च नायमादित्यमण्डलान्तर्वर्ती पुरुष प्रसिद्धादित्य, चतुर्मुखो वा, रुद्रो वा, अन्यो वा कश्चिदुपचितपुण्यविशेषेणैश्वर्यविशेषं प्राप्तो जीव इति ॥

इत्यन्तरधिकरणम् ॥७॥

---

## अथ आकाशाधिकरणम् ॥८ ॥

पूर्वाधिकरणेषु तत्तल्लिङ्गविशेषेण जगत्कारणं वस्तु चेतनाचेतनविलक्षणं निर्णीतम् । तदसङ्गतमित्याक्षेपपरिहाराय प्रवृत्तमिदमधिकरणम् ।

---

[1] छा. १-६-७ [2] छा. ८-१-२ [3] तै. आर. ३-१२. [4] बृ.५-७-९.

## आकाशस्तल्लिङ्गात् ॥ १-१-२३ ॥

अत्र पूर्वसूत्रात् 'अन्य' इत्यनुवर्तते । तनश्च [1] "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इत्यत्र आकाशपदवाच्यो भूताकाशान्य । तल्लिङ्गात् —तस्य भूताकाशान्यस्य परमात्मनोऽसाधारणलिङ्ग श्रवणादिति सूत्रार्थ ॥

आकाशस्य वदन्ती यदेकयोग्यान् परायणत्वादीन् ।
त गमयति श्रुतिर्यत्तद्ब्रह्म श्रीनिवासनाम भजे ॥ ९ ॥

अर्थ । [1]"सर्वाणि ह वा" इत्यादिश्रुति. आकाशस्य तत्रत्याकाशपदवाच्यस्य वस्तुन , यदेकयोग्यान् —यस्य श्रीनिवासनाम्नो ब्रह्मण एकस्य योग्यान् —सभवत , परायणत्वादीन्—परायणत्वप्रभृतीन् धर्मान्, **वदन्ती** सती, त—आकाशपदवाच्यम् ,यत्—श्रीनिवासापरनामधेय ब्रह्मेति **गमयति**—ज्ञापयति, तद्ब्रह्मेति पूर्ववत् ॥

**भाव** । छान्दोग्ये [1] "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाश प्रत्यस्त यन्ति आकाशो ह्येवैभ्यो ज्यायान् आकाश परायण" इत्यनया श्रुत्या तत्रत्याकाशपदवाच्यस्य सर्वभूतोत्पत्तिलयकारणत्व सर्वस्माज्ज्यायस्त्व, परायणत्वमित्यादयो धर्मा अभिधीयन्ते । तत्र सर्वस्माज्ज्यायस्त्व गुणे स्वरूपेण चोत्कृष्टत्वम् । परायणत्व चेतनाना परमप्राप्यत्वम् । एते धर्मा परमात्मन एव सभवन्ति । न भूताकाशस्य । तस्य सर्वभूतशब्दवाच्याचित्सहचेतनकारणत्वासभवात्, गुणै स्वरूपेण च सर्वभूतज्यायस्त्वासभवात्, अचेतनस्य हेयस्य तस्य चेतनाना परमप्राप्यत्वस्य सुतराम् असभवाच्च ॥

परमात्मनस्तु सर्व एवैते धर्मास्सभवन्ति। नारायणोपनिषदि [2]"नारायणात् ब्रह्मा जायते" इत्यादिना नारायणस्य सर्वभूतोत्पत्तिलयकारणत्वप्रतिपादनात्

[1] छा १ ९ १ [2] नारा उ १

[1] "विश्वतः परमं नित्यं विश्वं नारायणं हरिम्" इत्यादिषु 'विश्वतः परमं' इत्यनेन सर्वस्मात् सर्वप्रकारेण ज्यायस्त्वप्रतिपादनात् [1] "नारायणं महाज्ञेयं विश्वात्मानं परायणं" इत्यादिषु 'परायणं' इत्यनेन तस्यैव चेतनानां परमप्राप्यत्वाभिधानाच्च । अतोऽऽकाशशब्दवाच्यस्योक्तधर्मान् प्रतिपादयन्त्या श्रुत्या आकाशशब्दवाच्यं वस्तु श्रीनिवासापरनामधेयं नारायणाख्यं परं ब्रह्मेत्यवगम्यत इति ॥

## पूर्वपक्षः ।

ईक्षणादिलिङ्गैः जगत्कारणस्य ब्रह्मणोऽचेतनातिरिक्तत्वसाधनं अयुक्तम् । [2] "यतो वा इमानि भूतानि जायन्ते" इत्यादिना ब्रह्मलक्षणेऽभिहिते, कुत इमानि भूतानि जायन्त इति जिज्ञासायां, कुतश्चिल्लिङ्गाद्विशेषनिर्णयात्प्रागेवाविलंबितप्रतीतिजनकत्वेन प्रबलया आकाशश्रुत्या भूताकाशरूपविशेषोपस्थापनेन, लिङ्गान्निर्णेतव्याभावात् । एवं भूताकाशस्य कारणत्वे श्रुत्या निश्चिते, ईक्षणादीन्यमुख्यतया नेयानीति ॥

## सिद्धान्तः ।

'गङ्गायां घोष' इत्यादौ गङ्गापदमुख्यार्थे समभिव्याहृतपदान्तरोपस्थाप्यघोषाधिकरणत्वस्य प्रत्यक्षप्रमाणबाधितत्वेनान्वयायोग्यतया लक्षणाया आश्रयणीयतयाऽयोग्यार्थश्रुत्यपेक्षया अबाधितप्रमाणावगतलिङ्गस्य प्रबलताया वक्तव्यत्वेन, प्रकृते आकाशपदमुख्यार्थे परायणत्वादीनामन्वयबाधादाकाशश्रुतिप्राबल्यमकिंचित्करम् । अत उपदर्शितयोग्यार्थश्रुतिमूलकलिङ्गानामन्वयोपपत्तये, आकाशपदं 'आ–समन्तात्, काशते–प्रकाशत' इति व्युत्पत्त्या नारायणाख्यब्रह्मपरं वाच्यम् ॥

[1] तै. ना ११. [2] तै भृ १

किञ्च [1] "आकाशो ह वै" इत्यत्र 'ह वै' शब्देनानुवादतासूचनात्, अस्यापि पुरोवादसापेक्षतया नास्य वाक्यस्य [2] "यतो वा इमानि भूतानि जायन्त" इत्यादिवाक्यजनितविशेषजिज्ञासानिवर्तकत्वम् । अपि तु [3] "नारायणाद्ब्रह्मा जायत" इत्यादिश्रुतेरेव जिज्ञासाविषयविशेषसमर्पकत्वेन जिज्ञासानिवर्तकत्वम् । इत्थञ्च श्रीनिवासापरनामधेयनारायणाख्यदेवविशेषस्य कारणत्वे निश्चिते, तद्विरोधेनाऽऽकाशश्रुतिर्न मुख्यार्थं कारणत्वेन बोधयितुं क्षमत इति ॥

इत्याकाशाधिकरणम् ॥ ८ ॥

---

अथ प्राणाधिकरणम् ॥ ९ ॥

पूर्वाधिकरणे आकाशस्य कारणत्वं निराकृतम् । इदानीं वायोः कारणत्वमाशङ्क्य परिह्रियते ।

## अत एव प्राणः ॥ १-१-२४ ॥

अत्रापि 'अन्य' पदमनुवर्तनीयम् । अत एव—प्रसिद्धवन्निर्देशादेव, प्राण'—श्रुतिस्थप्राणशब्दवाच्यः, प्राणवायोरन्य इति सूत्रार्थः ॥

प्राणस्य कारणत्वं श्रुतिर्नृणां प्रसिद्धिनिर्देशात् ।
यदिति व्यनक्ति तमिमं तद्ब्रह्म श्रीनिवासनाम भजे ॥१०॥

अर्थः । प्राणपदवाच्यस्य जगत्कारणत्वं वदन्ती [4] "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति, प्राणमभ्युज्जिहते" इत्येवरूपा श्रुतिः, अस्यार्थस्य श्रुत्यन्तरप्रसिद्धतया निर्देशात् तमिमं कारणीभूतं प्राणम् यत् श्रीनिवासाख्यं परं ब्रह्मेति व्यनक्ति—प्रकाशयति, तद्ब्रह्मेति पूर्ववत् ॥

---

[1] छा ८ १४ १  [2] तै भृ १  [3] नारा उ १  [4] छा १ ११

भावः । छान्दोग्ये [1] "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता" इति श्रूयते । इमानि सर्वाणि भूतानि–प्राणिनः, प्राणमेवाभिसंविशन्ति–अभिमुखीकृत्य लयं प्राप्नुवन्तीत्यर्थः । प्राणमभ्युज्जिहते––प्राणान्निर्गच्छन्तीत्यर्थः । अत्रोक्तार्थस्य 'ह वै' इत्यनेन प्रसिद्धत्वं द्योत्यते । प्रसिद्धिश्च [2] "नारायणाद्ब्रह्मा जायत" इत्यादिपूर्वोदाहृतश्रुतौ । तत्र सर्वभूतानां नारायणादुत्पत्तेः नारायणे लयस्य च प्रतिपादनात् । अत उक्तप्रापकवाक्यानुरोधेन नारायणस्य प्राणपदार्थत्वे निश्चिते, न प्राणपदस्य प्राणवायुबोधकत्वशङ्कावकाशः । प्राणपदस्य नारायणबोधकत्वञ्च, 'प्राणयति–जीवयति' इति व्युत्पत्त्या प्राणयितृत्वरूपगुणयोगेनेति द्रष्टव्यम् ॥

पूर्वपक्षः ।

आकाशश्रुतेरयोग्यार्थत्वेऽपि, सर्वेषां भूतानां प्राणाधीनोत्पत्तिस्थित्यादिमत्त्वदर्शनेन प्राणकारणताबोधकश्रुतेरयोग्यार्थत्वविरहेण, प्राण एव जगत्कारणमिति ॥

सिद्धान्तः ।

[1] "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति" इत्यादिश्रुतेः मुख्यप्राणविषयत्वे, चेतनस्वरूपस्य मुख्यप्राणाधीनस्थितिकत्वाभावेनायोग्यार्थताया दुर्वारत्वात् परमात्मपरैवैषा श्रुतिरिति ॥

इति प्राणाधिकरणम् ॥ ९ ॥

## अथ ज्योतिरधिकरणम् ॥ १० ॥

आकाशाधिकरणे भूताकाशस्य कारणत्वं निराकृतम् । अनन्तरं [3]"आकाशाद्वायुः" इत्यनन्तरोपस्थितवायोः कारणत्वं निराकृतम् । [3] "वायोरग्निः" इति तदनन्तरोपस्थितस्य तेजसः कारणत्वमाशङ्क्य निराकरोति ।

[1] छा. १-११-५. [2] नारा. उ. १. [3] तै. आन. १.

# ज्योतिश्चरणाभिधानात् ॥ १-१-२५ ॥

[छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगमात् तथा हि दर्शनम् ॥ २६ ॥
भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २७ ॥
उपदेशभेदान्नेति चेन्न उभयस्मिन्नप्यविरोधात् ॥ २८ ॥]

छान्दोग्ये गायत्रीविद्याप्रकरणे [1] "अथ यदत. परो दिवो ज्योतिर्दीप्यत" इत्यत्र ज्योतिश्शब्दनिर्दिष्टं वस्तु भौतिकज्योतिषोऽन्यत्, तस्य सर्वभूतादिपादवत्तायास्तत्राभिधानादिति सूत्रार्थ. ॥

निरतिशयदीप्तियुक्तं ज्योतिः पादोऽस्य भूतानि ।
इत्युक्तया यद्गमयति तद्ब्रह्म श्रीनिवासनाम भजे ॥ ११ ॥

सर्वोत्कृष्टदीप्तिमज्ज्योतिश्शब्दनिर्दिष्टं वस्तु (इदं कर्म) **"पादोऽस्य सर्वा भूतानि"** इत्युक्तया **यदिति**—श्रीनिवासाभिधानं ब्रह्मेति प्रकाशयति, श्रुतिरिति शेष , तद्ब्रह्मेति पूर्ववत् ॥

भावः । छान्दोग्ये [1] "अथ यदत परो दिवो ज्योतिर्दीप्यते विश्वत पृष्ठेषु सर्वत पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु इद वाव तद्यदिद अस्मिन्नन्त पुरुषे ज्योति " इत्यत्र निरतिशयदीप्तियुक्ततया प्रतिपादितस्य ज्योतिष [2]"पादोऽस्य सर्वा भूतानि त्रिपादस्यामृत दिवि" इति पूर्ववाक्ये सर्वभूतपादवत्त्व द्युसबन्धस्तत्र पादत्रयवत्त्वमित्ययमर्थ प्रतिपादित । तेन [3] "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृत दिवि" इति पुरुषसूक्तमन्त्रार्थ प्रत्यभिज्ञायते। अत. पुरुषसूक्ते तत्र प्रस्तुत उत्तरत्र [3]"वेदाहमेत पुरुष महान्तम् आदित्यवर्णं तमसस्तु पारे " इति आदित्यवत् निरतिशयदीप्तियुक्ततया प्रतिपादितो लक्ष्मीपति श्रीनिवासापरनामधेय परमात्मैव निरतिशयदीप्तियुक्तमिदं

[1] छा ३-१३-७ [2] छा ३ १२ ६ [3] तै आर. ३-१२

ज्योतिरिति निर्धार्यते । तस्य निरतिशयज्योतिर्मयविग्रहविशिष्टतया ज्योतिश्शब्दवाच्यत्वमुपपद्यत इति ॥

पूर्वपक्षः ।

छान्दोग्ये [1] "अथ यदतः परो दिवो ज्योतिर्दीप्यत" इत्यादिपूर्वोदाहृतवाक्ये निरतिशयदीप्तियुक्ततया प्रतिपादितं ज्योतिः आदित्यादिज्योतिरेव, 'यदतः परो दिवो ज्योति' रिति प्रसिद्धवन्निर्देशात्; आदित्यादिज्योतिष एव तथा प्रसिद्धेः । कौक्षेयज्योतिषैक्योपदेशाच्च तेजस्त्वेनैकजातीयत्वात्तस्मिन्नेवोपपद्यते । तस्य च निरतिशयदीप्तिमत्त्वोक्त्या जगत्कारणत्वं सिद्धम् । मुण्डकोपनिषदि [2] "यद् भूतयोनिं परिपश्यन्ति धीराः" इति भूतयोन्यक्षरं प्रस्तुत्य, तस्य [3] "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति निरतिशयदीप्तिमत्त्वकथनेन निरतिशयदीप्तिमत्त्वस्य जगत्कारणत्वनियतत्वावगमात् । अत आदित्यादिज्योतिरेव जगत्कारणमिति ॥

सिद्धान्तः ।

[1] "अथ यदतः परो दिवो ज्योतिः" इत्यत्र निरतिशयदीप्तिमत्तयोक्तस्य ज्योतिषः [4] "पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" इति पूर्ववाक्ये सर्वभूतपादवत्त्वद्युसंबन्धादिकथनेन [5] "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इति पुरुषसूक्तार्थप्रत्यभिज्ञापनेन पुरुषसूक्तोक्तं नारायणाख्यं ब्रह्मैवेदं ज्योतिः, न प्रसिद्धादित्यादिः ॥

ननु छान्दोग्ये [6] "गायत्री वा इदं सर्वं" इति गायत्रीं प्रस्तुत्य, [7] "तदेतदृचाऽभ्यनूक्तं" इति तद्विषयकतयोक्तस्य [4] "पादोऽस्य सर्वा भूतानि" इत्यादिमन्त्रस्य कथं ब्रह्मविषयकत्वमिति चेत्; उच्यते—

[1] छा. ३-१३-७. [2] मु. १-१-६. [3] मु. २-२-११. [4] छा. ३-१२-६ [5] तै. आर. ३-१२. [6] छा. ३-१२-१. [7] छा. ३-१२-५.

[1]"गायत्री वा इद सर्वं" मित्यत्र गायत्रीशब्देन न गायत्र्याख्य छन्दोऽभिधीयते, तस्य 'इद सर्वं' इत्युक्तसर्वात्मत्वानुपपत्ते , तत्प्रकरणोक्तभूत पृथिवीशरीरहृदयरूपपादचतुष्टयवत्त्वानुपपत्तेश्च। अपि तु गायत्रीसदृश ब्रह्मै वाभिधीयते, भूतादिपादचतुष्टयवतो ब्रह्मण पादचतुष्टयवत्या गायत्र्या सद शत्वात्। तस्य गायत्रीसादृश्येनानुसन्धानाय गायत्रीशब्देनाभिधानम्। यथा सवर्गविद्याया [2]"ते वा एते पञ्चान्ये पञ्चान्ये" इत्युपक्रम्य, [2]"सैषा विराट्" इत्यग्निसूर्यजलचन्द्रवायुवाक्चक्षुश्श्रोत्रमन प्राणरूपेषु दशसु दशत्वसख्या साम्यात् दशाक्षरच्छन्दोवाचि'विराट्' शब्दप्रयोग , तद्वदिहापि पादचतुष्टयव-त्त्वसाम्यात् ब्रह्मणि गायत्रीशब्दप्रयोग । ततश्च [3]"पादोऽस्य सर्वा भूतानि" इत्यय मन्त्रो [1] "गायत्री वा इद सर्वं" मिति पूर्वप्रकृतब्रह्मपर एवेति ॥

नन्वस्तु [3] "पादोऽस्य सर्वा भूतानि" इत्यय मन्त्र परमात्मपर, तथापि [4] "अथ यदत परो दिवो ज्योति" रित्युक्त ज्योतिर्न परमात्मैवेति निर्णेतु शक्यम्, पूर्वमन्त्रे परमात्मनो द्युसबन्धित्वेनाभिधानात्, इह च [4] "दिव परो ज्योति" रित्यत्र ज्योतिषो दिव परत्वेनाभिधानेन, परमात्मन इह प्रत्यभिज्ञानिरहादिति चेन्मैवम्। 'वृक्षाग्रे श्येनो, वृक्षाग्रात्परत श्येन' इत्येकस्मिन्नेवार्थे उभयथा प्रयोगवत्, इहापि 'दिवि' 'दिव पर' इत्येकस्मि न्नेवार्थे उभयथा प्रयोगे विरोधाभावेन [3]"त्रिपादस्यामृत दिवि'इति पूर्वप्रकृत स्य परमात्मन [4] "अथ यदत परो दिवो ज्योति" रिति द्युसबन्धित्वेन प्रत्यभिज्ञाया अक्षतत्वात्। ज्योतिश्शब्दनिर्दिष्टस्य परमात्मन कौक्षेयज्यो तिषैक्योपदेशस्तु फलविशेषाय तदात्मकत्वानुसन्धानार्थमिति ॥

इति ज्योतिरधिकरणम् ॥ १० ॥

---

[1] छा ३ १२ १ [2] छा ४ ३ ८ [3] छा ३ १२ ६ [4] छा ३ १३ ७

अथेन्द्रप्राणाधिकरणम् ॥ ११ ॥

पूर्वाधिकरणे ज्योतिश्शब्दनिर्दिष्टस्याहम्याऽऽदित्यादेः कारणत्वं निराकृतम् । इदानीमग्न्यादित्याद्यधिपतित्वेन प्रसिद्धस्य देवेन्द्रस्य कारणत्वमाशङ्क्य परिहरति ।

## प्राणस्तथानुगमात् ॥ १-१-२९ ॥

[न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ ३० ॥
शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३१ ॥
जीवमुख्यप्राणलिङ्गान्नेति चेन्न उपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३२ ॥]

अत्र 'प्राण' ग्रहणमिन्द्रस्याप्युपलक्षणम् । 'अन्य' इति चानुवर्तते । तथा च प्राणेन्द्रपदनिर्दिष्टः प्रसिद्धेन्द्रादेरन्यः । तथा इन्द्रादेरन्यो यः तत्प्रकारभूतधर्मस्यैवोत्तरवाक्येषु अनुगमात्—अनुवृत्तेरित्यर्थः ॥

इन्द्रप्राणपदोक्तं यदिति व्यक्तीकरोति यद्धर्मैः ।
विद्या प्रतर्दनाङ्का तद्ब्रह्म श्रीनिवासनाम भजे ॥ १२ ॥

इति कौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य श्रीदेशिकाचार्यस्य कृतिषु
शारीरकाधिकरणरत्नमालायां
प्रथमाध्यायस्य प्रथमः पादः ॥

---

प्रतर्दनाङ्का—प्रतर्दनचिह्ना, विद्या—प्रतर्दनविद्या, तत्प्रकरणे इन्द्रप्राणपदाभ्यामुक्तं मुमुक्षुभिर्ध्येयं वस्तु [1] "आनन्दोऽजरोऽमृत" इत्याद्यैर्यदसाधारणैः धर्मैः लिङ्गैः यच्छ्रीनिवासाख्यं ब्रह्मेति व्यक्तीकरोति तद्ब्रह्मेति पूर्ववत् ॥

---

[1] कौ. उ. ३-९.

भाग । कौषीतक्युपनिषदि प्रतर्दनविद्याप्रकरणे 'मनुष्यस्य मोक्षोपायत्वेन यद्धिततम तद् ब्रूहि' इति प्रतर्दनेन पृष्टेनेन्द्रेण [1] "प्राणोऽस्मि प्रज्ञात्मा त मामायुरमृतमित्युपास्स्व" इतीन्द्रस्योपास्यत्वमुक्तम् । अनन्तर तस्मिन्नेव प्रकरणे तमेवाधिकृत्य, [2] "स एष प्रज्ञात्मा आनन्दोऽजरोऽमृत, स न साधुना कर्मणा भूयान्नो एवासाधुना कर्मणा कनीयान्" इत्यभिहितम् । अत्रोत्तरवाक्योक्ताना निरुपाधिकप्राज्ञत्वनिरुपाधिकानन्दवत्त्वाजरत्वामृतत्वादीना, कर्मफलास्पर्शस्य, सर्वभूताधारत्वस्य, एवमादेरुत्तरत्र वक्ष्यमाणधर्मस्य च परमात्मन्येवोपपत्ते, प्रसिद्धेन्द्रादिजीवविशेषे च निरुपाधिकप्राज्ञत्वाद्यनुपपत्ते, उपक्रमोक्तमोक्षोपायोपासनविषयत्वस्य [3] "तमेव विद्वानमृत इह भवति नान्य पन्था अयनाय विद्यते" इति श्रीनिवासापरनामधेयमहापुरुषासाधारणत्वश्रवणात्, उत्तरस्मिन्प्रकरणे श्रुतेन [4] "एष ह्येव साधु कर्म कारयति तम्" इत्यनेन [5] "य आत्मानमन्तरो यमयति" इत्यन्तर्यामिब्राह्मणस्थश्रुत्यर्थप्रत्यभिज्ञानात्, तस्याश्च श्रुतेस्सुबालोपनिषदैकार्थ्येन नारायणविषयत्वाच्च, मुमुक्षुभिरुपास्यतयेन्द्रेणोक्त प्राणेन्द्रपदनिर्दिष्टो न जीवमात्रम्, अपि तु इन्द्रप्राणशरीरक श्रीनिवासाभिधान पर ब्रह्मैवेति निर्धार्यते ॥

## पूर्वपक्ष ।

कौषीतक्युपनिषदि [6] "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रिय धामोपजगाम" इत्युपक्रम्य इन्द्रप्रतर्दनसवादमुपक्षिप्य, 'मनुष्यस्य मे यद्धिततम त्वमेव विचिन्त्य तदुपदिश' इति प्रतर्दनेन प्रार्थित इन्द्र, [6] "मामेव विजानीहि एतदेवाह मनुष्याय हिततम मन्ये यन्मा विजानीयात्" इति स्वोपासन मनुष्यस्य हिततममुपदिश्य, स्वमाहात्म्य बहुकृत्यकरणेऽप्यकृत्यफलासश्लेषरूपमभिधाय, [6] "स यो मा विजानीयात्" इत्यादिना स्वोपासकस्य

[1] कौ उ ३ २ [2] कौ ३ ९ [3] ते आर ३ १२ [4] कौ उ ३ ९
[5] बृ ५ ७-२२ [6] कौ ३ १

अकृत्यफलासंश्लेषं च उक्त्वा, [1]"प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व" इति स्वोपासनप्रकारमुपदिदेशेति श्रूयते। अत्र त्वाष्ट्रहननादिलिङ्गेन वक्तुरिन्द्रत्वं तदुपासनस्य हिततमत्वञ्च प्रतीयते। हिततमञ्च मोक्षोपायभूतं उपासनमेव। अतो मुमुक्षूपास्यत्वमिन्द्रस्य प्रतीयते। तच्च जगत्कारणस्यैव संभवति [2]"कारणं तु ध्येय" इति श्रुतेः। अत इन्द्र एव जगत्कारणम् इति॥

## सिद्धान्तः।

[3]"तमेवं विद्वानमृत इह भवति" इत्यादिषु परमात्मासाधारणतया श्रुतस्य मोक्षोपायोपासनविषयत्वस्य जीवात्मन्यसंभावितस्य 'माम्' इति वक्तरि श्रवणात्, उत्तरत्र [4]"तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणे अर्पिताः; स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः" इत्यत्र 'प्राण' 'प्रज्ञात्म' 'अमृत' शब्दैः [5]"प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व" इति वक्तारं प्रत्यभिज्ञाप्य, तस्य 'भूतमात्रा' शब्दितशब्दादिविषयवागादीन्द्रियरूपाचेतनवर्गाधारभूतप्रज्ञामात्राशब्दितचेतनवर्गाधारत्वस्य परमात्मासाधारणधर्मस्य रथनेम्यरनाभिदृष्टान्तेन प्रतिपादनात्, [4]"स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृत" इत्यनेन सुबालोपनिषत्प्रथमखण्डोक्तस्य [6]"तमात्मानमुपासीत, अजरममृतमभयं" इत्यादेः प्रत्यभिज्ञापनात्, उत्तरत्र [4]"एष एव साधु कर्म कारयति" इत्यादिना अन्तर्यामिब्राह्मणे [5]"य आत्मानमन्तरो यमयति" इत्यत्र नारायणासाधारणतया अवगतस्य साध्वसाधुकर्मकारयितृत्वस्य एतच्छब्दपरामृष्टे प्रकृतवक्तरि श्रवणाच्च [7]"मामुपास्स्व" इति प्रसिद्धतया उक्तः न प्रसिद्धेन्द्रः; अपि तु परमात्मैवेत्यवगम्यते। अतः स्वस्य प्राणस्य च परमात्मशरीरतां शरीरवाचकशब्दानां शरीरिपर्यन्तवाचकता च शास्त्रेण निश्चित्य, यथा वामदेवः [8]"अहं

[1] कौ. ३-२ [2] अथर्वशि. [3] तै. आर ३-१२. [4] कौ. उ. ३-९. [5] बृ. ५-७-२२. [6] सुबाल ५. [7] कौ. ३-२. [8] बृ. ३-४-१०.

मनुरभवं सूर्यश्च'' इत्यादिना स्ववाचकशब्देन परमात्मानं व्यवहृतवान्, तथा इन्द्रोऽपि स्ववाचकशब्देन प्राणवाचकशब्देन च परमात्मानं निर्दिष्टवान् इति निर्धार्यते। अत्र त्वाष्ट्रवधादीना प्रसिद्धेन्द्राख्यजीवलिंगानां शरीरेन्द्रियधारणादिरूपमुख्यप्राणलिङ्गानां च श्रवणात् तेषां साक्षात्परमात्मन्यन्वयासम्भवात् इन्द्रेण स्वान्तर्यामिण परमात्मनः स्वशरीरकतया प्राणशरीरकतया. आनन्दत्वादिगुणविशिष्टस्वरूपेण च श्रेयोपासनमुपदिदिक्षितमिति, समाहात्म्यकथनञ्च स्वानुष्ठीयमानब्रह्मविद्याफलकीर्तनमिति च निर्धार्यत इति ॥

इति इन्द्रप्राणाधिकरणम् ॥ ११ ॥

---

इति कौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य श्रीदेशिकाचार्यस्य कृतिषु
शारीरकाधिकरणरत्नमालाप्रकाशे
प्रथमाध्यायस्य प्रथम पाद ॥

---

## अथ प्रथमाध्यायस्य द्वितीयः पादः ॥

### १२ ॥ सर्वत्र प्रसिद्ध्यधिकरणम् ॥ १ ॥

प्रथमे पादे 'सद्विद्यादिषु अचिद्वस्तु चेतनो वा जगत्कारणत्वेन प्रतिपाद्यते, अतस्तदेव जगत्कारणं, न तदतिरिक्तं किञ्चित् जगत्कारणं' इत्याक्षेपपरिहारेण जगत्कारणं चेतनाचेतनविलक्षणं श्रीनिवासाभिधानं परं ब्रह्मैवेति समर्थितम्। तेन चिदचिद्विलक्षणत्वेन स्वाभिमते ब्रह्मणि जगत्कारणत्वलक्षणस्यासंभवः परिहृत.। इदानीं अनन्तरपादत्रयेण लक्षणस्य चेतनेऽचेतने चातिव्याप्तिः परिह्रियते ॥

तत्र द्वितीयपादे अस्पष्टचेतनाचेतनलिङ्गप्रतिपादकवाक्यविचारेण तयोरतिव्याप्तिः परिह्रियते । तत्र पूर्वस्मिन्निन्द्रप्राणाधिकरणे प्राणशरीरकस्य जगत्कारणत्वमुपास्यत्वं चोक्तम् । तदुभयं शाण्डिल्यविद्यायां जीवात्मन आम्नातमिति स एव जगत्कारणमित्याशङ्कां परिहर्तुं प्रवृत्तमिदमधिकरणम् ॥

## सर्वत्र प्रसिद्धोपदेशात् ॥ १-२-१ ॥

[विवक्षितगुणोपपत्तेश्च ॥ २ ॥
अनुपपत्तेस्तु न शारीरः ॥ ३ ॥
कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥
शब्दविशेषात् ॥ ५ ॥
स्मृतेश्च ॥ ६ ॥
अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥
संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥]

अस्मिन् पादे [1] "ईक्षतिकर्मव्यपदेशात्सः" इति त्रिपादीमध्यमपादमध्यमाधिकरणसूत्रात् 'स' इति पदं साध्यवाचकमाकृष्यते । ततश्च सर्वस्मिन् वस्तुनि तदात्मतयोपदिश्यमानं ब्रह्म, सः—परमपुरुष एव; प्रसिद्धस्य—अन्यत्र प्रसिद्धस्य, उपदेशात्—अनुवादात् इत्यर्थः ॥

सर्वं ब्रह्म यदुक्तं तत्तज्जत्वाद्यनूक्तिसामर्थ्यात् ।
यदिति व्यनक्ति विद्या तद्ब्रह्म श्रीनिवासनाम भजे ॥ १३ ॥

अर्थः । [2] "सर्वं खल्विदं ब्रह्म" इत्यत्र सर्वात्मकं ब्रह्म यदुक्तं, तत् (इदं कर्म), तज्जन्यत्वस्य, तस्मिन् लयस्य, तदधीनस्थितिकत्वस्य चानुवादसामर्थ्यात्, यत् श्रीनिवासाभिधानं ब्रह्मेति शाण्डिल्यविद्या प्रकाशयति, तद्ब्रह्मेति पूर्ववत् ॥

---

[1] ब्रा. सू. १-३-१२. [2] छा. ३-१४-१.

भावः । छान्दोग्ये [1] "सर्वं खल्विदं ब्रह्म तज्जलान्" इत्यादिना शाण्डिल्यविद्या आम्नायते । तत्र 'तज्जलान् इदं सर्वं ब्रह्म खलु' इत्यन्वयः । तत्र 'तज्जलान्' इति 'इदं' इत्यस्य हेतुगर्भ विशेषणम् । तत्र तच्छब्देन ब्रह्म परामृश्यते । तज्जं–तस्माज्जातं, तल्लं–तस्मिन् लीयमानं, तदन्–तदधीनस्थितिकमिति तदर्थः । 'इदं सर्वं ब्रह्म' इति सामानाधिकरण्यनिर्देशेन जगद्ब्रह्मणोः तादात्म्यं प्रतिपाद्यते । ततश्च 'ब्रह्मणो जातत्वात् , ब्रह्मणि लीयमानत्वात् , ब्रह्माधीनस्थितिकत्वाच्च सर्वमिदं चेतनाचेतनात्मकं ब्रह्म खलु' इत्यर्थः पर्यवसितः । अत्र सामानाधिकरण्यनिर्देशसिद्धं तादात्म्यमुपादानोपादेयभावरूपकार्यकारणभावेन शरीरात्मभावेन च द्वेधा विवक्षितम् । तत्र तज्जत्वतल्लत्वहेतुकं तादात्म्यं कार्यकारणभावनिबन्धनम् । तदधीनस्थितिकत्वहेतुकं तादात्म्य शरीरात्मभावनिबन्धनम् । इह च मृदो घटात्मना परिणामवत् ब्रह्मणो निर्विकारस्य न स्वरूपेण जगदात्मना परिणाम । अपि तु 'बालो युवा जात' इत्यादौ जीवात्मनः शरीरद्वारा परिणामवत् चिदचिद्रूपशरीरद्वारा परिणाम । ततश्च ब्रह्मण एव सूक्ष्मचेतनाचेतनशरीरकत्वेन स्थूलचेतनाचेतनशरीरकत्वेन च कार्यकारणभावापन्नत्वात्, जगद्ब्रह्मणो शरीरशरीरिभावापन्नत्वाच्च द्विविधं तादात्म्यं पृथक् पृथक् क्वचिदुपदिश्यते । यथा नारायणोपनिषदि ऋग्वेदशिरसि, [2] "नारायणात् ब्रह्मा जायते, नारायणात् रुद्रो जायते, नारायणात् इन्द्रो जायते" इत्युक्तं ब्रह्मरुद्रेन्द्रादीनां नारायणोपादानकत्वमुपजीव्य, यजुर्वेदशिरसि, [3] "ब्रह्मा च नारायण, शिवश्च नारायण, शक्रश्च नारायण." इति तादात्म्यमुक्तम् । इदं चोभयत्र ब्रह्मादीनां क्रमप्रत्यभिज्ञानात् ज्ञायते ॥

[2] "नारायणात् ब्रह्मा जायते" इत्यादौ नारायणस्य चतुर्मुखादिशरीरद्वारा परिणामो विवक्षित. । [4] "स ब्रह्मा स शिवः सेन्द्र. सोऽक्षरः परम'

[1] छा ३-१४-१ [2] नारा उ (ऋ) [3] नारा उ (यजुस्) [4] तै ना. २.

स्वराट्'' इत्यत्र ब्रह्मादीनां परमात्मनश्च शरीरात्मभावनिबन्धनं तादात्म्यम्; पूर्वत्र [1] "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः'' इति परमात्मनः सर्वत्रात्मतया व्याप्तिमभिधाय तथाभिधानात । एवं पृथक्पृथक् तत्र तत्रोपदिष्टं द्विविधं तादात्म्यं [2] "सर्वं खलु'' इत्यनेन संभूयोपदिश्यते । अत उभयविधतादात्म्यस्यापि साक्षात् परंपरया च शरीरात्मभावमूलकत्वात् 'सर्वमिदं ब्रह्म' इत्यस्य परिदृश्यमानकार्यभूतदेवमनुष्यादिचेतनाचेतनात्मकजगच्छरीरकं ब्रह्मेत्यर्थः ॥

अत्र तज्जत्वादीन् श्रुत्यन्तरसिद्धाननूद्य तद्धेतुकस्य जगद्ब्रह्मणोस्तादात्म्यस्योपदेशात्, अनुवादस्य प्रापकवाक्यसापेक्षत्वात् तानि प्रापकवाक्यानि कानीति जिज्ञासायां, [3] "नारायणाद् ब्रह्मा जायते'' इत्यादीनि कार्यकारणभावप्रतिपादकवाक्यानि, [4] "यः पृथिवीमन्तरे संचरन् यस्य पृथिवी शरीरं'' इत्यारभ्य, पृथिवीप्रभृतितमःपर्यन्तानां नारायणशरीरत्वप्रतिपादकसुबालोपनिषद्वाक्यानि च प्रापकवाक्यानीति निश्चीयमानतया, नारायणस्य जगदुपादानत्वजगच्छरीरकत्वहेतुकमेवेदमुभयविधतादात्म्यमिति निश्चीयते । अत उभयविधतादात्म्यवत्तया "सर्वं खल्विदं ब्रह्म'' इत्युच्यमानं ब्रह्म श्रीनिवासापरनामधेयं नारायणाख्यं ब्रह्मेति ॥

पूर्वपक्षः ।

[2] "सर्वं खल्विदं ब्रह्म'' इति प्रस्तुतस्य ब्रह्मण उत्तरत्र [5] "एष म आत्माऽन्तर्हृदये'' इति शरीरान्तर्वर्तिहृदयस्थितत्वप्रतिपादनात् शरीरस्य तद्भोगायतनत्वं, तस्य च शरीरसंबन्धनिबन्धनसुखदुःखभोक्तृत्वमल्पस्थानकत्वं च प्रतीयते । [6] "अणीयान् व्रीहेर्वा यवाद्वा '' इत्यादिना अणुपरिमाणत्वं च प्रतिपाद्यते । तदिदमल्पस्थानकत्वमल्पपरिमाणवत्त्वं सुखदुःखभोक्तृत्वं च

[1] तै. ना. २. [2] छा. ३-१४-१. [3] नारा. उ. (ऋ.) [4] सुबाल. ७.
[5] छा. ३-१४-४. [6] छा. ३-१४-३.

परमात्मनो न सम्भवति, अपि तु जीवात्मन एव । अतो जीवात्मैव [1]" सर्वं खल्विदं ब्रह्म " इत्युपक्रमस्थब्रह्मशब्देन उच्यते । तस्य कर्मवैचित्र्येण देवमनुष्यादिभावेन जननात् ' सर्वमिदं ब्रह्म ' इति तादात्म्यमुपपद्यत इति ॥

सिद्धान्तः ।

तज्जत्वतल्लत्वादिकमनूद्य तद्धेतुकतादात्म्यस्यात्र प्रतिपाद्यमानत्वात् जीवात्मनः कर्मकृतदेवमनुष्यादिभावस्य तज्जत्वादिहेतुकत्वाप्रसिद्धेः, चेतनस्य चेतनान्तरं प्रति आत्मत्वासम्भवात् 'सर्वमिदं' इत्युक्तसर्वचेतनतादात्म्यस्य कस्मिंश्चिदपि जीवात्मन्यसम्भवाच्च नात्र ब्रह्मशब्देन निर्दिष्टो जीवः ॥

उपास्यतया उपदिश्यमानानां मनोमयत्वादिगुणानां जीवात्मन्यसम्भवादपि नायं जीवः । तथा हि—मनोमयत्वं—[2] " न चक्षुषा गृह्यते नापि वाचा मनसा तु विशुद्धेन " इत्यादिश्रुतिप्रसिद्धं योगपरिशुद्धमनोग्राह्यत्वम्, 'मनोमय' इत्यत्र मयटो ग्राह्यग्राहकरूपसम्बन्धपरत्वात् । अनेन हेयसम्बन्धानर्हत्वं लभ्यते, हेयसम्बन्धार्हस्य परिशुद्धमनोग्राह्यत्वासम्भवात् । प्राणशरीरत्वमपि [3]" यस्य प्राणः शरीरं " इत्यन्तर्यामिब्राह्मणसिद्धं प्राणस्य नियन्तृत्वरूपम् । भारूपत्वं—[4] "आदित्यवर्णं तमसः परस्तात्" इत्यादिश्रुतिप्रसिद्धं निरतिशयदीप्तियुक्तविग्रहवत्त्वम् । सत्यसङ्कल्पत्वं —फलाव्यभिचरितसङ्कल्पवत्त्वम् । आकाशात्मत्वं— [3]" यस्य आकाशः शरीरं " इत्यन्तर्यामिब्राह्मणप्रसिद्धमाकाशस्य नियन्तृत्वरूपं आकाशं प्रत्यात्मत्वम् । एवमादय एतत्प्रकरणोक्ता गुणा जीवात्मनो नोपपद्यन्ते । [5]"एतमितः प्रेत्याभिसम्भवितास्मि" इत्यनन्तरश्रुत्युक्तं ब्रह्मणः प्राप्यत्वं जीवस्य प्राप्तृत्वं च प्रक्रान्तस्य ब्रह्मणो जीवत्वे न घटते, प्राप्तृप्राप्ययोर्भेदावश्यम्भावात् । एवं [6]"एष म आत्मान्तर्हृदये" इत्युपासकस्य जीवस्य 'मे' इति षष्ठ्यन्तेन, 'एष' इत्युपास्यस्य ब्रह्मणः प्रथमान्तेन निर्देशश्च

[1] छा ३ १४ १ [2] मु ३ १ ८ [3] बृ ५ ७ २०, १६ [4] तै आर ३ १२
[5] छा ३ १४ ४ [6] छा ३ १४ ३

प्रक्रान्तब्रह्मशब्दोक्तात्मनो जीवात्मत्वे न घटते । एवं [1]"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया" इति श्रीगीतावचनेन जीवात्महृदयावस्थितस्य ईश्वरत्वोक्तिरपि विरुद्धयते ॥

अतः [2]"सर्वं खल्विदं ब्रह्म" इति प्रक्रान्तं ब्रह्म न जीवः, अपि तु परमात्मा; अन्तर्यामिब्राह्मणोक्तस्य प्राणशरीरकत्वस्य आकाशशरीरकत्वस्य चात्र प्रत्यभिज्ञानात्, 'भारूप' इत्यनेन उत्तरनारायणोक्तस्य आदित्यवर्णवत्त्वस्य प्रत्यभिज्ञानात्, 'सत्यसङ्कल्प' इत्यनेन सत्यसङ्कल्पत्वनिमित्तभूतस्य [3]"एष सर्वभूतान्तरात्मा अपहतपाप्मा" इति सुबालोपनिषदुक्तस्याकर्मवश्यत्वरूपापहतपाप्मत्वस्य प्रत्यभिज्ञानाच्च, अन्तर्यामिब्राह्मणाद्युक्तः श्रीनिवासापरनामधेयः परमात्मा नारायण एवायमिति निर्धार्यते ॥

नन्वेवं परमात्मनोऽपरिच्छिन्नत्वेनावगतस्य अस्मिन् प्रकरणे [4]"एष म आत्माऽन्तर्हृदये अणीयान् व्रीहेर्वा" इत्याद्युक्तं हृदयरूपाल्पदेशावस्थानं अल्पपरिमाणवत्त्वं च नोपपद्यते । एवं शरीरसंबन्धप्रयुक्तसुखदुःखभोगश्च प्रसज्यत इति चेत् । उच्यते–स्वतोऽपरिच्छिन्नस्यापि परमात्मन उपासकानुग्रहाय उपासकहृदये सन्निहितस्य हृदयरूपपरिच्छिन्नोपाधिप्रयुक्ताल्पपरिमाणत्वस्यौपाधिकस्य अनुसन्धानार्थमत्रोपदेशात् । कर्मफलभोगार्थस्य शरीरसंबन्धस्यैव सुखदुःखभोगप्रयोजकतया, परमात्मनः स्वेच्छाकृतस्योपासकशरीरसम्बन्धस्य सुखदुःखभोगप्रयोजकत्वविरहेण, तस्य सुखदुःखभोगप्रसङ्गविरहाच्च, न कश्चिद्दोष इति ॥

इति सर्वत्रप्रसिद्धयधिकरणम् ॥ १ ॥

---

[1] गीता. १८-६१. [2] छा. ३-१४-१. [3] सुबाल. ७. [4] छा. ३-१४-३.

१३ ॥ अथ अत्त्रधिकरणम् ॥ २ ॥

पूर्वस्मिन्नधिकरणे परस्य ब्रह्मण उपासकशरीरान्तर्वर्तित्वेऽपि न तस्य कर्मफलभोक्तृत्वमित्युक्तम् । तर्हि कर्मफलभोक्तृत्वयोक्त परं ब्रह्म न स्यात् ; अपि तु जीव एव स्यात् इत्याशङ्कां परिहर्तुं प्रवृत्तमिदमधिकरणम् ॥

## अत्ता चराचरग्रहणात् ॥ १-२-९ ॥

[प्रकरणाच्च ॥ १० ॥

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

विशेषणाच्च ॥ १२ ॥]

**अत्ता**—सहर्ता, स श्रीनिवासापरनामधेय परमपुरुष एव, **चराचरग्रहणात्**—कृत्स्नस्य चिदचिदात्मकस्य प्रपञ्चस्य अद्यमानत्वेन श्रुतौ ग्रहणात् इति सूत्रार्थ ।

**अत्तारमोदनोक्त्या सिद्धं मृत्यूपसेचनत्वोक्त्या ।**
**संहर्तृ यदिति गमयति तद्ब्रह्म श्रीनिवासनाम भजे ॥ १४ ॥**

**अर्थः** । पूर्वश्लोकात् 'विद्या' इति पदमनुषञ्जनीयम् । ततश्च [1] "यस्य ब्रह्म च क्षत्र च उभे भवत ओदन । मृत्युर्यस्योपसेचन क इत्था वेद यत्र स ।" इति मन्त्रे 'यस्य पुरुषस्य ओदनो भवत ' इति यच्छब्दनिर्दिष्टपुरुषस्यौदनस्य च 'यस्य' इति षष्ठ्या अत्त्रदनीयभावसबन्धप्रतीत्या सिद्धो यो यच्छब्दार्थ अत्ता, तं **मृत्यूपसेचनत्वोक्त्या**—मृत्यु उपसेचन यस्य, तत्त्व मृत्यूपसेचनत्व, तस्य उक्त्या, **संहर्तृ**—निखिलजगत्संहारकर्तृ **यत्**—श्रीनिवासाख्य पर ब्रह्मेति, **विद्या**—नाचिकेतसविद्या, **गमयति**—ज्ञापयति, **तद्ब्रह्मेति** पूर्ववत् ॥

[1] कठ १ २-२५

भावः। कठवल्लीषु द्वितीयवल्ल्यां [1]"यस्य ब्रह्म च" इत्यादिमन्त्रः पठ्यते। तत्र यच्छब्दनिर्दिष्टस्य कस्यचित् पुरुषस्य ब्राह्मणक्षत्रियवर्णयोः ओदनत्वमुक्त्वा, मृत्योरोदनोपसेचनत्वमुक्तम्। तत्र यथा अद्यमानस्यान्नस्य दध्यादिकमुपसेचनं भवति, तथा अनेन पुरुषेण अद्यमानयोः ब्रह्मक्षत्रयोः मृत्युरुपसेचनं भवति इत्युक्तं भवति। 'यत् स्वयमद्यमानं सत् अन्यस्य वस्तुनोऽदनसाधनं भवति तदुपसेचनं' इति लोकप्रसिद्धम्, यथा दध्यादिकम्। तद्धि स्वयमद्यमानं सत् अन्यस्यान्नादेरदनसाधनं भवति। तथा प्रकृते ब्राह्मणक्षत्रिययोरदने मृत्युरुपसेचनमित्युक्तौ, मृत्योरद्यमानत्वं अन्यवस्त्वदनसाधनत्वं च प्रतीयते। मृत्योर्मुख्यस्याद्यमानत्वस्यासंभवात्, संह्रियमाणत्वमेव तत् वक्तव्यम्। ततश्च मृत्योरदनसाधनत्वमपि संहारसाधनत्वं वक्तव्यम्। इत्थं च मृत्योर्न ब्रह्मक्षत्रियवर्णसंहारमात्रे साधनत्वम्; अपि तु कृत्स्नस्यैव चराचरप्राणिसमुदायस्य। अतो येन पुरुषेण, संहारसाधनेन मृत्युना सर्वं चराचरं संह्रियते, मृत्युश्च संह्रियते, स पुरुषो यस्मिन् प्रकारे वर्तते, तं प्रकारं को वेत्ति—तस्य महिमानं को वेत्ति, न कोऽपीत्यर्थः पर्यवसितः॥

अत्र यच्छब्दनिर्दिष्टं पुरुषं [2]"ऋतं पिबन्तौ" इत्यनन्तरमन्त्रे प्रक्रम्य, तस्य सुखेनोपास्यत्वसिद्ध्यर्थं उपासकेन जीवेन सह एकस्यां हृदयगुहायां सन्निहितत्वमभिधाय, उपासनफलभूतप्राप्यवस्तुप्राप्त्युपकरणतया उपासकतच्छरीरादेः रथिरथादिभावं परिकल्प्य, तादृशोपकरणेन प्राप्तव्यवस्तुप्रदेशप्रकरणे [3]"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इति 'पूर्वोक्तरथाद्युपकरणवान् विष्णोः परमं पदं प्राप्नोति' इति विष्णोः प्राप्यतया निर्देशात्, [1]"यस्य ब्रह्म च" इति मन्त्रे यच्छब्दनिर्दिष्टसंहर्तृ श्रीनिवासापरनामधेयं विष्ण्वाख्यं परं ब्रह्मैवेति निर्धार्यत इति॥

---

[1] कठ १-२-२५. [2] कठ १-३-१ [3] कठ १-३-९

## पूर्वपक्षः ।

[1] "यस्य ब्रह्म च क्षत्रं च" इति मन्त्रे ब्राह्मणक्षत्रियादिजातीयस्त्रीपुंसयोः परस्परभोग्यत्वं प्रतीयते । तेन च यच्छब्दनिर्दिष्टो भोक्ता जीवात्मेति गम्यते, तस्यैव कर्मफलभूतस्त्र्यादिभोगसंभवात् । [1] "मृत्युर्यस्योपसेचनं" इति च मृत्योर्जीवात्मस्वरूपं प्रत्यबाधकत्वाभिप्रायकम् । अतो जीव एव तस्मिन् मन्त्रे प्रतिपाद्यत इति ॥

## सिद्धान्तः ।

[1] "मृत्युर्यस्योपसेचनं" इत्यत्रोक्तस्योपसेचनत्वस्याबाधकत्वरूपत्वे अत्यन्तासारस्यप्रसङ्गेन लोकप्रसिद्धस्य स्वयमद्यमानत्वे सत्यदनसाधनत्वरूपस्वरसार्थस्यैव ग्राह्यतया, प्रागुक्तरीत्या मृत्योः संह्रियमाणत्वसंहारसाधनत्वयोः प्रतीयमानत्वेन, तदनुरोधेन [1] "उभे भवत ओदन" इत्यत्रौदनत्वमपि संहार्यत्वरूपमेव, न तु भोग्यत्वरूपमिति निश्चीयते । अतो नात्र कर्मफलभोक्तुर्जीवस्य प्रसक्तिगन्धः ॥

अपि चास्मिन् प्रकरणे पूर्वत्र कठवल्लीषु द्वितीयवल्ल्यां, [2] "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इत्यत्र परमात्मानं प्रक्रम्य, [3] "अशरीरं शरीरेष्वनवस्थेष्ववस्थितं" इति [3] "महान्तं विभुमात्मानं मत्वा धीरो न शोचति" इति च तमेव पूर्वप्रस्तुत परमात्मानं 'महान्तं विभुं' इत्यनेन प्रतिनिर्दिश्य, अनन्तरं [1] "यस्य ब्रह्म च क्षत्रं च उभे भवत ओदन" इत्यादिरयं मन्त्रः पठ्यते । अत्र च [1] "क इत्था वेद यत्र सः" इत्यनेन प्रकृतस्यात्मनो दुर्बोधत्वकथनेन [2] "तं दुर्दर्शं" इति पूर्वप्रस्तुत परमात्मा प्रत्यभिज्ञायते । अतोऽत्र मन्त्रे प्रतिपाद्यमानोऽत्ता न जीवः, अपि तु परमात्मैव ॥

---

[1] कठ १ २-२५　[2] कठ १-२-१२　[3] कठ १-२-२२

ननु [1]"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः॥" इति अव्यवहितोत्तरमन्त्रे कर्मफलभोक्तुर्जीवस्य प्रतिपादनात् परमात्मप्रकरणविच्छेदोऽवगम्यते । ततश्च [2]"यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः" इत्यस्मिन् मन्त्रे प्रतीयमानोऽत्ता जीवः, तस्यैव कर्मफलभोक्तृत्वमनन्तरमन्त्रे प्रतिपाद्यते । ततश्च [1]"ऋतं पिबन्तौ" इति मन्त्रे 'ऋतं पिबन्तौ' इत्यवश्यभाविकर्मफलभोक्तारौ बुद्धिजीवावुच्येते ; तत्र बुद्धेः कर्मफलभोक्तृत्वाभावेऽपि, भोगकरणभूताया बुद्धेः कर्तृत्वोपचारात् 'पिबन्तौ' इति निर्देशोपपत्तेः । न त्वत्र परमात्मनः प्रतिपाद्यत्वसंभवः; तस्य कथमपि कर्मफलभोगे अन्वयासंभवात् । ततश्च एतदेकप्रकरणत्वेन पूर्वमन्त्रे प्रतिपाद्यमानोऽत्ता जीव एवेति चेत् ।

उच्यते—[1]"ऋतं पिबन्तौ" इति मन्त्रे, [1]"गुहां प्रविष्टौ" इत्यनेन जीवात्मपरमात्मानावेव प्रतिपाद्येते; तयोरुभयोरेवास्मिन् प्रकरणे गुहाप्रवेशस्याभिधानात् । यथा [3]"तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणं" इत्यस्मिन् मन्त्रे परमात्मनो गुहाप्रवेश उक्तः; [4]"या प्राणेन संभवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत" इत्यस्मिन् मन्त्रे जीवात्मनो गुहाप्रवेशोऽभिहितः । 'अत्ति इत्यदितिः, कर्मफलभोक्ता जीवः; या अदितिः—जीवात्मा, प्राणेन सह वर्तते, देवतामयी—इन्द्रियाधीनभोगा, गुहां प्रविश्य तिष्ठन्ती—हृदयपुण्डरीककुहरवर्तिनी, भूतेभिः—भूतैः सह, व्यजायत—देवमनुष्यादिरूपेण जायते' इत्युक्तश्रुत्यर्थः ॥

एवमस्मिन् प्रकरणे जीवात्मपरमात्मनोः द्वयोरेव गुहाप्रवेशश्रवणात्, अस्मिन् मन्त्रे [1]"गुहां प्रविष्टौ" इत्युच्यमानौ तावेव जीवपरमात्मानौ

[1] कठ. १-३-१ [2] कठ. १-२-२५ [3] कठ. १-२-१२. [4] कठ. २-४-७

इति निश्चीयते। परमात्मन. कर्मफलभोगे प्रयोजककर्तृत्वात्, जीवस्य प्रयोज्यकर्तृत्वाच, तयोः [1]"ऋतं पिबन्तौ" इत्युक्त्युपपत्तेः॥

यद्यपि बुद्धेरपि कर्मफलभोगे कथंचित् अन्वय. संभवति, तथापि गुहाप्रवेशोक्तिः तत्र न घटते। गुहाप्रवेशो हि [2]"आत्मा गुहायां निहितोऽस्य जन्तोः," [3]"सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां" इत्यादिषु परमात्मन एव प्रसिद्धः, न तु बुद्धेः। एतदभिप्रायेणैव सूत्रे 'ऋतं पिबन्तौ' इति वक्तव्ये, [4]"गुहां प्रविष्टौ" इत्युक्तिरिति द्रष्टव्यम्। किञ्च [1]"गुहां प्रविष्टौ" इत्यस्मिन् मन्त्रे 'गुहां प्रविष्टौ' इत्यनेन प्रस्तुतयोर्द्वयोर्मध्ये, एकः कर्मफलभोक्ता जीवात्मा [5]"आत्मानं रथिनं विद्धि शरीरं रथमेव च" इत्युपक्रम्य, [6]"सोऽध्वन पारमाप्नोति तद्विष्णोः परमं पदं" इत्यत्र प्राप्तृत्वेन विशेष्यते। [6]"तद्विष्णोः परमं पदं" इत्यत्र परमात्मा प्राप्यत्वेन विशेष्यते। ततश्च [7]"यस्य ब्रह्म च क्षत्रं च" इति पूर्वमन्त्रे [7]"क इत्था वेद यत्र स." इति परमात्मनो दुर्ग्रहत्वे प्रतिपादिते, 'दुर्ग्रहस्य तस्य कथमुपासनसंभव', कथं वा तत्प्राप्ति' इति तदुपासनानिवृत्तौ प्रसक्तायां, परमात्मन. स्वोपासनसौकर्याय जीवात्मना सममेकस्मिन् शरीरे हृदयगुहायां सन्निधायावस्थितत्वेन तस्योपासनं सुकर, उपासनेन तत्प्राप्तिश्च सुघटेत्युपदेशाय प्रवृत्तोऽयं [1]"ऋतं पिबन्तौ" इति मन्त्र.। अत एवोत्तरत्र [6]"विज्ञानसारथिर्यस्तु मनःप्रग्रहवान् नरः। सोऽध्वन पारमाप्नोति तद्विष्णोः परमं पदं॥" इत्यत्र सारथिप्रग्रहादिप्राप्त्युपकरण प्रदर्श्य, उपासकेन जीवात्मना उपास्यस्य परमात्मन· प्राप्ति प्रतिपाद्यते॥

---

[1] कठ १-३ १ [2] तै २. [3] तै. आन १. [4] शा. सू १-२-११
[5] कठ १ ३-३ [6] कठ. १ ३-९. [7] कठ १ २ २५

अतः [1]"ऋतं पिबन्तौ" इति मन्त्रे [1]"गुहां प्रविष्टौ" इत्युक्तौ जीवपरमात्मानावेव, न बुद्धिजीवाविति निश्चीयते। ततश्च [2]"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदं" इत्यत्र प्राप्यतया उक्तः श्रीनिवासापरनामधेयः परमात्मैव [3]"यस्य ब्रह्म च क्षत्रं च" इत्यत्र निखिलजगत्संहर्तृत्वेनोच्यत इति ॥

इति अत्त्रधिकरणम् ॥ २ ॥

## १४ ॥ अन्तराधिकरणम् ॥ ३ ॥

पूर्वाधिकरणे [3]"क इत्था वेद यत्र सः" इत्यनेन परमात्मनो दुर्ज्ञेयत्वमुक्तम्। तर्हि दृश्यत्वेनोच्यमानः परमात्मा न स्यादिति शंकापरिहारार्थं प्रवृत्तमिदमधिकरणम् ॥

## अन्तर उपपत्तेः ॥ १-२-१३ ॥

[स्थानादिव्यपदेशाच्च ॥ १४ ॥
सुखविशिष्टाभिधानादेव च ॥ १५ ॥
अत एव च स ब्रह्म ॥ १६ ॥
श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १७ ॥
अनवस्थितेरसंभवाच्च नेतरः ॥ १८ ॥]

अन्तरः—अक्ष्यन्तस्थ, सः—परमपुरुषः; उपपत्तेः—अभयत्वामृतत्वादीनां तत्रैवोपपत्तेः इति प्रथमसूत्रार्थः। चक्षुषि स्थितिनियमनादीनां व्यपदिश्यमानत्वादपि अक्षिस्थः परमपुरुष एवेति द्वितीयसूत्रार्थः ॥

अक्षिपुरुषं प्रसिद्धचक्षुःस्थित्यादिभिर्धर्मैः।
यदिति व्यनक्ति विद्या तद् ब्रह्म श्रीनिवासनाम भजे ॥ १५ ॥

[1] कठ. १-३-१. [2] कठ १-३-९. [3] कठ १-२-२५.

प्रसिद्धः–[1] "यश्चक्षुषि तिष्ठन्" इत्यादिश्रुतिषु प्रसिद्धः। विद्या–उपकोसलविद्या। शिष्टं स्पष्टम् ॥

भावः। छान्दोग्ये उपकोसलविद्याप्रकरणे, [2]"य एषोऽक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाच, एतदमृतमेतदभयमेतद्ब्रह्म" इति श्रूयते। तत्र 'अक्षिणि पुरुषो दृश्यते' इत्यनेन अक्षिस्थः पुरुषः कश्चित् प्रतीयते। तेन चान्तर्यामिब्राह्मणे [3]"यश्चक्षुषि तिष्ठन् चक्षुषोऽन्तर" इत्यादिना चक्षुस्स्थतया तन्नियन्तृतया च श्रुतः श्रीनिवासापरनामधेयो नारायणः प्रत्यभिज्ञायते। एवं तत्रैव पूर्वत्र [4]"प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इत्यत्र, 'कं ब्रह्म खं ब्रह्म' इत्यस्य विवरणभूतेन "यद्वाव कं तदेव खं, यदेव खं तदेव कं" इति वाक्येन [5]"को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्" इति आनन्दवल्लीस्थमानन्दमयात्मविषयं वाक्यं स्मार्यते। स चानन्दमयात्मा श्रीनिवासापरनामधेयः पुण्डरीकाक्ष इत्यानन्दमयाधिकरणे निर्णीतम्। अत एभिः प्रत्यभिज्ञापकैः अयमक्षिपुरुषः श्रीनिवासापरनामधेयं परं ब्रह्मेति निर्धार्यत इति ॥

पूर्वपक्षः।

[6]"य एषोऽक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाच एतदमृतमेतदभयमेतद्ब्रह्मेति" इति छान्दोग्ये उपकोसलविद्याप्रकरणे श्रूयते। अत्र अक्षिणि दृश्यमानत्वेन प्रसिद्धवन्निर्दिश्यमानः पुरुषः प्रतिबिम्बो वा, आदित्याख्यदेवताविशेषो वा, जीवात्मा वा भवितुमर्हति, तेष्वेव प्रसिद्धवन्निर्देशोपपत्तेः। प्रतिबिम्बस्य तावत् चक्षुषि दृश्यमानत्वं लोकप्रसिद्धम्। आदित्यस्य चक्षुष्यवस्थानं [7]"रश्मिभिरेषोऽस्मिन् प्रतिष्ठित"

---

[1] बृ ५-७-२२. [2] छा ४ १५ १ [3] बृ. ५-७-२२. [4] छा. ४ १० ५. [5] तै. आन. ७ [6] छा ४ १५-१ [7] बृ. ७-५-१

इति श्रुतिप्रसिद्धम्। चक्षुरुन्मीलनादिना जीवात्मनो देहेऽवस्थितेर्निश्चीयमानत्वात्, तस्यापि चक्षुषि दृश्यमानत्वं संभवति। एवं लोकप्रसिद्धिश्रुतिप्रसिद्धियौक्तिकप्रसिद्धीनां प्रतिबिम्बादिषु त्रिष्वेव संभवात्, तेष्वन्यतम एवायमक्षिणि दृश्यमानः पुरुषः; न परमात्मा, तस्य चक्षुषि दृश्यमानत्वप्रसिद्ध्यभावात्। एवमुपक्रमस्थेन प्रसिद्धिलिङ्गेन प्रतिबिम्बादिष्वन्यतमस्य अक्षिपुरुषत्वे निश्चिते, उत्तरत्र श्रुतानि अमृतत्वाभयत्वादीनि स्तुतिपरतया नेतव्यानि। 'एष आत्मेति' इति 'एतदमृतमेतदभयमेतद्ब्रह्मेति' इति च 'इति'पदश्रवणेनामृतत्वादिषु तात्पर्याभावश्चावगम्यते। यथा [1]"नाम ब्रह्मेत्युपासीत" इत्यादौ ब्रह्मशब्दोत्तरं 'इति'करणेन नाम्नो ब्रह्मत्वे तात्पर्याभावः, तद्वदिति॥

सिद्धान्तः।

[2]"य एषोऽक्षिणि पुरुषो दृश्यते" इत्यत्र अक्षिणि दृश्यमानतया अभिधीयमानः पुरुषः परमात्मैव। तस्मिन्नेव तदुत्तरवाक्यश्रुतानां आत्मत्वनिरुपाधिकामृतत्वाभयत्वादीनामुपपद्यमानत्वात्। अत्राभिधीयमानमात्मत्वं असङ्कोचात् सर्वान् प्रत्यात्मत्वमिति प्रतीयते। तच्च अन्तः प्रविश्य नियन्तृत्वरूपमिति [3]"अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इति श्रुत्यन्तरेणावगम्यते। तच्च प्रतिबिम्बादीनां नोपपद्यते। एवं उपाध्यनुक्तिसिद्धं निरुपाधिकममृतत्वमभयत्वं ब्रह्मत्वं च तेषामनुपपन्नम्। 'आत्मेति' 'ब्रह्मेति' च 'इति'करणेन तेषु तात्पर्याभावो गम्यत इति तु न युक्तम्। 'इति ह स्माऽऽहोपाध्याय' इत्यादिषु 'इति'करणेऽप्युच्यमानार्थे तात्पर्यदर्शनात्॥

किञ्च अस्मिन् प्रकरणे उपक्रमे [4]"प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इति श्रुतस्य ब्रह्मशब्दस्य [5]"एतद्ब्रह्म" इति अत्रापि श्रवणात्, तदेवेदं

[1] छा ७-१-५. [2] छा ४-१५-१ [3] तै. आर ११-२०
[4] छा ४-१०-५. [5] छा ४ १५-३.

प्रसिद्धः–[1] " यश्चक्षुषि तिष्ठन् " इत्यादिश्रुतिषु प्रसिद्धं । विद्या–उपकोसलविद्या । शिष्ट स्पष्टम् ॥

भावः । छान्दोग्ये उपकोसलविद्याप्रकरणे, [2]" य एषोऽक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाच, एतदमृतमेतदभयमेतद्ब्रह्म" इति श्रूयते । तत्र 'अक्षिणि पुरुषो दृश्यते' इत्यनेन अक्षिस्थः पुरुषः कश्चित् प्रतीयते । तेन चान्तर्यामिब्राह्मणे [3]" यश्चक्षुषि तिष्ठन् चक्षुषोऽन्तर " इत्यादिना चक्षुस्स्थतया तन्नियन्तृतया च श्रुतः श्रीनिवासापरनामधेयो नारायण· प्रत्यभिज्ञायते । एवं तत्रैव पूर्वत्र [4]" प्राणो ब्रह्म क ब्रह्म ख ब्रह्म " इत्यत्र, 'कं ब्रह्म खं ब्रह्म' इत्यस्य विवरणभूतेन "यद्वाव कं तदेव ख, यदेव खं तदेव क" इति वाक्येन [5]" को ह्येवाऽन्यात् क· प्राण्यात् यदेष आकाश आनन्दो न स्यात् " इति आनन्दवल्लीस्थमानन्दमयात्मविषयं वाक्य स्मार्यते । स चानन्दमयात्मा श्रीनिवासापरनामधेय· पुण्डरीकाक्ष इत्यानन्दमयाधिकरणे निर्णीतम् । अत एभि प्रत्यभिज्ञापकै· अयमक्षि-पुरुष· श्रीनिवासापरनामधेयं परं ब्रह्मेति निर्धार्यत इति ॥

## पूर्वपक्षः ।

[6]" य एषोऽक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाच एतत् अमृतमेतदभयमेतद्ब्रह्मेति " इति छान्दोग्ये उपकोसलविद्याप्रकरणे श्रूयते । अत्र अक्षिणि दृश्यमानत्वेन प्रसिद्धवन्निर्दिश्यमान पुरुष प्रतिबिम्बो वा, आदित्याख्यदेवताविशेषो वा, जीवात्मा वा भवितुमर्हति, तेष्वेव प्रसिद्धवन्निर्देशोपपत्ते । प्रतिबिम्बस्य तावत् चक्षुषि दृश्यमानत्वं लोक प्रसिद्धम् । आदित्यस्य चक्षुष्यवस्थान [7]" रश्मिभिरेषोऽस्मिन् प्रतिष्ठित "

[1] बृ ५-७ २२ [2] छा ४ १५ १ [3] बृ ५ ७ २२· [4] छा. ४ १० ५
[5] तै. आन ७ [6] छा ४ १५ १ [7] बृ ७-५-१

इति श्रुतिप्रसिद्धम्। चक्षुरुन्मीलनादिना जीवात्मनो देहेऽवस्थितेर्निश्चीयमानत्वात्, तस्यापि चक्षुषि दृश्यमानत्वं संभवति। एवं लोकप्रसिद्धिश्रुतिप्रसिद्धियौक्तिकप्रसिद्धीनां प्रतिबिम्बादिषु त्रिष्वेव संभवात्, तेष्वन्यतम एवायमक्षिणि दृश्यमानः पुरुषः; न परमात्मा, तस्य चक्षुषि दृश्यमानत्वप्रसिद्धयभावात्। एवमुपक्रमस्थेन प्रसिद्धिलिङ्गेन प्रतिबिम्बादिष्वन्यतमस्य अक्षिपुरुषत्वे निश्चिते, उत्तरत्र श्रुतानि अमृतत्वाभयत्वादीनि स्तुतिपरतया नेतव्यानि। 'एष आत्मेति' इति 'एतदमृतमेतदभयमेतद्ब्रह्मेति' इति च 'इति'पदश्रवणेनामृतत्वादिषु तात्पर्याभावश्चावगम्यते। यथा [1]"नाम ब्रह्मेत्युपासीत" इत्यादौ ब्रह्मशब्दोत्तरं 'इति'करणेन नाम्नो ब्रह्मत्वे तात्पर्याभावः, तद्वदिति॥

सिद्धान्तः।

[2]"य एषोऽक्षिणि पुरुषो दृश्यते" इत्यत्र अक्षिणि दृश्यमानतया अभिधीयमानः पुरुषः परमात्मैव। तस्मिन्नेव तदुत्तरवाक्यश्रुतानां आत्मत्वनिरुपाधिकामृतत्वाभयत्वादीनामुपपद्यमानत्वात्। अत्राभिधीयमानमात्मत्वं असङ्कोचात् सर्वान् प्रत्यात्मत्वमिति प्रतीयते। तच्च अन्तः प्रविश्य नियन्तृत्वरूपमिति [3]"अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इति श्रुत्यन्तरेणावगम्यते। तच्च प्रतिबिम्बादीनां नोपपद्यते। एवं उपाध्यनुक्तिसिद्धं निरुपाधिकममृतत्वमभयत्वं ब्रह्मत्वं च तेषामनुपपन्नम्। 'आत्मेति' 'ब्रह्मेति' च 'इति'करणेन तेषु तात्पर्याभावो गम्यत इति तु न युक्तम्। 'इति ह स्माऽऽहोपाध्याय' इत्यादिषु 'इति'करणेऽप्युच्यमानार्थे तात्पर्यदर्शनात्॥

किञ्च अस्मिन् प्रकरणे उपक्रमे [4]"प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इति श्रुतस्य ब्रह्मशब्दस्य [5]"एतद्ब्रह्म" इति अत्रापि श्रवणात्, तदेवेदं

[1] छा. ७-१५. [2] छा. ४-१५-१ [3] तै. आर ११-२०. [4] छा. ४-१०-५. [5] छा. ४ १५.१.

ब्रह्मेति प्रत्यभिज्ञायते। तच्च अपरिच्छिन्नसुखरूपमिति [1]"कं ब्रह्म खं ब्रह्म" इत्यनेन ज्ञायते; तत्र आकाशवाचिना 'ख'शब्देन आकाशवदपरिच्छिन्नत्वस्य, सुखवाचिना 'क'शब्देन सुखरूपत्वस्य च ब्रह्मणि प्रतिपादनात्। इत्थं चापरिच्छिन्नसुखरूपत्वेन प्रतीयमानोऽयमक्षिपुरुष परमात्मैव; न प्रतिबिम्बादि, तेषां अपरिच्छिन्नसुखरूपत्वासंभवात्। ननु पूर्वं [2]"कं ब्रह्म खं ब्रह्म" इति ब्रह्मप्रकरणस्य [3]"अथ हैनं गार्हपत्योऽनुशशास" इत्यग्निविद्योपदेशप्रकरणेन विच्छेदात्, कथं पूर्ववाक्यप्रकृतस्यापरिच्छिन्नसुखरूपस्य ब्रह्मण इह प्रत्यभिज्ञानमिति चेत्। उच्यते—उपकोसलकृतस्वपरिचरणप्रीतै गार्हपत्याद्यग्निभिः उपकोसलाय [2]"प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इत्यादिना ब्रह्मस्वरूपमग्निविद्या चोपदिश्य, [4]"आचार्यस्तु ते गतिं वक्ता" इत्यवशिष्टमाचार्यो वक्ष्यतीत्युक्तमिति, आचार्योऽपि ब्रह्मण संयद्वामत्वादीन् उपास्यगुणान्, अक्षिरूपमुपासनस्थान, अर्चिरादिकां गतिं चोपदिष्टवान् इति चोक्त्या, यावदर्चिरादिगत्युपदेशं प्रकान्तब्रह्मविद्याया असमाप्तत्वावगमात्, ब्रह्मविद्याप्रकरणविच्छेदाभाव, अग्निविद्याया प्रक्रान्तब्रह्मविद्याङ्गत्वं च निश्चीयते। [5]"एषा सोम्य तेऽस्मद्विद्या आत्मविद्या च" इत्यग्निभि समुचित्योपदेशादप्यग्निविद्याया ब्रह्मविद्याङ्गत्वमवसीयते॥

एवं [2]"कं ब्रह्म ख ब्रह्म" इत्यस्यार्थमजानते उपकोसलाय, [2]"यद्वाव कं तदेव खं यदेव खं तदेव कं" इत्यनेन सुखरूपस्यापरिच्छिन्नत्वं, अपरिच्छिन्नस्य सुखरूपत्वमग्निभि उपदिष्टमित्यवगम्यते॥

अतोऽपरिच्छिन्नसुखरूपतया प्रकान्तं ब्रह्म [6]"य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमेतदभयमेतद्ब्रह्मेति"

[1] छा ४ १०-५. [2] छा ४-१०-५. [3] छा. ४-११-१
[4] छा. ४-१४-१ [5] छा. ४-१४-१. [6] छा. ४-१५-१.

इत्यनेनोपास्यगुणविधानार्थं उपासनस्थानविधानार्थं च आचार्येण अनूद्यत इत्युभयत्र ब्रह्मशब्देन प्रत्यभिज्ञानादवगम्यते । अतोऽपरिच्छिन्नसुखरूपत्वस्य जीवात्मनि, प्रतिबिम्बे, आदित्ये वा असंभवात् तेषामक्षिण्यवस्थानाभावाच्च, न प्रतिबिम्बादिषु अन्यतमोऽक्षिपुरुषः । परमात्मन. [1]"यश्चक्षुषि तिष्ठन्" इत्यन्तर्यामिब्राह्मणादौ अक्षिण्यवस्थानस्य प्रसिद्धत्वात्, निरुपाधिकामृतत्वादीनां परमात्मन्येव उपपद्यमानत्वात्, अक्षिपुरुषस्याब्रह्मत्वे अक्षिपुरुषं श्रुतवते उपकोसलाय ब्रह्मविद्भिश्चिन्तनीयाया अर्चिरादिगतेरनुसन्धानार्थमुपदेशायोगाच्च, चक्षुष्यवस्थितत्वेन अन्तर्यामिब्राह्मणादौ प्रसिद्धः श्रीनिवासापरनामधेयः परमात्मैवायमक्षिपुरुष इति निर्धार्यत इति ॥

इत्यन्तराधिकरणम् ॥ ३ ॥

---

## १५ ॥ अन्तर्याम्यधिकरणम् ॥ ४ ॥

पूर्वस्मिन्नधिकरणे परमात्मनो नारायणस्य चक्षुषि स्थितिमवलम्ब्य सिद्धान्त उक्तः । अन्तर्यामिब्राह्मणे जीवस्यैव चक्षुषि स्थितिः प्रतिपाद्यते, न तु परमात्मन इत्याक्षेपपरिहाराय प्रवृत्तमिदमधिकरणम् ॥

### अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ॥ १-२-१९ ॥

[न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च ॥ २० ॥
उभयेऽपि हि भेदेनैनमधीयते ॥ २१ ॥]

---

[1] बृ ५-७-२२

काण्वमाध्यन्दिनशाखागते अन्तर्यामिब्राह्मणे श्रूयमाणः अन्तर्यामी, सः—परमपुरुष एव । तद्धर्मस्य—युगपदन्तः प्रविश्य सर्वनियमनरूपस्य परमात्मधर्मस्य व्यपदिश्यमानत्वात् इति सूत्रार्थः ॥

अन्तर्यामितयोक्तं युगपत्सर्वस्य नियमनप्रमुखैः ।
यदिति व्यनक्ति विद्या तद्ब्रह्म श्रीनिवासनाम भजे ॥ १६ ॥

अर्थः । पृथिव्यादिषु प्रतिपर्यायं अन्तर्यामितया उक्तं पुरुषं, एकदा सर्वस्य अन्तः प्रविश्य नियमनादिभिः अन्तर्यामिब्राह्मणोक्तैः परब्रह्मासाधारणधर्मैः, यत् श्रीनिवासाभिधानं ब्रह्मेति अन्तर्यामिविद्या प्रकाशयति तद्ब्रह्मेति पूर्ववत् ॥

भावः । अन्तर्यामिब्राह्मणे पृथिव्यादिषु सर्वेषु वस्तुषु युगपदन्तः प्रविश्य तन्नियमनं अन्तर्यामिण प्रतिपाद्यते । तच्च सर्वव्याप्तिसार्वज्ञ्य-सर्वशक्तित्वादिगुणवत्त्वमन्तरा न घटते । तादृशगुणवत्त्वं च परमात्मन एवेति स एवान्तर्यामितयोच्यत इति ; सुबालोपनिषदि [1] "यः पृथिवी-मन्तरे सञ्चरन् यस्य पृथिवी शरीरं" इत्यादिना [2] "एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" इत्यन्तेन नारायणाख्यदेवता-विशेषस्यैव युगपत् सर्वस्मिन्नन्तःप्रविश्य तत्तन्नियन्तृत्वप्रतिपादनेन श्रीनि-वासापरनामधेयः स नारायण एवायमन्तर्यामिब्राह्मणोक्तोऽन्तर्यामी इति च निर्धार्यत इति ॥

पूर्वपक्षः ।

अन्तर्यामिब्राह्मणे अन्तर्यामिणं प्रक्रम्य, तस्य [3] "अदृष्टो द्रष्टा अश्रुतः श्रोता" इत्यादिना द्रष्टृत्वश्रोतृत्वादिकं प्रतिपाद्यते । द्रष्टृत्वश्रोतृ-त्वादिकं चक्षुःश्रोत्रादीन्द्रियजन्यज्ञानवत्त्वरूपम् । तच्च करणायत्तज्ञानवतो

[1] सुबाल [2] सुबाल. [3] बृ. ५-७-२७.

जीवस्यैव संभवति, न तु करणानधीनज्ञानवतः परमात्मनः; अतो जीवात्मैवास्मिन् प्रकरणे अन्तर्यामितयोच्यते । [1]"यः पृथिव्यां तिष्ठन्" इति च प्रतिपर्यायं यच्छब्दावृत्त्या तत्तद्वस्तुनियन्त्रनेकजीवप्रतिपादनपरत्वं वाक्यस्य निश्चीयते । [2]"य आत्मनि तिष्ठन्" इति चानन्याधारत्वप्रतिपादनपरं निर्वोढुं शक्यम् । [3]"स त आत्माऽन्तर्याम्यमृतः" इति च तज्जातीयत्वपरम्; 'पृथिव्या अन्तर्यामी यः अपामन्तर्यामी तज्जातीय' इत्यादि । अतोऽन्तर्यामितयोक्तो जीव एवेति ॥

सिद्धान्तः ।

बृहदारण्यके [4]"य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति" इत्यादिना 'एको यः सर्वेषां नियन्ता, तमन्तर्यामिणं ब्रूहि' इति प्रश्नस्य प्रतिवचनरूपे [1]"यः पृथिव्यां तिष्ठन्" इत्यादिवाक्ये आवृत्तस्य यच्छब्दस्य प्रतिपर्यायमेकैकजीवपरत्वे, प्रश्नप्रतिवचनयोरसङ्गतिः स्यात् । एकात्मपरत्वे हि सर्वेषां नियन्तुः एकस्य लाभात्, प्रत्युत्तरं सङ्गतं स्यात् । अतः प्रश्नप्रतिवचनयोरुपपत्तये प्रतिपर्यायमावृत्तानां यच्छब्दानामेकात्मपरत्वमेवावश्यं वाच्यम् । ततश्च एकस्यैव आत्मनो युगपत् सर्वस्यान्तः प्रविश्य नियमनलाभात् तथाविधनियमनस्य परमपुरुषादन्यस्य कस्याप्यसंभवात्, स परमपुरुष एवायमन्तर्यामीति निश्चीयते ॥

किञ्च [2]"य आत्मनि तिष्ठन्" इत्यत्र 'आत्मनि तिष्ठन्' इत्यस्यानन्याधारत्वपरत्वे अस्वारस्यं दुर्वारम् । एवं [2]"यो विज्ञाने तिष्ठन्" इति माध्यन्दिनशाखायां काण्वशाखास्थ'आत्म'शब्दस्थाने 'विज्ञान'-शब्दप्रयोगदर्शनेन आत्मशब्दो न स्ववाची, अपि तु जीवात्मवाची

[1] बृ. ५-७-३. [2] बृ ५-७-२२. [3] बृ. ५-७ २३. [4] बृ. ५-७-१.

इति निश्चीयते । अतो जीवात्मनि अन्तःस्थत्वस्य तन्नियन्तृत्वस्य च लाभेन तस्य जीवात्मन्यसंभवात्, जीवात्मना नियन्तृत्वेनोच्यमानोऽयमन्तर्यामी जीवात्मभ्योऽन्य एवेति निश्चीयते । एवं [1]"अदृष्टो द्रष्टा" इत्यादिवाक्यशेषे अन्तर्यामिणः स्वनियाम्यैरदृष्टस्यैव सतः तद्द्रष्टृत्वमभिधीयते । तच्च जीवात्मनो न घटते । अतोऽप्ययमन्तर्यामी जीवादन्य इति निश्चीयते ॥

उत्तरत्र [1]"अदृष्टो द्रष्टा" इत्यादिषु उच्यमानं द्रष्टृत्वमपि न चक्षुरादीन्द्रियजन्यज्ञानविशेषरूपम्, अपि तु रूपादिसाक्षात्काररूपम्। तच्च परमात्मन उपपद्यत एव । अत एव [2]"पश्यत्यचक्षुः स शृणोत्यकर्णः" इत्यादिषु परमात्मनः चक्षुरादीन्द्रियाभावेऽपि दर्शनश्रवणादिमत्त्वोक्तिरुपपद्यते इति दिक् ॥

इदमत्रावधेयम्—[3]"यः पृथिव्यां तिष्ठन्" [4]"योऽप्सु तिष्ठन्" इत्यादि सामान्यनिर्देशरूपतया विशेषनिर्देशसापेक्षं, स च विशेषनिर्देशः [5]"यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरं" इत्यादि [5]"एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" इत्यन्त एव वक्तव्यः, अन्यस्य कस्यचिददर्शनात् । इत्थं च तत्र नारायणाख्यदेवताविशेषस्यैव सर्वनियन्तृत्वसर्वान्तरात्मत्वप्रतिपादनात्, स एवायमन्तर्यामी श्रीनिवासापरनामधेयो नारायण इति निश्चीयते । अतो नात्र ब्रह्मरुद्रेन्द्रादिषु कस्याप्यवकाश इति ॥

इत्यन्तर्याम्यधिकरणम् ॥ ४ ॥

---

[1] बृ ५-७-२३ [2] श्वे ३-१९ [3] बृ ५-७-३ [4] बृ ५-७-४ [5] सुबाल ७

१६ ॥ अदृश्यत्वादिगुणकाधिकरणम् ॥ ५ ॥

पूर्वाधिकरणे [1]"अदृष्टो द्रष्टा" इत्यत्र अदृश्यतयाऽभिहितस्य अचिद्व्यावर्तकैर्द्रष्टृत्वनियन्तृत्वादिधर्मैः परमात्मत्वमुक्तम्। 'यत्र द्रष्टृत्वादिधर्मो न श्रूयते, तत्र अदृश्यत्वादिमत्तया श्रुतमचेतनं प्रधानमेवास्तु' इत्याशङ्कां परिहर्तुं प्रवृत्तमिदमधिकरणम् ॥

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ १-२-२२ ॥

[विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २३ ॥

रूपोपन्यासाच्च ॥ २४ ॥]

अदृश्यत्वादिगुणकः, सः—परमात्मैव, धर्मोक्तेः—निरुपाधिकसर्वज्ञत्वादिपरमात्मासाधारणधर्मस्यात्रोच्यमानत्वात् इति सूत्रार्थः ॥

यद्भूतयोनिरक्षरमुक्तं यज्ज्ञापकैर्धर्मैः ।
विद्या स्फुटयति तद्यत् तद्ब्रह्म श्रीनिवासनाम भजे ॥ १७ ॥

अर्थः। मुण्डकोपनिषदि अक्षरविद्याप्रकरणे [2]"अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" इत्यत्र भूतयोनिभूतमक्षरं यदुक्तं, तत् उत्तरत्र तथाविधाक्षरसंबन्धितया अभिहितैः सर्वज्ञत्वदिव्यपुरुषत्वादिभिः यत्प्रत्यभिज्ञापकैर्धर्मैः यत् श्रीनिवासापरनामधेयं ब्रह्मेति अक्षरविद्या स्फुटयति—विशदयति, तद्ब्रह्मेति पूर्ववत् ॥

---

[1] बृ. ५-७-२३. [2] मु. १-१-५, ६.

भाव: । मुण्डकोपनिषदि अक्षरविद्याप्रकरणे तद्विद्याप्रतिपाद्यमक्षरशब्दवाच्यमुपक्रम्य, [1] "यत्तदद्रेश्यं" इत्यारभ्य, [1] "धीराः" इत्यन्तेन यच्छब्देन तदेवाक्षरं परामृश्य, तस्य सर्वभूतोपादानकारणत्वमुक्त्वा, [2] "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति। यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् संभवतीह विश्वम्" इति ऊर्णनाभ्यादिदृष्टान्तैः भूतयोनित्वमुपपाद्य, अनन्तरं [3] "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः । तस्मादेतत् ब्रह्म नामरूपमन्नं च जायते" इति तदनन्तरमन्त्रे प्रकृतस्याक्षरस्य सर्वज्ञत्वमभिधाय, [4] "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः" इति मन्त्रे तस्याक्षरपुरुषस्य दिव्यपुरुषत्वं, [5] "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" इति मन्त्रे प्राणमनःप्रभृतिजनकत्वं, [6] "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा" इत्यत्र सर्वभूतान्तरात्मत्वं इत्यादयो धर्मा उक्ताः । तत्र [4] "दिव्य पुरुषः" इत्यनेन [7] "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इति मन्त्रोक्तो दिव्यपुरुषः प्रत्यभिज्ञायते । स च दिव्यपुरुषो लक्ष्मीपतिरिति उत्तरनारायणैकार्थ्यात् अवगम्यते । एवं [5] "एतस्माज्जायते प्राण" इत्यनेन [8] "नारायणात् प्राणो जायते मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" इति नारायणोपनिषदि प्राणमनःप्रभृतिजनकत्वेन अभिहितस्य नारायणस्य प्रत्यभिज्ञानेन [7] "एतस्मात्" इत्यत्र एतच्छब्दार्थस्य नारायणत्वमवगम्यते । [6] "अग्निर्मूर्धा" इति मन्त्रे

---

[1] मु. १-१-६. [2] मु. १-१-८ [3] मु १-१-१० [4] मु. २-१-२. [5] मु. २-१ ३. [6] मु २-१-४ [7] तै आर. [8] नारा. अथर्व.

[1]"एप सर्वभूतान्तरात्मा" इत्यनेन [2]"एप सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" इति सुबालोपनिषद्वाक्यप्रत्यभिज्ञापनेन 'एप' इत्येतच्छब्दार्थस्य नारायणत्वमवगम्यते। अत एतैः प्रत्यभिज्ञापकैः धर्मैः अक्षरविद्यावेद्यं भूतयोनिरक्षरं श्रीनिवासापरनामधेयं नारायणाख्यं परं ब्रह्मैवेति निर्धार्यत इति ॥

## पूर्वपक्षः।

[3]"यत्तदद्रेश्यमग्राह्यं" इत्यत्र अदृश्यार्थकेन 'अद्रेश्य'पदेन दृश्यस्यावस्थान्तरापन्नता आदिति प्रतीयते। ततश्च रूपवत्त्वेन यत् पृथिव्यादिरूपं दृश्यं अभूत् तदेव रूपापगमेन अदृश्यस्वरूपावस्थाप्राप्तया अदृश्यमभूत् इति प्रतीत्या, अव्यक्तं प्रधानमेव इह 'अदृश्य'शब्देन उच्यते। चेतनधर्मश्चात्र न कश्चिदपि श्रूयते। अतोऽदृश्यत्वादिगुणकतयोक्तमक्षरं प्रधानमेव। उत्तरत्र [4]"अक्षरात् परत. पर." इत्यत्र 'परतोऽक्षरात् पर' इत्यन्वयात्, स्वकार्यवर्गापेक्षया परादक्षरात्–अव्यक्तात् परो जीव उच्यते। एवं सति "यया तदक्षरमधिगम्यते" इति, [4]"अक्षरात् परत· पर" इति चोभयत्राक्षरशब्दार्थयोर्वैरूप्यमपि सङ्गच्छते। अत प्रधानपुरुषावेवात्र प्रतिपाद्येते, न ब्रह्म इति ॥

## सिद्धान्तः।

अदृश्यत्वादिमत्तया प्रतिपादितस्याक्षरस्य [5]"यः सर्वज्ञ सर्ववित्" इति मन्त्रे सर्वज्ञत्वरूपचेतनधर्मस्य प्रतिपादनात्, नेदमक्षरमव्यक्तम्। एवमुत्तरत्र [4]"अक्षरात् परतः पर·" इत्यत्र 'परतोऽक्षरात्' इत्यन्वयाङ्गीकारे स्वारस्यभङ्गप्रसङ्गात्, 'परत' इत्यस्य प्रयोजनालाभाच्च [4]"अक्षरात् परत" इत्यत्र परत्वस्यावधिसाकाङ्क्षतया 'अक्षरात्' इत्यस्य

[1] मु. २-१ ४. [2] सुबाल [3] मु. १-१-६ [4] मु. २-१-२. [5] मु १-१-१०.

आकाङ्क्षितावध्युपस्थापकत्वस्य औचित्याच्च "'अक्षर'शब्दनिर्दिष्टात् प्रधानात् परो यो जीवः तस्मादपि परो योऽक्षरपुरुषः" इत्यर्थस्यैव ग्राह्यत्वात् [1]"अक्षरात् परतः परः" इत्यनेन न जीवात्मा प्रतिपाद्यते, अपि तु परमात्मैव । किञ्च अस्याक्षरपुरुषस्य [2]"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा" इत्यस्मिन् मन्त्रे द्युलोकप्रभृतिपृथिव्यन्त त्रैलोक्यशरीरकत्वमुपदिश्यते । तच्च जीवात्मनो न घटते । अतोऽप्ययमक्षरपुरुषः परमात्मैव इति ॥

इति अदृश्यत्वादिगुणकाधिकरणम् ॥ ५ ॥

१७ ॥ वैश्वानराधिकरणम् ॥ ६ ॥

पूर्वाधिकरणे [3]"रूपोपन्यासाच्च" इति सूत्रे त्रैलोक्यशरीरकत्वेन परमात्मत्वं समर्थितम् । तत् त्रैलोक्यशरीरकत्वं परमात्मनोऽन्यस्यापि दृश्यत इत्याक्षेपपरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## ॥ वैश्वानरः साधारणशब्दविशेषात् ॥ १-२-२५ ॥

[स्मर्यमाणमनुमानं स्यादिति ॥ २६ ॥

शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते ॥ २७ ॥

अत एव न देवता भूतं च ॥ २८ ॥

[1] मु २ १ २ [2] मु २ १ ४ [3] शारीर सू १ २ २४

साक्षादप्यविरोधं जैमिनिः ॥ २९ ॥
अभिव्यक्तेरित्याश्मरथ्यः ॥ ३० ॥
अनुस्मृतेर्बादरिः ॥ ३१ ॥
संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३२ ॥
आमनन्ति चैनमस्मिन् ॥ ३३ ॥]

वैश्वानरः—वैश्वानरशब्दवाच्य., सः—परमात्मा नारायणः,साधारण-स्य—अग्न्यादिषु प्रयुज्यमानस्य वैश्वानरशब्दस्य, तदुपस्थाप्यस्येति यावत्, विशेषात्—परमात्मासाधारणैर्धर्मैर्विशेष्यमाणत्वात् इति सूत्रार्थः ॥

वैश्वानरात्मविद्या द्युप्रभृतीनां तदङ्गताकथनात् ।
यदिति व्यनक्ति तमिमं तद्ब्रह्म श्रीनिवासनाम भजे ॥ १८ ॥

इति कौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य श्रीदेशिकाचार्यस्य कृतिषु
शारीरकाधिकरणरत्नमालायां
प्रथमाध्यायस्य द्वितीयः पादः ॥

---

तमिमं—वैश्वानरात्मानमित्यर्थ. ।

भावः । वैश्वानरविद्यायां वैश्वानरात्मनः [1] "मूर्धा त्वेष आत्मन" इति द्युलोकः शिरस्त्वेन, [2] "चक्षुस्त्वेतदात्मन" इति आदित्यो नेत्रत्वेन, [3] "प्राणस्त्वेष आत्मन" इति वायुः प्राणत्वेन, [4] "सन्देहस्त्वेष आत्मन" इति आकाशो मध्यकायत्वेन, [5] "वस्तिस्त्वेष आत्मन" इत्यापो वस्तित्वेन [6] "पादौ त्वेतावात्मन" इति पृथिवी पादत्वेन चाभिधीयन्ते । मुण्डको-पनिषदि [7]"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।

---

[1] छा. ५-१२-२　[2] छा. ५-१३-२　[3] छा. ५-१४-२.　[4] छा. ५-१५-२.
[5] छा. ५-१६-२.　[6] छा. ५-१७-२.　[7] मु. २-१-४.

वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा" इति मन्त्रे द्युमूर्धत्वादिकं यद्रूपमाम्नातं तदेवेदं वैश्वानरात्मन इहाभिधीयमानं रूपमिति प्रत्यभिज्ञायते। तत्र "पृथिवी ह्येष सर्वभूतान्तरात्मा" इत्यनेन [1]"एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" इति सुबालोपनिषद्वाक्यप्रत्यभिज्ञानेन [2]"अग्निर्मूर्धा" इत्यादिमन्त्रश्रुतद्युमूर्धत्वादिरूपवतो नारायणत्वावगमात्, स श्रीनिवासापरनामधेयो नारायण एवायं द्युमूर्धत्वादिमान् वैश्वानरात्मेति निर्धार्यत इति॥

अत्र [3]"सन्देहस्तु आत्मन" इत्यत्र 'सन्देह'शब्देन पूर्वोत्तरकाययोः क्व प्रविष्ट इति सन्दिह्यमानत्वात् मध्यकाय उच्यते। तेन च नाभिदेशो विवक्षितः। "अग्निर्मूर्धा" इति मन्त्रे 'अग्नि'-शब्देन द्युलोक उच्यते। छान्दोग्ये वैश्वानरविद्याप्रकरणे, [4]"को न आत्मा किं ब्रह्म" इत्युपक्रम्य, "आत्मानमेवैनं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहि" इति [5]"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति प्रश्नप्रतिवचने श्रूयेते॥

अत्रैवं पूर्वपक्षः—अत्र 'वैश्वानरशब्दार्थः परमात्मा' इति न निर्णेतुं शक्यम्। वैश्वानरशब्दस्य अग्नौ, महाभूततृतीये, देवताविशेषे, परमात्मनि च चतुर्ष्वर्थेषु प्रयुज्यमानत्वेन, तस्य साधारणत्वात्। न च उपक्रमे [4]"को न आत्मा किं ब्रह्म" इति 'ब्रह्म'शब्दश्रुत्या उत्तरवाक्यस्थवैश्वानरशब्दार्थः परमात्मा इति निर्णेतुं शक्यमिति वाच्यम्। वाजसनेयके [6]"वैश्वानरं ह वै भगवान् संप्रति वेद, तं नो ब्रूहि" इत्युपक्रमे साधारणस्य वैश्वानरशब्दस्य श्रवणात्, उत्तरत्र

[1] सुबाल. ७. [2] मु. २-१-४. [3] छा. ५-१८-२. [4] छा. ५-११-१. [5] ५-१८-१. [6] वाजसे.

[1]"स एषोऽग्निर्वैश्वानर" इति वैश्वानरशब्दस्य अग्निशब्दसामानाधिकरण्याच्च जाठराग्नेरपि प्रतीत्या, ब्रह्मशब्दोपक्रममात्रेण परमात्मत्वनिर्णयायोगात् इति॥

सिद्धान्तः ।

उपक्रमे [2]"को न आत्मा" इति सर्वेषां जीवात्मनां य आत्मा तस्य जिज्ञासितत्वं प्रतीयते । एवं [3]"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते, स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु अन्नमत्ति" इति वैश्वानरोपासकस्यानवधिकातिशयानन्दरूपतया निरतिशयभोग्यभूतब्रह्मानुभवः फलं श्रूयते । 'सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेषु आत्मसु वर्तमानं यदन्नं—निरतिशयभोग्यभूतं परं ब्रह्म, तदत्ति—तदनुभवति' इति तदर्थः । अत्र 'अन्नं' इत्यनेन 'अद्यते—अनुभूयते' इति व्युत्पत्त्या [4]"रसो वै सः" इत्यादिश्रुतिषु निरतिशयभोग्यत्वेन श्रुतं परं ब्रह्माभिधीयते; न तु प्राकृतान्नं, तस्य मुमुक्षून् प्रति हेयत्वात् ॥

[5]"तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेत, एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति सर्वपाप्मप्रदाहो वैश्वानरात्मोपासनफलं श्रूयते । द्युप्रभृतिपृथिव्यन्तत्रैलोक्यशरीरकत्वं च वैश्वानरात्मनः श्रूयते । अतः सर्वेषां आत्मत्वं, ब्रह्मप्राप्तिसाधनोपासनविषयत्वं, सर्वपाप्मप्रदाहफलकोपासनविषयत्वं, त्रैलोक्यशरीरकत्वं इत्येतैः धर्मैः वैश्वानरात्मा परमात्मेति निर्णीयते ॥

ननु वाजसनेयके, [6]"स एषोऽग्निर्वैश्वानर" इति वैश्वानरशब्दस्याग्निशब्दसामानाधिकरण्येन [7]"हृदयं गार्हपत्य" इत्याद्याग्नित्रयपरिकल्पनासिद्धहोमाधारत्वेन [8]"तद्यद्भक्तं प्रथममागच्छेत्" इत्यादिना

[1] वाजस [2] छा. ५-११-१ [3] छा. ५-१८-१. [4] तै. आन ७.
[5] छा. ५-२४-३. [6] वाजसे. (प्रश्न. १-७ अर्थनिर्देशोऽयम्)। [7] छा. ५-१८-२.
[8] छा. ५-१९-१.

आम्नातप्राणाहुत्याधारत्वेन [1]"स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद" इत्यत्र उक्तेन शरीरान्तःप्रतिष्ठितत्वेन च वैश्वानरस्य जाठराग्नित्वमपि प्रतीयते । अतोऽयं वैश्वानरः परमात्मैवेति न निर्णेतुं शक्यमिति चेत् ।

नैव—त्रैलोक्यशरीरकत्वस्य [2]"स एषोऽग्निर्वैश्वानरो यत्पुरुषः" इति श्रुतनिरुपाधिकपुरुषशब्दवाच्यत्वस्य च जाठराग्नावसंभवात्, जाठराग्निविषयतया प्रतीयमानोऽयमग्निशब्दः न केवलं जाठराग्निमात्रपरः, अपि तु जाठराग्निशरीरकपरमात्मपरः । पुरुषशब्दो हि निरुपाधिकं परमात्मानमेवाचष्टे, [3]"भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे सनातने ॥" इति स्मरणात् । ततश्च जाठराग्निशरीरकत्वेन परमात्मन उपासनमत्र विधित्सितमिति न काप्यनुपपत्तिः ॥

एतेन देवताया महाभूततृतीयस्य च प्रक्तवैश्वानरत्वशङ्का निरस्ता । तयोस्त्रैलोक्यशरीरकत्वनिरुपाधिकपुरुषशब्दवाच्यत्वाद्यसंभवात् । अग्निशब्दस्य 'अग्रं नयति' इति व्युत्पत्त्या अग्रप्रापकत्वरूपगुणयोगेन साक्षात् परमात्मवाचकत्वमपि संभवति । अतो नाग्निशब्दसामानाधिकरण्यं वैश्वानरस्य परमात्मत्वनिर्णयविरोधीति जैमिनिराचार्यो मन्यते ॥

स्वतोऽपरिच्छिन्नस्य परमात्मनः [4]"यस्त्वेतमेवं प्रादेशमात्रमभिविमानं वैश्वानरमुपास्ते" इति द्युप्रभृतिपृथिव्यन्तैः प्रदेशैः परिच्छिन्नत्वोक्तिः उपासकस्य बुद्ध्यारोहार्था । द्युप्रभृतीनां मूर्धाद्यवयवत्वकल्पनं तु तथोपासनार्थम् । [5]"उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः" इत्यादिना उपासकस्य उरःप्रभृतीनां वेद्यादित्वकल्पनं तु वैश्वानरात्मोपासकेनाहरहः क्रियमाणायाः प्राणाहुतेः परमात्माराधनभूताग्निहोत्रत्वसंपादनार्थम् ॥

---

[1] वाजस [2] [3] वि पु [4] छा ५ १८ १ [5] छा ५ १८ २

ततश्च वैश्वानरात्मोपासकः स्वशिरःप्रभृतिपादान्तावयवेषु परमात्मशिरःप्रभृतिपादान्तावयवभूतद्युलोकत्वादीन् अनुसन्धाय, द्युमूर्धत्वादिविशिष्टं वैश्वानरं परमात्मानं स्वस्मिन् सन्निहितं ध्यात्वा, स्वीयान् उरःप्रभृतीनवयवान् अग्निहोत्राङ्गभूतवेद्यादीन् ध्यात्वा, अहरहः क्रियमाणां प्राणाहुतिं परमात्माराधनभूताग्निहोत्रं ध्यात्वा, एवंभूताग्निहोत्रेण परमात्मानं अहरहराराधयेत् इति श्रुत्यर्थः । तदिदमेवंविधाग्निहोत्रस्य सर्वपाप्मप्रदाहादिरूपफलश्रवणात् अवसीयत इति ॥

इति वैश्वानराधिकरणम् ॥ ६ ॥

इति कौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य श्रीदेशिकाचार्यस्य कृतिषु
शारीरकाधिकरणरत्नमालाप्रकाशे
प्रथमाध्यायस्य द्वितीयः पादः ॥

अथ प्रथमाध्यायस्य तृतीयः पादः ॥

१८ ॥ द्युभ्वाद्यधिकरणम् ॥ १ ॥

अदृश्यत्वादिगुणकाधिकरणे प्रस्तुतस्याक्षरपुरुषस्य उपरितनैः कैश्चित् लिङ्गैः जीवत्वशङ्कापरिहारार्थं प्रवृत्तमिदमधिकरणम् । यद्यपि उक्तशङ्का तस्मिन्नेव अधिकरणे परिहर्तुमुचिता, तथापि शङ्कायाः स्पष्टजीवलिङ्गमूलकत्वात् अस्मिन् पादे तद्विचारः ।

## द्युभ्वाद्यायतनं स्वशब्दात् ॥ १-३-१ ॥

[मुक्तोपसृप्यव्यपदेशाच्च ॥ २ ॥
नानुमानमतच्छब्दात्प्राणभृच्च ॥ ३ ॥
भेदव्यपदेशात् ॥ ४ ॥
प्रकरणात् ॥ ५ ॥
स्थित्यदनाभ्यां च ॥ ६ ॥]

द्युभ्वाद्यायतनं–द्युपृथिव्यादीनामाधारत्वेन उच्यमान , स –परमात्मा, स्वशब्दात्–परमात्मासाधारणधर्मवाचिशब्दस्य श्रूयमाणत्वात् इति सूत्रार्थ ॥

द्युपृथिव्याद्याधार कथयन्त्यमृतस्य सेतुमात्मानम् ।
यदिति व्यनक्ति विद्या तद्ब्रह्म श्रीनिवासनाम भजे ॥ १९ ॥

अर्थः । द्युपृथिव्यादीना ऊर्ध्वाधोलोकाना आधारतया उच्यमान आत्मानं, अमृतसेतु–मोक्षप्रापक कथयन्ती मुण्डकोक्ताक्षरविद्या यदिति श्रीनिवासापरनामधेय ब्रह्मेति, व्यनक्ति–प्रकाशयति, तद्ब्रह्मेति पूर्ववत् ॥

भावः । मुण्डकोपनिषदि अक्षरविद्याप्रकरणे [1]" यस्मिन् द्यौ पृथिवी चान्तरिक्षमोत मन सह प्राणैश्च सर्वै । तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतु " इति श्रूयते । अत्र द्युपृथिव्याद्याधारत्वेनो च्यमानस्य आत्मनोऽमृतसेतुत्वमुक्तम् । तच्चामृतसेतुत्व अमृतत्वप्रापकत्वरूप [2]" तमेव विद्वानमृत इह भवति " इति परमपुरुषासाधारणत्वेन पुरुषसूक्ते प्रतिपादितम् । अत तादृशधर्मवत्त्वात् अयं द्युपृथिव्याद्याधार पुरुष श्रीनिवासापरनामधेय परं ब्रह्मेति निर्धार्यत इति ॥

[1] मु २ २ ५ [2] तै आ ३ १२

पूर्वपक्षः ।

[1]"यस्मिन् द्यौः" इत्यस्मिन् वाक्ये द्युपृथिव्याद्याधारस्य मनःप्राणेन्द्रियसंबन्धः, [2]"अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमानः" इत्यनन्तरवाक्ये नाडीसंबन्धः, शरीरान्तस्सञ्चारः, देवमनुष्यादिभेदेन बहुधा जायमानत्वं च प्रतिपाद्यते । तदेतत् सर्वं जीवस्यैव धर्मः । अतो द्युपृथिव्याद्याधारत्वेन उच्यमान आत्मा जीव एव । तस्य द्युपृथिव्याद्याधारत्वं जीवकर्ममूलकत्वात् द्युभ्वादिसृष्टेः तदीयादृष्टाश्रितत्वाभिप्रायतया कथञ्चिदुपपादनीयम् । न चास्य प्रकरणस्य परमात्मविषयतया, अदृश्यत्वादिगुणकाधिकरणे निर्णीततया, कथं अस्य वाक्यस्य जीवात्मविषयत्वं इति वाच्यम् । प्रकरणात् बलीयसा स्पष्टजीवलिङ्गेन अस्य वाक्यस्य जीवविषयकत्वावगमात् प्रकरणं भङ्क्त्वा, जीवविषयकत्वमवश्यमाश्रयणीयमिति ॥

सिद्धान्तः ।

[1]"यस्मिन् द्यौः" इत्यत्र द्युपृथिव्याद्याधारत्वेन श्रुतस्यात्मनो [1]"अमृतस्यैष सेतुः" इत्यनेन मोक्षप्रापकत्वरूपममृतसेतुत्वं प्रतिपाद्यते । तेन च मोक्षप्रदत्वं लभ्यते । तच्च परमात्मासाधारणं [3]"तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते" इति श्रुतेः । एवं [1]"तमेवैकं जानथात्मानं" इत्यत्र श्रुतमात्मत्वं द्युपृथिव्याद्युपलक्षितसर्वजगदात्मत्वरूपमिति स्वरसतः प्रतीयते । तच्च नियन्तृतया सर्वस्यान्तर्व्याप्तत्वरूपं, आत्मशब्दस्य 'आप्नोति इति आत्मा' इति व्युत्पादितत्वात् । तदपि परमात्मासाधारणम्, [4]"अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" [5]"अन्तः प्रविष्टः शास्ता

[1] मु. २-२-५. [2] मु. २-२-६ [3] तै. आर. ३-१२. [4] तै. नारा. २-१३. [5] तै. आर. ११-२०.

जनानां सर्वात्मा" इत्यादिश्रुतेः। एवं [1]"यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं" इत्युत्तरमन्त्रे अस्य द्युपृथिव्याद्याधारस्य आत्मनः संसारबन्धविनिर्मुक्तैः प्राप्यत्वं श्रूयते। एवं [2]"समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इति मन्त्रे, [3]"तमेवैकं जानथात्मानं अमृतस्यैष सेतुः" इत्यत्र अमृतत्वप्राप्तये ज्ञेयत्वेनोक्तस्य द्युपृथिव्याद्याधारस्यात्मनः संसारबन्धेन शोचतो जीवात् भेदो व्यपदिश्यते। एवं [4]"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" इत्यस्मिन् मन्त्रे द्वयोरात्मनोः एकस्य कर्मफलभूतसुखदुःखभोक्तृत्वं, अन्यस्य कर्मफलभोगस्पर्शं विनैव सर्वदा सर्वज्ञत्वादिगुणवत्तया द्योतमानत्वं च प्रतिपाद्यते। तेन तयोरेकस्य हेयसंबन्धार्हत्वं, अन्यस्य तदनर्हत्वं च प्रतीयते। तत्र कर्मफलभोगं विना दीप्यमानत्वेन हेयसंबन्धानर्हतया प्रतीयमानः परमात्मैव मुक्तये ज्ञेयत्वेनोच्यमानोऽयं द्युपृथिव्याद्यायतनमात्मा भवितुमर्हति। प्रकरणं चेदं [5]"यद्भूतयोनिं परिपश्यन्ति धीराः" इति भूतयोन्यक्षरपुरुषविषयं इत्यदृश्यत्वादिगुणकाधिकरणे निर्णीतम्। तदेवं सर्वात्मत्वस्य, मोक्षप्रदत्वस्य, मुक्तप्राप्यत्वस्य, जीवादन्यत्वस्य, हेयसंबन्धानर्हत्वस्य च श्रवणात्, भूतयोन्यक्षरपुरुषस्य परमात्मन प्रकृतत्वाच्च, अयं द्युपृथिव्याद्याधारभूत आत्मा परमात्मैव, न जीवः। [6]"मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" इति श्रीगीतासु सर्वाधारत्वेन स्मृतस्य परमात्मनो मनःप्राणेन्द्रियाधारत्वोपपत्तेः, [7]"सन्ततं सिराभिस्तु लम्बत्याकोशसन्निभं" इत्यादिना [7]"तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः" इत्यन्तेन तस्य

---

[1] मु. ३-२-८. [2] श्वे. ४-७ मु. ३-१-२. [3] मु २-२-५ [4] श्वे. ४-६. मु. ३-१-१. [5] मु. १-१-६. [6] गीता ७-७. [7] तै. नारा. २-१३.

नाड्याधारहृदयदेशस्थितत्वोक्त्या, [1]"अरा इव रथनाभौ संहता यत्र नाड्यः" इत्युक्तनाड्याधारदेशस्थत्वोपपत्तेः, [2]"अजायमानो बहुधा विजायते" इत्यत्र स्वेच्छया देवमनुष्यादिसजातीयतया जायमानत्वेन श्रुतस्य तस्य बहुधा जायमानत्वोपपत्तेश्च, द्युपृथिव्याद्याधारत्वेन श्रूयमाणोऽयमात्मा परमात्मैवेति निर्धार्यते ॥

अत्र [3]"मुक्तोपसृप्यव्यपदेशाच्च," [4]"भेदव्यपदेशात्" [5]"स्थित्यदनाभ्यां च" इति सूत्रत्रये, प्रथमेन मुक्तिदशायां जीवात्मपरमात्मनोः प्राप्तृप्राप्यभावस्य भेदनियतस्य श्रुतौ व्यपदिश्यमानतया भेदः सूत्रितः; द्वितीयेन श्रुतौ तयोः साक्षात् स्वरूपभेदव्यपदेशः सूत्रितः; तृतीयेन तयोः स्वरूपैक्यविरुद्धं हेयसंबन्धार्हत्वतदनर्हत्वरूपस्वभाववैलक्षण्यं सूत्रितम् । अनेन [6]"स यो हैतत् परं ब्रह्म वेद ब्रह्मैव भवति" इति मुण्डकोपनिषदुपसंहारवाक्यस्य जीवस्य ब्रह्मभावापत्तिर्मुक्तिः इत्येतदर्थपरताभ्रमो निरस्तः । मुण्डकोपनिषदि [7]"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते" इति मन्त्रे, जीवात्मपरमात्मनोर्हेयसंबन्धार्हत्वतदनर्हत्वरूपस्वभाववैलक्षण्यं, [8]"समाने वृक्षे पुरुषो निमग्नः" इति तदनन्तरमन्त्रे तथाविधस्वभाववैलक्षण्यकृतं तयोः स्वरूपभेदं, तृतीयमुण्डकद्वितीयखण्डान्ते [9]"यथा नद्यः स्यन्दमानाः समुद्रे" इति मन्त्रे मुक्तिदशायां जीवात्मपरमात्मनोः प्राप्तृप्राप्यभावाभिधानसिद्धं भेदं चोपदिश्य, अनन्तरं [10]"ब्रह्म वेद ब्रह्मैव भवति" इत्यनेन मुक्तिदशायां जीवब्रह्मणोरैक्यापत्तिप्रतिपादने, पूर्वोत्तरमन्त्राणां परस्परविरोधप्रसङ्गेन, [10]"ब्रह्म वेद ब्रह्मैव भवति" इति वाक्यमन्यपरं इति सूत्रकारैः स्वाभिप्रायस्य स्पष्टीकरणात् ॥

[1] मु. २-२-६. [2] तै. आर. ३-१३. [3] शा. सू. १-३-२. [4] शा. सू. १-३-४.
[5] शा. सू. १-३-६. [6] मु. ३-२-९. [7] श्वे. ४-६. मु. ३-१-१.
[8] श्वे. ४-७. मु. ३-१-२. [9] मु. ३-२-८. [10] मु. ३-२-९.

न च सर्वव्याप्तस्य ब्रह्मण प्राप्यत्वासंभवात्, मुक्तिदशायां तस्य प्राप्यत्वाभिधायकश्रुतेरन्यपरत्वेन नेयतया न विरोध इति वाच्यम्। [1]"परात् परं पुरुषमुपैति दिव्यं" इति श्रुतौ 'दिव्य' इति द्युसंज्ञकलोकविशेषस्थत्वोपस्थापकेन प्राप्यपुरुषविशेषणेन लोकविशेषस्थस्य तस्य प्राप्यत्वोपपादनेन मुख्यप्राप्तिरेव श्रुत्या विवक्षितेति मुख्यप्राप्यत्वं श्रुत्यर्थं [2]"मुक्तोपसृप्यव्यपदेशाच" इति सूत्रयत सूत्रकारस्य तात्पर्यावगमात्। न च द्युसंज्ञकलोकविशेषस्य तत्र परमात्मनो विग्रहविशेषेण अवस्थानस्य चाप्रामाणिकत्वेन श्रुतेरुक्ताभिप्रायवर्णनं न युक्तमिति वाच्यम्। मुण्डके [3]"तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्ष्यचर्यां चरन्त। सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा" इति मन्त्रे लोकविशेषे विग्रहविशेषेणावस्थितस्य परमात्मन सूर्यमण्डलोपलक्षितार्चिरादिमार्गेण विधूतपुण्यपापैर्मुक्तैः प्राप्तव्यमिधानेन परमात्मनो लोकविशेषे विग्रहविशेषेणावस्थानस्य उक्तोपनिषद्येवोक्तत्वात्। न च 'अयं लोक सत्यलोक, तत्रस्थश्च हिरण्यगर्भ, तस्यापरविद्यानिष्ठै प्राप्तिरत्राभिधीयते, न तु साक्षात् मुक्ति' इति वाच्यम्। तत्र अमृतत्वाव्ययात्मत्वविशेषणयो द्विपरार्धकालमात्रावस्थायिनि कर्मकृतोत्पत्त्यादिविकारवत्तया श्रुते हिरण्यगर्भेऽनुपपन्नत्वेन मन्त्रस्य तत्परत्वायोगात्। [4]"ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम्। ब्रह्मलोकमतिक्रम्य तेन याति परां गतिं" इत्यर्चिरादिना मार्गेण प्रस्थितस्य सत्यलोकाख्यचतुर्मुखलोकमतिक्रम्य, तदूर्ध्वं परगति 'शब्दितस्थानविशेषप्राप्तिप्रतिपादकयाज्ञवल्क्यस्मृतिविरोधाच्चेति सिद्धं इति ॥

इति द्युभ्वाद्यधिकरणम् ॥ १ ॥

---

[1] मु ३ २ ८ [2] ना सू १ ३ २ [3] मु १ २ ११ [4] याज्ञ प्रा १६७

१९ ॥ भूमाधिकरणम् ॥ २ ॥

पूर्वाधिकरणे परमात्मप्रकरणविच्छेदाभावात्, द्युपृथिव्याद्याधारस्य परमात्मत्वं साधितम्। तद्वत् प्रकरणाविच्छेदात्, 'भूमा जीवः स्यात्' इति शङ्कां परिहर्तुं प्रवृत्तमिदमधिकरणम् ॥

## भूमा संप्रसादादध्युपदेशात् ॥ १-३-७॥

[धर्मोपपत्तेश्च ॥ ८ ॥]

भूमा-अनल्पसुखत्ववान्, स - परमपुरुषः, संप्रसादात्—जीवात्मनः, अधि—अधिकतया अर्थान्तरत्वेन उपदिश्यमानत्वात् इति सूत्रार्थः ॥

प्राणपदोक्ताज्जीवादर्थान्तरमवगमय्य भूमानम्।
यदिति व्यनक्ति विद्या तद्ब्रह्म श्रीनिवासनाम भजे ॥ २० ॥

अर्थः। भूमविद्या भूमानं प्राणपदेन निर्दिष्टात् जीवात् अन्य इति बोधयित्वा, यत् श्रीनिवासापरनामधेयं ब्रह्मेति बोधयति, तद्ब्रह्मेति पूर्ववत्॥

भावः। छान्दोग्ये भूमविद्याप्रकरणे आत्मस्वरूपजिज्ञासयोपसन्नाय नारदाय सनत्कुमारेण उत्तरोत्तरप्रश्नप्रतिवचनक्रमेण पूर्वस्मात् पूर्वस्मात् उत्तरोत्तरमधिकस्योपदेशप्रकरणे, [1]"अस्ति भगव आशाया भूय" इति प्रश्नस्य [2]"प्राणो वा आशाया भूयान्" इति प्रतिवचनं दृश्यते। तत्र'प्राण' शब्दनिर्दिष्टस्य हिंसाकरणे निन्दाश्रवणात्, हिंसायोग्य प्रत्यगात्मैव प्राण-शब्दनिर्दिष्ट इति निश्चीयते। एवं प्राणमुपदिश्य, तदुत्तरं [3]"स वा एष एवं पश्यन्" इत्यादिना प्राणोपासकस्य स्वोपास्यवस्तूत्कर्षनिमित्तकमतिवादित्व

[1] छा ७-१४-२ [2] छा ७-१५ १ [3] छा ७-१५ ४

उक्त्वा, [1]"एप तु वा अतिवदति यः सत्येनातिवदति" इत्यादिना अतिवाद्यन्तरं तस्यातिवदननिमित्तं 'सत्य'शब्दवाच्यं ब्रह्म चोपक्षिप्य, [2]"सुखं त्वेव विजिज्ञासितव्यं" इति तस्य ब्रह्मणः सुखरूपताया ज्ञातव्यत्वमुक्त्वा, [3]"भूमा त्वेव विजिज्ञासितव्य." इत्यनेन तस्य विपुलसुखरूपता ज्ञातव्या इत्युपदिश्यते। अत्र अपरिच्छिन्नानन्दरूपतावाचिना 'भूम'शब्देन आनन्दमयविद्याप्रकरणस्थे [4]"यदेप आकाश आनन्दो न स्यात्" इत्यस्मिन् वाक्ये 'आकाश आनन्द' इत्यनेन अपरिच्छिन्नानन्दरूपतयोक्तस्यानन्दमयस्य पुण्डरीकाक्षस्य प्रत्यभिज्ञानात्, अयं भूमात्मा पुण्डरीकाक्षः श्रीनिवासापरनामधेयः परमात्मेति निर्धार्यत इति ॥

## पूर्वपक्षः ।

नारदाय सनत्कुमारेण आत्मोपदेशप्रकरणे 'प्राण'शब्दवाच्यं प्रत्यगात्मानं आशातोऽधिकमुपदिश्य, तदनन्तरं ततोऽधिकस्य कस्यचिदनुपदेशात्, तत्रैव आत्मोपदेशसमाप्तिरिति निश्चीयते। अतो जीवप्रकरणाविच्छेदात्, अनन्तरमुपदिष्टो भूमात्मा प्रत्यगात्मैवेति निश्चीयत इति ॥

## सिद्धान्तः ।

[5]"प्राणो वा आशाया भूयान्" इति प्रत्यगात्मन आशातोऽधिकत्व उक्त्वा, तदुपासकस्य स्वोपास्यवस्तुन उत्कृष्टताप्रयुक्तमतिवादित्वमभिधाय, [6]"एप तु वा अतिवदति" इति 'तु'शब्देन अतिवाद्यन्तरमुपक्षिप्य, [3]"यः सत्येन अतिवदति" इति 'सत्य'शब्दवाच्यब्रह्मोपासकस्य ततोऽप्यतिशयितातिवादितामभिधाय, तस्यातिवादितानिमित्तभूतं 'सत्य'शब्दवाच्यं प्रत्यगात्मनोऽर्थान्तरं ब्रह्म [3]"सत्यं त्वेव विजिज्ञासितव्यं" इत्युपदिष्टम् ॥

[1] छा ७-१६-१. [2] छा ७-२२ [3] छा ७-२३.
[4] तै. अन. ७ [5] छा. ७-१५-१ [6] छा. ७-१६-१.

अत्र 'सत्य'शब्दनिर्दिष्टं परं ब्रह्म, [1]"सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिषु 'सत्य'शब्दस्य ब्रह्मणि प्रसिद्धेः, स्वमहिमप्रतिष्ठितत्वरूपानन्याधारत्वोपपत्तेश्च । अतो जीवप्रकरणस्य विच्छिन्नत्वात्, उत्तरत्र ब्रह्मप्रकरणस्य'भूम' शब्दवाच्यो न प्रत्यगात्मा, अपि तु परमात्मैवेति ॥

इति भूमाधिकरणम् ॥ २ ॥

---

२० ॥ अक्षराधिकरणम् ॥ ३ ॥

पूर्वाधिकरणे भूम्नः स्वमहिमप्रतिष्ठितत्वेन परब्रह्मत्वं प्रसाधितम् । ब्रह्मव्यतिरिक्तस्यापि स्वप्रतिष्ठितत्वं श्रूयत इति शङ्कापरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## अक्षरमम्बरान्तधृतेः ॥ १-३-९ ॥

[सा च प्रशासनात् ॥ १० ॥

अन्यभावव्यावृत्तेश्च ॥ ११ ॥]

अक्षरशब्दवाच्यः, स परमपुरुषः, अम्बरस्य भूताकाशस्य, अन्तः–कारणभूतं यत् प्रधानं, तद्धारकत्वस्योच्यमानत्वात् इति सूत्रार्थः ॥

अक्षरमस्थूलमनण्वित्याद्युक्तं प्रशासितृत्वाद्यैः ।
**यदिति व्यनक्ति विद्या तद्ब्रह्म श्रीनिवासनाम भजे ॥ २१ ॥**

अर्थः । बृहदारण्यके गार्गिब्राह्मणे [2]"अस्थूलमनणु" इत्यादौ अक्षरशब्दनिर्दिष्टं वस्तु (कर्म), प्रकृष्टशासनवत्त्वप्रमुखैर्धर्मैः अक्षरविद्या यत् श्रीनिवासापरनामधेयं ब्रह्मेति प्रकाशयति तद्ब्रह्मेति पूर्ववत् ॥

भावस्तु सिद्धान्ते स्पष्टीकरिष्यते ॥

बृहदारण्यके गार्गिप्रश्नस्य प्रतिवचने, [2]"स होवाचैतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायं" इत्यादि श्रूयते ।

---

[1] तै आन १   [2] बृ ५८८

अत्रैव पूर्वपक्ष । अस्थूलत्वादिविशेषितमिदमक्षर प्रधान, मुण्डकोपनिषदि [1]"अक्षरात् परत पर" इत्यादौ 'अक्षर'शब्दस्य प्रधाने प्रयोगदर्शनात् । यद्यपि तत्रैव [2]"यया तदक्षरमधिगम्यत" इत्यत्र 'अक्षर'शब्दस्य परमात्मन्यपि प्रयोगो दृष्ट, तथापि श्रुत्येकसमधिगम्यात् परमात्मनो अनुमानरूपलौकिकप्रमाणगम्यस्य प्रधानस्य शीघ्रबुद्ध्यारोहेण प्रबलत्वात्, [3]"अस्थूल" इत्यादिना स्थूलत्वादीना निषेधस्य तत्रोपपत्तेश्च प्रकृताक्षरशब्देन तदेव ग्रहीतुम् उचितम्, न तु परमात्मा, विलम्बितप्रतीतिकाद‍विलम्बितप्रतीतिकस्य प्रबलताया श्रुतिलिङ्गादिषु दृष्टत्वात् । परमात्मपरत्वे [3]"अस्थूल" इत्यादेरप्रसक्तप्रतिषेधापत्तेश्च । वाय्वादिसर्वविकारकारणस्य आकाशस्याप्याधारभूत कारण किमिति पृष्टे, तस्याधारतयोच्यमानमिदमक्षरमाकाशस्यापि कारणभूत प्रधानमेव भवितुमर्हति इति ॥

## सिद्धान्तः ।

'भूतभविष्यद्वर्तमानरूपकृत्स्नकार्यप्रपञ्चस्याधारभूतो य आकाश , तस्य आधारभूत वस्तु किं' इति गार्गिप्रश्नस्य [3]"एतद्वै तदक्षर गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्व" इत्यादौ "एतस्मिन्नक्षरे आकाश ओतश्च प्रोतश्च" इत्यन्ते याज्ञवल्क्यप्रतिवचने कृत्स्नकार्याधारतयोच्यमान आकाशो न भूताकाशो भवितुमर्हति, कार्यान्तर्गतस्य भूताकाशस्य कृत्स्नकार्याधारत्वासभवात् । अपि तु प्रधानमेव । अत तस्याप्याधारतयोच्यमान अस्थूलत्वादिगुणविशिष्टमक्षर न प्रधानम्, स्वस्य स्वाधारत्वासभवात् । नापि जीव , तस्याक्षरस्य उत्तरत्र प्रशासनेन सर्वधारकत्वस्य, अदृष्टस्यैव सतो द्रष्टृत्वस्य, स्वाज्ञया श्रौतस्मार्तसकलकर्मप्रवर्तकत्वस्य चाभिधानात् । अपि तु प्रधानस्यापि धारक सर्वप्रशासितृ इदमक्षर अन्तर्यामिब्राह्मणसुबालोपनिषत्प्रभृतिषु पृथिव्यादीना तमःशब्दवाच्यप्रधानपर्यन्ताना अवेद्यनया

---

[1] मु २ १ २ [2] मु १ १ ५ [3] बृ ५ ८ ८

अन्तःप्रविश्य नियमनेन धारकतया उच्यमानं श्रीनिवासापरनामधेयं नारायणाख्यं परं ब्रह्मैवेति निर्धार्यत इति ॥

इत्यक्षराधिकरणम् ॥ ३ ॥

२१ ॥ ईक्षतिकर्माधिकरणम् ॥ ४ ॥

पूर्वाधिकरणे [1]"अदृष्टं द्रष्टृ" इत्यनेन ब्रह्मणो दर्शनार्हत्वाभाव उक्तः । तर्हि दृश्यमानत्वेनोच्यमानः पुरुषः परं ब्रह्म न स्यात् इति शङ्कापरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## ईक्षतिकर्म व्यपदेशात्सः ॥ १-३-१२ ॥

ईक्षतिकर्म-ईक्ष्यमाणत्वेनोच्यमानं वस्तु, सः प्रथमाध्यायप्रथमपादे ईक्षत्यधिकरणादिषु जगत्कारणत्वेन निर्णीतः परमपुरुषः, परमपुरुषसाधारणधर्मवत्त्वव्यपदेशात् इति सूत्रार्थः ॥

मुक्तेक्ष्यमाणपुरुषं श्लोकोक्तया सूरिदृश्यमानतया ।
यदिति व्यनक्ति विद्या तद् ब्रह्म श्रीनिवासनाम भजे ॥ २० ॥

अर्थः । मुक्तैः-सर्वकर्मविनिर्मुक्तैः, ईक्ष्यमाणं पुरुषं सूरिभिः दृश्यमानत्वेन श्लोके उक्ततया, विद्या-त्रिमात्रप्रणवविद्या यत् श्रीनिवासापर नामधेयं ब्रह्मेति, व्यनक्ति-प्रकाशयति, तद्ब्रह्मेति पूर्ववत् ॥

भावः । प्रश्नोपनिषदि, [2]"यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत, स तेजसि सूर्ये सम्पन्नः यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै पाप्मना विनिर्मुक्तः सःसामभिरुन्नीयते ब्रह्मलोकं ॥ एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते" इत्यारभ्य, [3]"ऋग्भिरेतं यजुर्भिः अन्तरिक्षं सःसामभिर्यत्तत्कवयो वेदयन्ते । तमोङ्कारेणैवायतनेनान्वेति विद्वान्

---

[1] बृ ५-८-११ [2] प्रश्न ५-५ [3] प्रश्न ५-७

यत्तच्छान्तमजरममृतमभय पर च" इत्यत्र त्रिमात्रप्रणवेन परमपुरुष ध्यायिन सर्वकर्मविनिर्मोकपूर्वक ब्रह्मलोकप्राप्तिमभिधाय, तल्लोकस्थपुरुषविषयकेक्षणमभिहितम् । अत्र ब्रह्मलोकतत्स्थपुरुषविषये श्लोके [1]"यत्तत्कवयो वेदयन्ते" इत्यनेन ब्रह्मलोकस्य कविशब्दनिर्दिष्टसूरिभिर्दृश्यमानत्वाभिधानेन [2]"तद्विष्णो परम पद सदा पश्यन्ति सूरय" इति नित्यसूरिभि सदा दृश्यमानश्रीवैकुण्ठाख्यभगवल्लोकत्वावगमात्, तत्स्थ मुक्तेक्ष्यमाणतयाऽभिहित पुरुष श्रीनिवासापरनामधेयो वैकुण्ठलोकस्थो नारायण एवेति निर्धार्येत इति ॥

पूर्वपक्षः ।

प्रश्नोपनिषदि एकमात्रप्रणवोपासकस्य ऐहिकभोगप्राप्तिं फलमभिधाय, द्विमात्रप्रणवोपासकस्य अन्तरिक्षलोकप्राप्तिं फलमभिधाय, त्रिमात्रप्रणवोपासकस्य प्राप्यतयाऽभिधीयमानो ब्रह्मलोक चतुर्मुखलोक एव भवितुमर्हति, तस्यैव लोकस्य अन्तरिक्षादुपरि वर्तमानत्वात् । त लोक प्राप्तेन पुरुषेण ईक्ष्यमाण पुरुषश्च तल्लोकाधिपतिश्चतुर्मुख एव भवितुमर्हति । अत [1]"परात् पर पुरिशय पुरुषमीक्षते" इत्यत्र ईक्षणकर्मतयाऽभिधीयमान पुरुषश्चतुर्मुख एवेति ॥

सिद्धान्तः ।

सर्वपापविनिर्मुक्तेन ईक्ष्यमाणत्वमस्य पुरुषस्य श्रूयते । चतुर्मुख प्राप्नुवत सर्वकर्मविनिर्मोकासम्भवात्, तदीक्ष्यमाण चतुर्मुखो न भवितुमर्हति । तद्विषयोत्तर-श्लोके [1]"ससामभिर्यत्तत्कवयो वेदयन्ते" इत्यत्र त्रिमात्रप्रणवोपासकस्य प्राप्यतयाऽभिधीयमानस्य लोकस्य 'कवि'शब्दनिर्दिष्ट सूरिभि दृश्यमानत्वाभिधानेन, तल्लोकस्य [3]"तद्विष्णो परम पद सदा पश्यन्ति सूरय" इति श्रुत्यन्तरेण सूरिभिर्दृश्यमानतयाऽभिहितभगवल्लोकत्व गम्यते ।

[1] प्रश्न ५ ७　[2] सुबाल ६　[3] सुबाल ६

तल्लोकाधिपतित्वं च चतुर्मुखस्य न सम्भवति। एवं तल्लोकस्थस्य [1]"यत्तच्छान्तमजरममृतमभयं परं च" इत्युक्ता ये निरुपाधिकशान्तत्वादयो धर्माः तेऽपि चतुर्मुखस्य न सम्भवन्ति ॥

किञ्च अत्र [2]"परात् परं.. पुरुषमीक्षते" इत्यनेन [3]"नामरूपाद्विमुक्तः परात् परं पुरुषमुपैति दिव्यं" इति मुण्डकोपनिषन्मन्त्रोक्तः परात् परः पुरुषः प्रत्यभिज्ञायते। स च नारायण एव इत्यदृश्यत्वादिगुणकाधिकरणे [4]"एतस्माज्जायते प्राण" इति मन्त्रार्थनिरूपणप्रकरणे निरूपितम्। अतः [2]"परात् परं.... .. पुरुषमीक्षते" इति मुक्तेक्षणकर्मतयाऽभिहितो न चतुर्मुखो भवितुमर्हति इति ॥

इति ईक्षतिकर्माधिकरणम् ॥ ४ ॥

---

२२ ॥ दहराधिकरणम् ॥ ५ ॥

पूर्वाधिकरणे पुरिशयस्य परमात्मत्वं साधितम्। पुरिशयस्य भूताकाशे प्रसिद्धाकाशशब्दवाच्यतया अपरमात्मत्वशङ्कानिराकरणार्थं प्रवृत्तमिदमधिकरणम् ॥

## दहर उत्तरेभ्यः ॥ १-३-१३ ॥

[गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १४ ॥
धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १५ ॥
प्रसिद्धेश्च ॥ १६ ॥
इतरपरामर्शात् स इति चेन्नासम्भवात् ॥ १७ ॥
उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १८ ॥

---

[1] प्रश्न ५-७　[2] प्रश्न ५-५　[3] मु. ३-२-८　[4] मुण्ड २-१-३.

अन्यार्थश्च परामर्शः ॥ १९ ॥

अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २० ॥

अनुकृतेस्तस्य च ॥ २१ ॥

अपि स्मर्यते ॥ २२ ॥]

दहरः-दहराकाशः, सः परमपुरुषः; उत्तरेभ्यः-उत्तरवाक्योक्तधर्मैः तथाऽवगमात् इति सूत्रार्थः ॥

अपहतपाप्मत्वाद्यैर्यद्धर्मैर्यदिति दहरमाकाशं ।
विवृणोति दहरविद्या तद्ब्रह्म श्रीनिवासनाम भजे ॥ २६ ॥

अर्थः । छान्दोग्ये [1] "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाश तस्मिन् यदन्तः तदन्वेष्टव्यम्" इत्यादिना आम्नाता दहरविद्या, यद्धर्मैः यस्य श्रीनिवासस्य असाधारणै धर्मैः अपहतपाप्मत्वाद्यै गुणैः, दहरमाकाशं-दहराकाशं, यत्-श्रीनिवासापरनामधेयं ब्रह्मेति, विवृणोति, तद्ब्रह्मेति पूर्ववत् ॥

भावः । उदाहृतदहरविद्याप्रकरणे उत्तरत्र [1] "एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इति श्रूयते । अत्र, [2] "एष आत्मा अपहतपाप्मा" इत्यनेन [3] "एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" इति सुबालोपनिषद्वाक्यं स्मार्यते । तत्रापहतपाप्मत्वसहचरितानां विजरत्वादिसत्यसङ्कल्पत्वपर्यन्तानां गुणानां सिद्धत्वात् तेनास्यात्मनः सर्वभूतान्तरात्मभूतश्रीनिवासापरनामधेयनारायणाख्यदेवताविशेषत्वं निर्धार्यते इति ॥

[1] छा. ८-१-१. [2] छा. ८-१-५. [3] सुबाल ७.

पूर्वपक्षः ।

[1]"दहरोऽस्मिन्नन्तर आकाश" इत्यत्र श्रूयमाणो दहराकाशो न परमात्मा, तस्यैवान्वेष्टव्यतया, तस्य अन्वेष्टव्यान्तराधारत्वासम्भवात्; अपि तु 'आकाश'शब्दस्य भूताकाशे प्रसिद्धिप्राचुर्यात्, भूताकाश एवायं दहराकाश इति निर्धार्यते इति ॥

सिद्धान्तः ।

उदाहृतायां दहरविद्यायां [1]"दहरोऽस्मिन्नन्तर आकाशः" इति दहराकाशं [1]"तस्मिन् यदन्तस्तदन्वेष्टव्यं" इति तदन्तर्वर्ति च प्रस्तुत्य [1]"तदन्वेष्टव्य" इति तच्छब्देन प्रस्तुतं दहराकाशं तदन्तर्वर्ति चोभयं परामृश्य उभयोरुपास्यतामुक्त्वा, 'किं तत्र विद्यते' इति प्रश्नपूर्वकं [2]"अस्मिन् कामाः समाहिताः । एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सो अपिपासः सत्यकामः सत्यसङ्कल्पः" इत्यभिहितम् । अनेन पूर्वप्रस्तुतो दहराकाश आत्मेति, तदन्तर्वर्ति च अपहतपाप्मत्वादिगुणाष्टकमिति, स एव दहराकाशो गुणाष्टकविशिष्टतया [2]"एष आत्मा अपहतपाप्मा" इत्यनेन निर्दिश्यत इति चावगम्यते ॥

ननु [1]"तस्मिन् यदन्तस्तदन्वेष्टव्य" इत्यत्र प्रकृतपरामर्शिना 'तत्'इति एकवचनान्तेन तच्छब्देन उभयोः परामर्शासम्भवात्, गुणाष्टकस्यैवोपास्यत्वमुक्तं स्यात्, न परमात्मन इति चेत्, उच्यते-[1]"तस्मिन् यदन्तस्तदन्वेष्टव्य" इत्यत्र तच्छब्देन दहराकाशस्य तदन्तर्वर्तिगुणजातस्य चाभिधानात्, द्वयोरन्वेष्टव्यतासिद्धिः । तच्छब्देनोक्तार्थलाभश्च 'स च तच्च तत्' इत्येकशेषसमासेन उपपादनीयः । एकशेषसमासेनोक्तार्थस्य विवक्षितत्वं तु उत्तरत्र [3]"तद्य इह आत्मानमनुविद्य व्रजन्ति एतांश्च सत्यान् कामान्"

[1] छा ८.१.१　[2] छा ८-१-५　[3] छा ८-१-६

इति 'दहराकाश'शब्दनिर्दिष्टस्य परमात्मन 'सत्यकाम'शब्दनिर्दिष्टान गुणाना च उपासनस्यानूदितत्वात् ज्ञायते । अतोऽय दहराकाश परमात्मा न भूताकाश । 'आकाश'शब्दश्च [1]"आकाशो ह वै नाम रूपयोर्निर्वहिता" इत्यादौ परमात्मन्यपि प्रसिद्ध । एवमुत्तरत्र [2]"तद्यथा हिरण्यनिधि निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्दन्ति एवमेवेमा सर्वा प्रजा अहरहर्गच्छन्त्य एत ब्रह्मलोक न विन्दन्ति" इत्यस्मिन् वाक्ये 'एत' इति प्रकृत दहराकाश परामृश्य, तस्य हिरण्यनिधिदृष्टान्तेन अवेद्यतया अन्त स्थत्व, तदुपरि सर्वासा प्रजाना सर्वदा गमन चोपदिश्यते । सर्वै अवेद्यतया अन्त स्थत्व [3]"य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद" इत्यन्तर्यामिब्राह्मणे परमात्मनो दृष्टम् । अत सर्वैरवेद्यत्वेन अन्त स्थिततयाऽभिधीयमानोऽय दहराकाश स परमात्मा इति निर्णीयते । अन्यत्र सर्वैरवेद्यतया अन्त स्थत्वस्य परमात्मनोऽभिधानादर्शनेऽपि, हिरण्यनिधि दृष्टान्तेन निरतिशयपुरुषार्थत्वेनावगम्यमानस्यास्य दहराकाशस्य अभिधी यमान सर्वैरवद्यतया हिरण्यनिधिवत् अन्त स्थत्व अस्य दहराकाशस्य परमात्मत्वनिश्चये पर्याप्त लिङ्गम् । उत्तरवाक्यस्थ'ब्रह्मलोक'शब्दश्च निषादस्थपतिन्यायासिद्धेन कर्मधारयसमासेन 'ब्रह्मैव लोको ब्रह्मलोक' इत्येवरूपेण अस्य दहराकाशस्य परमात्मत्व निश्चाययति ॥

एव बृहदारण्यके हार्दविद्याप्रकरणे, [4]"एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषा लोकानामसम्भेदाय" इत्यत्र परमात्मन सेतुवत् सर्वेषा धर्माणामसङ्करेण स्थापकत्वरूप विधरण श्रूयमाण, अत्रापि [5]"अथ य आत्मा सेतुर्विधृतिरेषा लोकानामसम्भेदाय" इति प्रकृतदहराका शस्य श्रूयते । अतोऽनेनापि स परमात्मैवाय दहराकाश इति निश्चीयत ॥

[1] छा ८ १४ १ [2] छा ८ ३ २ [3] बृ ५ ७-२२ [4] बृ ६ ४-२२
[5] छा ८ ४ १

ननु उक्तरीत्या वाक्यशेषवशात् दहराकाशस्य परमात्मत्वनिर्णयो न युक्तः [1]"अथ य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते। एष आत्मेति होवाच" इति वाक्यशेषे शरीरादुत्थाय परज्योतिरुपसंपत्त्या स्वरूपाविर्भावं प्राप्नुवतः 'संप्रसाद'-शब्दोक्तस्य जीवस्य परामर्शदर्शनात्, तस्य च 'आ काशात इति आकाश' इति व्युत्पत्त्या 'आकाश'शब्दवाच्यत्वोपपत्तेः, प्रत्यगात्मैवायं दहराकाश इति निश्चीयमानत्वात् इति चेत्, मैवम्—प्रत्यगात्मनः [2]"एष आत्मा अपहतपाप्मा" इत्यादिना अभिहितनिरुपाधिकापहतपाप्मत्वाद्यसंभवात्। प्रजापतिवाक्ये स्वोपासनप्रीतपरमात्मानुग्रहेण स्वरूपाविर्भावं प्राप्तस्य तस्य तदुपाधिकमपहतपाप्मत्वादिगुणाष्टकमभिधीयते, न तु निरुपाधिकम्; अतः प्राक्तिरोहितस्वरूपः परमात्मोपासनेन पश्चादाविर्भूतस्वरूप प्रत्यगात्मा प्रजापतिवाक्ये प्रतिपाद्यः। दहरवाक्ये तु कदाचिदप्यतिरोहितापहतपाप्मत्वादिस्वरूपः परमात्मा। परमात्मप्रकरणे [1]"अथ य एष संप्रसाद" इत्यादिना जीवात्मन उपादानं तु तिरोहितस्वरूपस्य जीवात्मनो देशविशेषावस्थितस्वप्राप्त्या स्वरूपाविर्भावहेतुत्वरूपपरमात्मगुणविशेषप्रतिपादनार्थम्। तस्य परमात्मनोऽल्पपरिमाणोक्तिस्तु तथोपासनार्था॥

ननु स्यादेतदेव, यदि 'दहरविद्योक्त आत्मा सर्वदा अतिरोहितस्वरूपः; प्रजापतिवाक्योक्तस्तु प्राक्तिरोहितस्वरूप, पश्चात् परब्रह्मप्राप्त्या आविर्भूतस्वरूपो मुक्तात्मा' इत्यत्र किञ्चित् प्रमाणमुपलभ्येत। तदेव तु नोपलभ्यते इति चेत्, उच्यते—[3]"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इति, [4]"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च॥" इति श्रुतिस्मृत्योः परब्रह्मोपासनेन

[1] छा. ८-३-४ [2] छा ८-१-५ [3] मु ३-१-३. [4] गीता. १४-२.

जीवस्य परब्रह्मसाम्यापत्त्या, अपहतपाप्मत्वादिगुणाष्टकवत्त्वाविर्भावस्य प्रतीयमानत्वात् दहराकाशस्य परमात्मन सर्वदा अतिरोहितस्वरूपत्वम्, जीवात्मनस्तु मुक्तिदशाया तत्साम्यापत्त्या स्वरूपाविर्भाव इति निश्चीयते इति ॥

इति दहराधिकरणम् ॥ ५ ॥

२३ ॥ प्रमिताधिकरणम् ॥ ६ ॥

पूर्वस्मिन्नधिकरणे [1]"अल्पश्रुतेरिति चेत्तदुक्त" इति सूत्रे परमात्मनो दहरविद्याया हृदयपुण्डरीकरूपाल्पस्थानवर्तितया अल्पपरिमाणत्वं तथा उपासनार्था इत्युक्तम् । अल्पपरिमाणविशेषो जीवस्य श्रूयते । अतो जीव एवास्तु इति शङ्कापरिहाराय प्रवृत्तमिदमधिकरणम् । अथवा पूर्वाधिकरणे अल्पपरिमाणवत्त्व परमात्मन उपपादितम्, तस्यैवाङ्गुष्ठपरिमाणवत्त्वमुप पादयितु प्रवृत्तमिद अधिकरणम् ॥

## शब्दादेव प्रमितः ॥ १-३-२३ ॥

[हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २४ ॥]

अङ्गुष्ठपरिमितत्वेन श्रुत, स परमात्मा, [2]"भूतभव्यस्येशान" इति शब्दादेव परमात्मत्वावगमात् इति सूत्रार्थ ॥

अङ्गुष्ठमात्रपुरुषं मनुष्यहृदयस्थमीशितृत्वाद्यैः ।
यदिति व्यनक्ति विधा तद्ब्रह्म श्रीनिवासनाम भजे ॥ २४ ॥

अर्थः । कठवल्ल्या [2]"अङ्गुष्ठमात्र पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सते" इति श्रुति [2]"अङ्गुष्ठमात्र"

[1] शा सू १३२० [2] कठ २४१

इत्यङ्गुष्ठप्रमितत्वेन श्रुतं पुरुषं ईशितृत्वाद्यैः निरुपाधिकसर्वशासितृत्वप्रमुखैः यदसाधारणैर्धर्मैः, यत्–श्रीनिवासाख्यं परं ब्रह्मेति प्रकाशयति, तद्ब्रह्मेति पूर्ववत् ॥

भावः । उदाहृतश्रुतौ हृदयस्थस्य पुरुषस्याङ्गुष्ठपरिमाणस्य भूतभविष्य-द्वर्तमानरूपसकलजगदीशितृत्वं श्रूयते । तच्च सकलजगन्नियन्तृत्वरूपमीशि-तृत्वं अन्तर्यामिब्राह्मणसुबालोपनिषदादौ [1] "यः पृथिवीमन्तरो यमयति" इत्यादौ परमात्मनो नारायणस्यैव धर्म इत्यवगम्यते । एवं अस्मिन् प्रकरणे [2] "भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" इत्यग्निसूर्यादीनां सर्वेषामेतस्मादङ्गुष्ठपुरुषात् भीत्या स्वस्वकार्येषु प्रवृत्तिः श्रूयते । अनेन [3] "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः । भीषा-ऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः इति" इति वायुसूर्यादीना भीषयितृ-त्वेन आनन्दवल्ल्यां श्रुत आनन्दमय प्रत्यभिज्ञायते । स च आनन्दमय. पुण्डरीकाक्ष इति पूर्वमेव निर्णीतम् । अतोऽङ्गुष्ठमात्रप्रमितः पुरुषः श्रीनि-वासापरनामधेयं नारायणाख्यं परं ब्रह्मेति निर्धार्यत इति ॥

## पूर्वपक्षः ।

[4] "अङ्गुष्ठमात्र पुरुषो मध्य आत्मनि तिष्ठति ।" इत्याद्युदाहृतश्रुतौ शरीरान्तःस्थितपुरुषस्याङ्गुष्ठपरिमाणत्वं भूतभव्येशितृत्वं च श्रूयते । तत्र अङ्गुष्ठपरिमाणत्वं [5] "प्राणाधिपः सञ्चरति स्वकर्मभि. । अङ्गुष्ठमात्रो रवि-तुल्यरूप." इति श्वेताश्वतरोपनिषदि कर्मपरवशस्य 'प्राणाधिप'शब्दनिर्दि-ष्टस्य जीवस्य श्रूयते । परमात्मनस्तु क्वचिदपि न श्रुतम् । अतोऽत्र श्रुतो-ऽङ्गुष्ठपरिमाणः पुरुषो जीवात्मैवेति निश्चीयते । तस्य भूतभव्येशितृत्वं यथा कथञ्चिन्नेयमिति ॥

[1] बृ. ५-७-२०. [2] कठ. २-६-३. [3] तै उ. १-१४. [4] कठ. २-४-१२. [5] श्वे. ५-७-८.

## सिद्धान्तः ।

जीवस्य [1] "वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः" इति श्वेताश्वतरोपनिषदि अत्यन्ताणुपरिमाणवत्त्वस्योक्तत्वात् तस्याङ्गुष्ठपरिमाणवत्त्वं हृदयान्तःस्थत्वेन तदुपाधिकं वक्तव्यम् । परमात्मनोऽपि उपासकहृदयान्तःस्थत्वेनोपासकहृदयस्याङ्गुष्ठपरिमाणतया तदुपाधिकमङ्गुष्ठपरिमाणवत्त्वमुपपद्यते । एवमङ्गुष्ठपरिमाणवत्त्वस्य जीवात्मपरमात्मनोरुभयोरपि साधारणतया तस्यानिर्णायकतया भूतभव्येशितृत्वस्यासङ्कुचितस्य पूर्वोदाहृतान्तर्यामिब्राह्मणादिश्रुतिषु परमात्मासाधारणतया श्रुतत्वेन असङ्कुचितभूतभव्येशितृत्वेन अङ्गुष्ठप्रमितः पुरुषः परमात्मेति निर्णीयते। अङ्गुष्ठप्रमितत्वं तु उपासकहृदयस्थस्य तस्योपासकहृदयोपाधिकमुपपद्यते । खरतुरगादीनामनङ्गुष्ठानां हृदयस्य अङ्गुष्ठप्रमितत्वाभावेऽपि मनुष्याणामेवोपासनाधिकारित्वात्, तेषां हृदयस्य तदङ्गुष्ठप्रमितत्वेन, तत्रोपासकानुग्रहाय सन्निहितस्य परमात्मनः तदुपाधिकं तदङ्गुष्ठप्रमितत्वं उपपद्यत एव ॥

एवं [2] "अङ्गुष्ठमात्रः पुरुषः" इत्यस्मान्मन्त्रादुपरितने [3] 'यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम् । महद्भयं वज्रमुद्यतमिव य एतद्विदुरमृतास्ते भवन्ति ॥" इत्यस्मिन् मन्त्रे पूर्वप्रक्रान्तादङ्गुष्ठप्रमितात् पुरुषात् भयेन सर्वस्य जगतः कम्पनं श्रूयते । तद्विवरणाय प्रवृत्ते [4] "भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" इति तदुत्तरमन्त्रे प्रकृतस्याङ्गुष्ठपरिमाणस्य पुरुषस्य शासनातिवृत्तौ किं भविष्यतीति भीत्या, अग्निसूर्यादीनां स्वव्यापारानुपालनं प्रतीयते । तदिदमग्निसूर्यादीनां भीषयितृत्वं [5] "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम इति" इति तैत्तिरीयोपनिषदि परमात्मासाधारणतयाऽवगतम् । अतोऽप्यङ्गुष्ठप्रमितः पुरुषः परमात्मेति निर्धार्यते ॥

[1] श्वे ५ ९। [2] कठ २ ४ १२। [3] कठ २ ६ २। [4] कठ ६ ३। [5] तै २ ८ १।

उदाहृतप्रथममन्त्रार्थस्तु—यदिदं जगत्, तत् सर्वं, प्राणे—सर्वप्राणनहेतौ परमात्मनि प्रतिष्ठितं; प्राणात्—परमात्मनः, निस्सृतम्। उद्यतात् वज्रात्—वज्रायुधादिव, प्राणात्—परमात्मनः, महतो भयात् एजते—कम्पते इति। कृत्स्नं जगत् परमात्मनः शासनातिवृत्तौ किं वा भवेत् इति भीत्या कम्पत इति भावः ॥

एवं कठवल्ल्यां [1]"न तत्र सूर्यो भाति न चन्द्रतारकं, नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति॥" इति प्रकृताङ्गुष्ठमात्रप्रमितपुरुषविषये मन्त्रे अस्याङ्गुष्ठप्रमितपुरुषस्य सूर्यचन्द्रादिसकलतेजसामाच्छादकं निमित्तभूतमनुग्राहकं च तेजः श्रूयते। तच्च [2]"तं देवा ज्योतिषां ज्योतिः यस्यादित्यो भामुपयुज्य भाति येन सूर्यस्तपति तेजसेद्धः" इत्यादिषु परमात्मासाधारणमवगतम्। मुण्डकोपनिषदि च [3]"न तत्र सूर्यो भाति" इत्यादिरयं मन्त्रः परमात्मप्रकरणे पाठात् परमात्मविषयो निश्चितः। अतस्तथाविधपरमात्मासाधारणतेजोविशेषवत्त्वादप्ययमङ्गुष्ठप्रमितः पुरुषः परमात्मेति निर्धार्यत इति ॥

नन्वस्मिन् सूत्रे 'शब्द'शब्दस्य [4]"ईशानो भूतभव्यस्य" इति विषयवाक्यस्थ'ईशान'शब्दरूपश्रुतिपरत्वं स्वरसतः प्रतीयते। तस्य पशुपत्याख्यदेवताविशेषे रूढत्वात्, उक्तेशानपदश्रुत्या अङ्गुष्ठप्रमितस्य पशुपत्याख्यदेवताविशेषरूपत्वं सूत्रकारैः सिषाधयिषितं इत्यवगम्यते। इत्थं च [5]"अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य स एवाद्य स उ श्वः॥" [6]"अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः। तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्येण॥" इति

[1] कठ. २-५-१५. [2] बृ. ६-४-१६. [3] मुण्ड. २-२-११. [4] कठ. २-४-१२.
[5] कठ. २-४-१३. [6] कठ. २-६-१७.

त्रयाणां मन्त्राणामङ्गुष्ठप्रमितपुरुषविषयकाणां पशुपत्याख्यदेवताविशेषपर तया तत्प्रकरणस्थानां पूर्वोत्तरमन्त्राणां सर्वेषां पशुपत्याख्यदेवताविशेषपरत्वे सूत्रकारतात्पर्यं गम्यते । [1]"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदं" इति मन्त्रे 'विष्णोः' इत्यवधिपञ्चमी, ततश्च 'विष्ण्वपेक्षया, परम—उत्कृष्ट, पद—पशुपत्याख्यं प्राप्यं वस्तु' इत्यर्थकतया, सोऽपि मन्त्रः पशुपत्याख्यदेवता विशेषपर एव । अतः कृत्स्नाऽपि कठोपनिषत् पशुपतिपरेवेति सूत्रकाराशया वगमेन अस्या उपनिषदः श्रीनिवासापरनामधेयनारायणपरत्ववर्णनमयुक्तमिति चेदत्रोच्यते ।—

[2]"अस्मान् पश्याब्धिकन्ये सरसिरुहरुचामन्तरङ्गैरपाङ्गैः" इत्यादौ 'सरसिरुह'पदेन पद्मबोधाऽनुभवसिद्धः । [3]"पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः" इत्यादौ तु 'सरोरुह'पदेन न तद्बोधः । एवं [4]"देवी सरोजासनधर्मपत्नी" इत्यादौ 'सरोजासन'शब्देन चतुर्मुखबोधो भवति । [5]"एनामर्णवमध्यमुत्सुरभिताशीसरोजासनं ब्रह्माणं गमय" इत्यादौ तु सरोजासनशब्देन न तद्बोधः । अतो योगरूढिमतां शब्दानां योगार्थान्वितस्वार्थबोधकपदान्तरसमभिव्याहारे विद्यमानाया अपि रूढिशक्तेः न रूढ्यर्थोपस्थापनक्षमता । यत्र तु तादृशपदान्तरसमभिव्याहारो नास्ति, तत्र तस्याः रूढ्यर्थोपस्थापनक्षमता । अत एवोपदर्शितोदाहरणेषु 'पद्मानि' इति 'ब्रह्माणं' इति च रूढ्यर्थोपस्थापकपदान्तरोपादानं केषुचित् दृश्यते, कषुचिन्नेति निश्चीयते ॥

इत्थं च [6]"ईशानो भूतभव्यस्य" इति प्रकृतमन्त्रे 'ईशान'पदयोगार्थेशितृत्वकर्मबोधकस्य 'भूतभव्यस्य' इति पदस्योपादानात्, 'ईशान'पदस्य न रूढ्यर्थोपस्थापनक्षमता । इत्थं च प्रकृतमन्त्रस्थेशानशब्दस्य श्रुतित्वासंभवात्,

---

[1] कठ १ ३ ९ [2] श्रीस्त० ? ९ [3] कुमारस १ १६ [4] दय स्तो ७
[5] सुबाल ६ ० ८ [6] कठ २ ४ १२

सूत्रस्थ'शब्द'पद न ईशानशब्दरूपश्रुतिपरम्, अपि तु 'भूतभव्यस्येशान' इति वाक्यपरमेव । अत एव प्रकृतसूत्रे "शब्दादेव" इत्येवकारो पादानम् । तस्य चायमभिप्राय–यद्यपि लिङ्गाद्बाध दुर्धर, तथापि प्रकृते अङ्गुष्ठप्रमितत्वस्य जीवात्मपरमात्मोभयसाधारणत्वेन अर्थानिर्णायकत्वेन, [1] "ईशानो भूतभव्यस्य" इति वाक्यादेव तयोरन्यतरन्निर्णेयम् । तदर्थस्यास ङ्कुचितभूतभव्येशितृत्वस्य परमात्मासाधारणत्वात् अङ्गुष्ठप्रमितोऽय पुरुष परमात्मैवेति निर्धार्यते इति ॥

यदुक्त [2] "तद्विष्णो परम पद" इत्यत्र 'विष्णो 'इत्यनधिपञ्चमी, ततश्च विष्णोरस्कृष्टत्व 'पद'शब्दार्थे प्राप्ये पशुपत्याख्यदेवताविशेषे बोध्यत इति, तदसत्, तत्र [3] "तद्विष्णो परम पद सदा पश्यन्ति सूरय" इति श्रुतिप्रत्यभिज्ञानात्, तस्या श्रुते [4] "एकान्तिन सदा ब्रह्मध्यायिनो योगिनो हि ये । तेषा तत्परम स्थान यद्व पश्यन्ति सूरय ॥" इति श्रीविष्णुपुराणे नित्यसूरिभिर्दृश्यमानवैष्णवस्थानविशेषपरतयोपबृंहितत्वेन, प्रकृते "तद्विष्णो परम पद" इत्यस्य विष्णुसन्निधिस्थानविशेषपरत्वावगमादिति ॥

इति प्रमिताधिकरणम् ॥ ६ ॥

---

## २४ ॥ देवताधिकरणम् ॥ ७ ॥

पूर्वाधिकरणे मनुष्याणामुपासने अधिकारात्, तद्धृदयस्याङ्गुष्ठप्रमितत्वात्, उपासकानुग्रहाय तत्र स्थितस्य परमात्मनोऽङ्गुष्ठप्रमितत्वोक्ति इति [5] 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्" इति सूत्रे उक्तम् । तेन देवानामु पासनेऽधिकारो नास्तीति शङ्काजननात्, तत्परिहाराय प्रवृत्तमिदमधिकरणम् ॥

---

[1] कठ २ ४ १२ [2] कठ १ ३ ९ [3] तै [4] वि पु १, २९
[5] शारी सू १ ३ २४

# तदुपर्यपि बादरायणः संभवात् ॥ १-३-२५ ॥

[विरोध कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २६ ॥
शब्द इति चेन्नात प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥२७॥
अत एव च नित्यत्वम् ॥ २८ ॥
समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ २९ ॥]

तत् परमात्मोपासन, उपर्यपि-मनुष्येभ्य उपरितनेषु देवेष्वपि स भवति । तेषा अर्थित्वसामर्थ्यरूपोपासनाधिकारस्य संभवात् इति भगवान् बादरायणो मन्यते इति सूत्रार्थ ॥

दुःखत्रयाभिभूतैरात्यन्तिकतन्निवृत्तिकामनया ।
देवैरपि यदुपास्यं तद्ब्रह्म श्रीनिवासनाम भजे ॥ २५ ॥

**अर्थः** । आध्यात्मिकाधिदैविकाधिभौतिकरूपदुःखत्रयेण आक्रान्तै देवैरपि इन्द्रादिभिरपि, आत्यन्तिकी पुनरावृत्तिरहिता या तन्निवृत्तिः-दुःखलयनाश, तत्कामनया, यत् श्रीनिवासापरनामधेय ब्रह्म, उपास्यं, तद्ब्रह्मेति पूर्ववत् ॥

**भावः** । इन्द्रादीनामपि सांसारिकाध्यात्मिकादिदुःखवत्ताया श्रुतीतिहासपुराणादिषूक्ततया तेषामपि समारबन्धनिवृत्तिरूपमोक्षेच्छारूपार्थित्वस्य, पटुतरदेहेन्द्रियादिमत्ताया श्रुतीतिहासपुराणादिषु सिद्धतया, उपासनानुष्ठान सामर्थ्यस्य च संभवात्, तेषामपि परमात्मोपासने अधिकारसंभवेन, देवैरपि श्रीनिवासाभिधान पर ब्रह्मोपास्य इति ॥

पूर्वपक्ष. ।

पूर्वमीमांसाया अर्थवादाधिकरणे कर्मकाण्डादिषु श्रूयमाणाना अर्थवादवाक्याना सन्निहितविधिवाक्यविहितकर्मसु प्ररोचनाजननाय तत्प्राशस्त्यमात्रपरताया स्वार्थे तात्पर्याभावस्य च सिद्धान्तिततया, देवादीना विग्रहवत्त्वे

तत्परप्रमाणाभावेन तेषां देहवत्त्वासिद्ध्या, देहवत्त्वं विना उपासननिर्वहणसामर्थ्यं न संभवति। देहवत्त्वाभावादेव तत्प्रयुक्तदुःखासंभवेन तज्जिहासया मोक्षार्थित्वमपि न संभवति। अत उपासनानुष्ठानसामर्थ्यस्य उपासनफलभूतमोक्षार्थित्वस्य चासंभवात्, तेषां ब्रह्मविद्यासु नाधिकार इति॥

## सिद्धान्तः।

मन्त्राणामर्थवादानां च स्वार्थे तात्पर्यमवश्यमाश्रयणीयम्। तथा हि–[1]"वायव्यं श्वेतमालभेत भूतिकाम" इति इष्टिविशेषविध्यनन्तरं, [1]"वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इति तदर्थवादः श्रूयते। अत्र विधिवाक्येन भूतिरूपफलार्थिना वायुदेवताकेष्टिविशेषः कर्तव्यतया विधीयते। तत्र तथाविधेष्टेः क्षणध्वंसितया, कथं कालान्तरभाविभूतिरूपफलसाधनत्वमित्याकाङ्क्षा नियमेन जायते। तदुत्तरार्थवादवाक्येन 'तादृशेष्टिविशेषेणाराधितो वायुः प्रसन्नः सन्, भूतिरूपं फलं यच्छति' इत्यभिधानात्, इष्टेः क्षणध्वंसित्वेऽपि तदाराधितवायुदेवताप्रसादद्वारा फलसाधनत्वं उक्तेष्टे संभवति इत्याकाङ्क्षानिवृत्तिः क्रियते। अतो विधिवाक्यापेक्षितफलसाधनभूतदेवताप्रसादरूपद्वारेऽप्यर्थवादवाक्यस्य तात्पर्यमवश्यमभ्युपगन्तव्यम्। अन्यथा पूर्वोक्ताकाङ्क्षाया निवृत्त्यसंभवेन, निराकाङ्क्षमतिपत्त्यसंभवात्। 'तथाविधेष्ट्या तत्कर्तरि अपूर्वं किञ्चिज्जायते; तच्च फलपर्यन्तावस्थायि; अतः तेन फलमुत्पाद्यत' इति कल्पने तु,श्रुतस्य देवताप्रसादरूपद्वारस्य त्यागः, अश्रुतस्य अपूर्वरूपद्वारस्य कल्पनं चेति दोषः प्रसज्यते। अतो निरुक्तार्थवादवाक्यस्य वायुदेवतायाः तस्याः फलप्रदत्वे च तात्पर्यमवश्यमाश्रयणीयम्। एवमन्येषामर्थवादवाक्यानां स्वार्थे तात्पर्यमवश्यमङ्गीकरणीयम्। तेषां स्तुतिपरत्वेऽपि, अविद्यमानार्थाभिधानेन स्तुत्यनुपपत्तेः। अतो देवानामपि

[1] तै. सं २-१-१.

विग्रहवत्त्वं प्रमाणसिद्धमेव । एवं इन्द्रादीनां स्वस्थानच्युत्यादिबहुविधापत्प्रतिपादनात्, तेषामपि सांसारिकफलेषु निर्वेदसंभवेन मुमुक्षाऽपि संभवति । अतोऽर्थित्वसामर्थ्यरूपाधिकारसंभवात्, देवानामपि ब्रह्मविद्यायामधिकारोऽस्ति ॥

ननु यागेषु [1]"इन्द्र आगच्छ" इत्यादिना इन्द्रादिदेवताह्वानं, तेषां यागे सन्निधानं च श्रूयते । ततश्च इन्द्रादीनां विग्रहवत्त्वाभ्युपगमे, एकस्य इन्द्रस्य युगपदनेकेषु यागेषु सन्निधानासंभवात्, तत्सन्निधानबोधकश्रुतिविरोधः । एवमिन्द्रादीनां शरीरवत्त्वाभ्युपगमे तच्छरीराणां सावयवानां विनाशस्य अवश्यंभावेन, तादृशेन्द्रादीनां देवानामुत्पत्तेः पूर्वं, नाशादनन्तरं च, वेदे श्रूयमाणानामिन्द्रादिशब्दानां अर्थशून्यत्वं स्यादिति चेत् । मैवम्—सौभरिप्रभृतीनां तपःप्रभावजनितशक्तिविशेषेण युगपदनेकशरीरपरिग्रहवत्, ततोऽप्यधिकशक्तिमतां देवानामनेकशरीरपरिग्रहेण युगपदनेकेषु यज्ञेषु सन्निधानोपपत्तेः । वैदिकानामिन्द्रादिशब्दानां, गवादिशब्दानामिव, आकृतिविशेषविशिष्टवाचितया, एकैकस्येन्द्रादेः नाशेऽपि, चतुर्मुखेन आकृतिविशेषवाचिवैदिकेन्द्रादिशब्दैः तत्तदाकृतिविशेषस्मरणपूर्वकं पूर्वपूर्वेन्द्रादिसमानाकृतिविशिष्टस्य उत्तरोत्तरस्य इन्द्रादेः सृष्ट्युपपत्तेश्च, न वैदिकानां इन्द्रादिशब्दानां अर्थशून्यताप्रसङ्गः । [2]"मन्त्रकृतो वृणीते" इत्यादिषु वसिष्ठादीनां वैदिकमन्त्रकृत्त्वश्रवणेन, वसिष्ठादिकृतानां मन्त्राणां अनित्यत्वस्य दुर्वारतया, वेदस्य अनित्यत्वं स्यात् इत्याशङ्काऽप्यनेनैव दत्तोत्तरा । वसिष्ठादिशब्दानामाकृतिविशेषविशिष्टवाचितया, पूर्वपूर्ववसिष्ठादिनाशेऽपि, वसिष्ठादिशब्दवाच्याकृतिविशेषस्मरणपूर्वकं तत्तदाकृतिविशिष्टोत्तरोत्तरवसिष्ठादीनां चतुर्मुखसृष्टानां तन्नियुक्तानां तपःप्रभावेन पूर्वपूर्ववसिष्ठादिदृष्टवैदिकमन्त्रसाक्षात्कारपूर्वकं तत्तन्मन्त्रप्रवर्तनस्य [3]"मन्त्रकृतो वृणीते" इत्यादिना

[1] तै. आर. १-१२. [2] [3]

अभिधानात्, न वेदस्यानित्यत्वप्रसङ्गः । महाप्रलये चतुर्मुखस्यापि नाशे, तदुत्तरसृष्टौ भगवता पुरुषोत्तमेन समष्टिमहाभूतसृष्टिपूर्वकं तत्सृष्टे ब्रह्माण्डे [1]"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुत्युक्तरीत्या चतुर्मुखं सृष्ट्वा, पूर्वसृष्टिप्रवर्तितवेदानुपूर्वीसमानानुपूर्वीकान् वेदान् तस्मै चतुर्मुखाय उपदिश्य तन्मुखेन वेदानां देवादिसृष्टीनां च प्रवर्तनात्, समानानुपूर्वीकाणां वेदानां सर्वदा संभवात्, न वेदनित्यत्वविरोधः । वेदनित्यत्वं हि न वैदिकशब्दानां स्वरूपेण नित्यत्वं, शब्दानां अहङ्काराख्यतत्त्वजन्यत्वेन महाप्रलये तन्नाशस्यावश्यभावात्, अपि तु पूर्वपूर्वानुपूर्वीसमानानुपूर्वीकतयोच्चारणीयत्वमेव तन्नित्यत्वमिति ॥

इति देवताधिकरणम् ॥ ७ ॥

---

२५ ॥ मध्वधिकरणम् ॥ ८ ॥

पूर्वाधिकरणे देवतानामपि ब्रह्मविद्यायामधिकारोऽस्तीति निरूपितम् । ब्रह्मविद्याविशेषे तासामधिकारासंभवाशङ्कापरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ [॥ १-३-३० ॥

[ज्योतिषि भावाच्च ॥ ३१ ॥
भावं तु बादरायणोऽस्ति हि ॥ ३२ ॥]

मधुविद्यादिषु देवानामर्थित्वसामर्थ्ययोः असंभवात्, तेषां ब्रह्मविद्यायां अधिकारश्रवणेन तस्य विद्यान्तरेष्वधिकारनिषेधार्थत्वाच्च, तेषां तासु विद्यासु नाधिकारः इति जैमिनिः आचार्यो मन्यत इति प्रथमद्वितीयसूत्रार्थः । तास्वपि अर्थित्वसामर्थ्ययोः संभवात्, देवानामधिकारसद्भावं बादरायणः आचार्यो मन्यत इति तृतीयसूत्रार्थः ॥

---

[1] श्वे ६ १८

एषु तृतीयसूत्रार्थविवरणपरमिदं पद्यम्—

वसुरुद्रादिपदस्थैर्भूयस्तत्प्राप्तिकामनावद्भिः ।
स्वावस्थं यदुपास्यं तद्ब्रह्म श्रीनिवासनाम भजे ॥ २५ ॥

अर्थः । भूयः–भाविकल्पे, तत्प्राप्तिकामनावद्भिः–वस्वादिपदप्राप्तिकामैः, वसुरुद्रादिपदस्थैः-इदानीं वस्वादिपदं प्राप्तैः, स्वावस्थं-स्वशरीरकं, यत्-श्रीनिवासनामकं ब्रह्म उपास्यं, तद्ब्रह्मेति पूर्ववत् ॥

भावः । मधुविद्यायां कार्यकारणोभयावस्थवस्वादिशरीरकपरमात्मन एवोपास्यत्वात्, इदानीं वस्वादिपदं प्राप्तानामपि कल्पान्तरे वस्वादिपदप्राप्तिपूर्वकब्रह्मप्राप्तीच्छाया संभवाच्च मधुविद्यायां अर्थित्वसामर्थ्ययोः संभवात्, वस्वादीनामपि तास्वधिकारोऽस्ति । अतः तैः स्वशरीरकं श्रीनिवासाभिधानं परं ब्रह्मैवोपास्यमिति ॥

पूर्वपक्षः ।

मधुविद्यायां वसुरुद्रादित्यमरुत्साध्याख्यदेवतापञ्चकभोग्यपञ्चामृताश्रयादित्योपासनं विधाय, [1]"वसूनामेवैको भूत्वा" इत्यादिना मधुविद्यानिष्ठस्य वसुत्वाद्यधिकारप्राप्तिः फलत्वेनाभिधीयते । तत्र तक्रतुन्यायेन वस्वाद्युपासनं विना वसुत्वादिप्राप्त्यसंभवात्, वस्वादीनामप्युपास्यत्वं सिद्धम् । ततश्च आदित्यवस्वाद्यधिकारस्थानामादित्यवस्वाद्युपासनं न संभवति । स्वस्मादुत्कृष्टस्यैव स्वोपास्यत्वसंभवेन स्वस्य स्वस्मादुत्कृष्टत्वासंभवात् । एवमादित्यवस्वाद्यधिकारस्य प्राप्ततया तेषां तत्प्राप्तीच्छाऽपि न संभवति । अत आदित्यवस्वाद्युपासनरूपमधुविद्यायां तदुपासनानुष्ठानसामर्थ्यस्य तत्फलकामनारूपार्थित्वस्य चासंभवात्, तद्विद्यायां आदित्यवस्वाद्यधिकारस्थानां नास्त्यधिकार इति ॥

---

[1] छा. ३-६-३.

सिद्धान्तः ।

मधुविद्याया ब्रह्मविद्यात्वस्य ब्रह्मप्राप्तिरूपफलस्य च छान्दोग्ये "न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति, य एतामेवं ब्रह्मोपनिषदं वेद" इत्यत्र श्रवणात्, तत्र ब्रह्मण उपास्यत्वं विना ब्रह्मविद्यात्वासंभवात्, आदित्यवस्वादिशरीरकब्रह्मण एव तत्रोपास्यत्वमङ्गीकरणीयम् । ततश्च आदित्यवस्वाद्यधिकारस्थस्यापि स्वशरीरकब्रह्मोपासनं संभवति । एवमेतत्कल्पे आदित्यवस्वाद्यधिकारं प्राप्तस्यापि भाविकल्पे आदित्यवस्वाद्यधिकारप्राप्तिपूर्वकब्रह्मप्राप्तिकामनाऽपि संभवति । अतोऽर्थित्वसामर्थ्ययोः संभवात्, आदित्यवस्वादीनामपि मध्वादिब्रह्मविद्यास्वधिकारः अस्त्येवेति ॥

अत्रेदं बोद्धव्यम्—वसुरुद्रादित्यमरुत्साध्यावस्थब्रह्मोपजीव्यरोहितादिपञ्चरूपात्मकपञ्चामृताश्रयादित्यावस्थब्रह्मोपासनं मधुविद्या । अत्र ब्रह्मण उपजीवकत्वं विशेषणीभूतवस्वादिद्वारकम् । तद्ब्रह्मोपासनं द्विविधम्–कार्यावस्थब्रह्मोपासनं कारणावस्थब्रह्मोपासनं चेति । तत्र वस्वादिनामरूपोदयास्तमयादिविशिष्टजीवशरीरकब्रह्मोपासनं कार्यावस्थब्रह्मोपासनम्; तत्पूर्वावस्थापन्नजीवशरीरकब्रह्मोपासनं कारणावस्थब्रह्मोपासनं, इत्येकः पक्षः । वस्वादिनामरूपोदयास्तमयादिविशिष्टजीवशरीरकब्रह्मोपासनं कार्यावस्थब्रह्मोपासनं, वस्वादिनामरूपादिप्रहाणात्मकमुक्त्यवस्थापन्नजीवशरीरकब्रह्मोपासनं कारणावस्थब्रह्मोपासनमिति पक्षान्तरम् । अत्र 'कारणावस्थब्रह्म' इति भाष्यग्रन्थेन कार्यावस्थाशून्यत्वं विवक्षितमिति द्वितीयपक्षाभिप्राय इति ॥

इति मध्वधिकरणम् ॥ ८ ॥

२६ ॥ अपशूद्राधिकरणम् ॥ ९ ॥

पूर्वाधिकरणे देवाना अर्थित्वसामर्थ्ययो सभवात्, ब्रह्मविद्यायाम धिकारोऽस्तीति वर्णितम् । एव तर्हि शूद्रस्याप्यर्थित्वसामर्थ्ययो सभवात्, ब्रह्मविद्यायामधिकारोऽस्तु इति शङ्कापरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ १-३-३३ ॥

[क्षत्रियत्वगतेश्च ॥ ३४ ॥
उत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥
सम्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥
तदभावनिर्धारणे च प्रवृत्ते ॥ ३७ ॥
श्रवणाध्ययनार्थप्रतिषेधात् ॥ ३८ ॥
स्मृतेश्च ॥ ३९ ॥]

अस्य जानश्रुतिनाम्न क्षत्रियस्य, तदनादरश्रवणात्–हसोक्तनिन्दा वाक्यश्रवणात्, तदैव रैक प्रति आद्रवणात्–द्रुतगमनात्, शुग् शोक, उत्पन्नेति 'शूद्र' इति सबोधनेन सूच्यते हि इति सूत्रार्थ ॥

शुश्रूषुं प्रति गुरुणा शूद्रेत्यामन्त्रणस्य दृष्टस्य ।
शोचननिमित्तकतया शूद्रेऽप्यधिकारगमकताविरहात् ॥ ७७ ॥
शूद्रस्यापि मुमुक्षोर्वेदाध्ययनादिरहितस्य ।
नाधिकृतिर्यदुपास्तौ तद्ब्रह्म श्रीनिवासनाम भजे ॥ ७८ ॥

अर्थः । पद्यद्वयमेकान्वयम् । सवर्गविद्याप्रकरणे, दृष्टस्य श्रूयमाण स्येत्यर्थ । गुरुणा आचार्येण रैकेण, शुश्रूषु–ब्रह्मविद्या श्रोतुकाम जान श्रुतिनामान क्षत्रिय प्रति, शूद्रेत्यामन्त्रणस्य 'शूद्र' इति सबोधनस्य,

शोचननिमित्तकतया -हंसोक्तानादरवाक्यश्रवणजनितशोचितृत्वबोधकतया, शूद्रजातीयेषु अधिकारसद्भावज्ञापकत्वासिद्धेः, वेदाधिकाररहितस्य मुमुक्षोरपि शूद्रस्य-चतुर्थवर्णस्य, यदुपास्तौ-यस्य श्रीनिवासनाम्न परब्रह्मणः, उपास्तौ-उपासने, अधिकृतिः-अधिकारः, न अस्ति, तद्ब्रह्मेति पूर्ववत् ॥

भावः । छान्दोग्ये संवर्गविद्याप्रकरणे जानश्रुतिनाम्नः क्षत्रियस्य ब्रह्मविद्यायामप्रवृत्तिमुपलभ्य तस्य ब्रह्मविद्याश्रवणेच्छोत्पिपादयिषया हंसरूपेण तत्समीपमागतयोः कयोश्चिन्महात्मनोर्मध्ये, एकस्य जानश्रुतिस्तुतिवाक्यं, अन्यस्य रैकाख्यब्रह्मविरस्तुतिरूपं जानश्रुतिनिन्दारूपं च वाक्यं श्रुत्वा, स्वस्य ब्रह्मविद्यावैधुर्यप्रयुक्तनिन्दाश्रवणेनोत्पन्नशोकं, तदानीमेव रैकसमीपं प्रति ब्रह्मविद्याश्रवणाय गतवन्त, स्वकन्यादिबहुवस्तूपहृतवन्तं जानश्रुतिं प्रति, [1]"आजहारेमाः शूद्र अनेनैव मुखेनालापयिष्यथाः" इति 'शूद्र' इत्यामन्त्रणपूर्वकं ब्रह्मविद्योपदेशः श्रूयते । अतस्तत्र 'शूद्र'इति संबोधनस्य हंसकृतनिन्दाश्रवणजनितजानश्रुतिशोकसूचनार्थत्वेन चतुर्थवर्णाभिधायकत्वाविरहात्, शूद्रस्य वेदाध्ययनाधिकारनिषेधाच्च मुमुक्षुत्वरूपार्थित्वसंभवेऽपि, अधीतवेदान्तवाक्यजन्यब्रह्मज्ञानस्यासंभवेन, तत्पूर्वकब्रह्मोपासने नास्त्यधिकार इति ॥

पूर्वपक्षः ।

शूद्रजातीयस्य वेदाधिकारविरहेऽपि, इतिहासपुराणादिश्रवणेन ब्रह्मस्वरूपतदुपासनप्रकारज्ञानसंभवात् मुमुक्षुत्वसंभवाच्च, अर्थित्वसामर्थ्ययोः संभवेन, ब्रह्मविद्यायामस्त्यधिकारः । अत एव रैक्वेण शुश्रूषुं जानश्रुतिं प्रति 'शूद्र' इत्यामन्त्र्य, तस्य ब्रह्मविद्योपदेशः संवर्गविद्याप्रकरणे श्रूयते इति ॥

[1] छा. ४-२-५.

## सिद्धान्तः ।

अध्ययनगृहीतवेदान्तवाक्यजन्यब्रह्मस्वरूपतदुपासनप्रकारज्ञानमेव वेदान्तविहितब्रह्मोपासनानुष्ठानाङ्गम्; यथा कर्मकाण्डवाक्यजन्यकर्मस्वरूपतदनुष्ठानप्रकारज्ञानं कर्मकाण्डविहितकर्मानुष्ठानाङ्गं, तद्वत् । ततश्च वेदाध्ययनानधिकृतस्य शूद्रस्य वेदान्तवाक्यजन्यब्रह्मस्वरूपज्ञानाद्यसंभवात्, इतिहासपुराणयोरपि वेदान्तोपबृंहणार्थत्वेन शूद्रस्य तत्राप्यनधिकारात्, इतिहासपुराणश्रवणाभ्यनुज्ञानस्य पापक्षयमात्रार्थत्वेन, इतिहासपुराणाध्ययनाधिकारगमकताविरहाच्च, शूद्रस्यार्थित्वसंभवेऽपि सामर्थ्यासंभवात्, न ब्रह्मविद्यायामधिकारः ॥

संवर्गविद्यायां 'शूद्र'इत्यामन्त्रणं तु न शूद्रजात्यभिप्रायकम्, आमन्त्र्यमाणस्य जानश्रुतेर्जनपदाधिपतित्वादिना क्षत्रियत्वावगमात् । एवं संवर्गविद्यायामुत्तरत्र श्रूयमाणाख्यायिकायां, शौनकाभिप्रतारिनाम्नोः संवर्गविद्यान्वयिनोरेकस्य ब्राह्मणत्वं अन्यस्य क्षत्रियत्वं चावगम्यते । अतो ब्राह्मणेतरेषु क्षत्रियस्यैव प्रकृतविद्यान्वयावगमेन तत्प्रायपाठात्, अत्रापि रैक्वजानश्रुत्योः एकस्य रैक्वस्य ब्राह्मणत्वात्, अन्यस्य जानश्रुतेः क्षत्रियत्वं गम्यते । तस्य 'शूद्र'इत्यामन्त्रणाभिप्रायस्तु प्रागेव विवृतः । ब्रह्मविद्याप्रकरणेषु उपनयनसंस्कारपूर्वकमेव ब्रह्मविद्योपदेशदर्शनात्, शूद्रस्योपनयनसंस्कारनिषेधात्, शूद्रत्वाभावनिश्चयानन्तरमेव ब्रह्मविद्योपदेशस्य श्रुतिषु श्रूयमाणत्वात्, शूद्रस्य वेदश्रवणतदध्ययनतदर्थानुष्ठानानां श्रुतिस्मृतिषु निषेधाच्च, न तस्य ब्रह्मविद्यायामधिकार इति ॥

इति अपशूद्राधिकरणम् ॥ ९ ॥

---

[कम्पनात् ॥ ४० ॥ ज्योतिर्दर्शनात् ॥ ४१ ॥]

(इदं सूत्रद्वयं प्रमिताधिकरणशेषत्वात् तत्रैव व्याख्यातम् ।)

२७॥ अर्थान्तरत्वाधिकरणम् ॥ १० ॥

पूर्वं दहराधिकरणे, [1]"दहरोऽस्मिन्नन्तर आकाशः" इत्यत्र श्रुतस्य दहराकाशस्य परमात्मत्वं निर्णीतम्। तत्र अल्पश्रुतिप्रसङ्गेन अङ्गुष्ठप्रमितस्य परमात्मत्वं साधितम्। अनन्तराधिकरणत्रयं प्रासङ्गिकम्। इदानीं दहरविद्याशेषवाक्यस्थाकाशशब्दवाच्यस्य अपरमात्मत्वमाशङ्क्य, परमात्मत्वं स्थाप्यते ॥

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ॥ १-३-४२ ॥

[सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४३ ॥
पत्यादिशब्देभ्यः ॥ ४४ ॥]



आकाशः-"आकाशो ह वै नामरूपयोर्निर्वहिता" इति श्रुतिस्थ-'आकाश'शब्दवाच्यः, सः-परमात्मा; अर्थान्तरत्वादिव्यपदेशात्-जीवात्मव्यावर्तकधर्मविशेषव्यपदेशात् इति सूत्रार्थः ॥

आकाशस्य वदन्ती श्रुतिरन्या नामरूपकर्तृत्वम्।
यदिति व्यनक्ति तमिमं तद्ब्रह्म श्रीनिवासनाम भजे ॥ २९ ॥

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य श्रीदेशिकाचार्यस्य कृतिषु
शारीरकाधिकरणरत्नमालायां
प्रथमाध्यायस्य तृतीयः पादः ॥

---

[1] छा. ८-१-१.

अर्थः। अन्या श्रुतिः—[1] "आकाशो ह वै नामरूपयो निर्वहिता" इति श्रुतिं, नामरूपयोः कर्तृत्वं—स्रष्टृत्व, आकाशस्य—आकाशशब्द वाच्यस्य, वदन्ती सती, तमिम आकाश, यत्—श्रीनिवासाख्य पर ब्रह्मेति प्रकाशयति, तद्ब्रह्मेति, पूर्ववत् ॥

भाव.। छान्दोग्ये दहरविद्यान्ते अष्टमप्रपाठके द्वादशखण्डे, [2] "अश्व इव रोमाणि विधूय पाप चन्द्र इव राहोर्मुखात् प्रमुच्य। धूत्वा शरीर-मकृत कृतात्मा ब्रह्मलोकमभिसंभवामि" इत्युपक्रम्य, [1] "आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृत स आत्मा" इति श्रूयते। अत्र 'आकाश'शब्दवाच्यस्य [1] "नामरूपयोर्निर्वहिता" इत्यनेन नामरूप कर्तृत्वमभिधीयत। पुरुषसूक्ते तदेतन्नामरूपकर्तृत्व [4] "वेदाहमेत पुरुष महान्त आदित्यवर्णं तमसस्तु पारे। सर्वाणि रूपाणि विचित्य धीर नामानि कृत्वाऽभिवदन् यदास्ते।" इति 'महापुरुष'शब्दनिर्दिष्टस्य श्रीनिवासापर नामधेयस्य लक्ष्मीपते श्रुतम्। अत स एवेद ब्रह्मेति निर्धार्यते॥

पूर्वपक्ष।

"अश्व इव रोमाणि" इत्यस्मिन् मन्त्रे पुण्यपापरूपकर्मविनिर्मोक-पूर्वक शरीर परित्यज्य, ब्रह्मलोक प्राप्नुवन् मुक्तात्मा प्रस्तुत। तस्यैव मुक्तात्मनो बद्धावस्थारूपपूर्वावस्था तदनन्तरकालिकमुक्तावस्था च [3] "आकाशो ह वै नामरूपयो निर्वहिता" इति तदनन्तरवाक्ये प्रतिपाद्यते। अत्र 'आकाश शब्देन 'आ काशते इति आकाश' इति व्युत्पत्त्या प्रकाश स्वरूपो जीव उच्यते। नामरूपयो—देवमनुष्यादिरूपस्य नाम्नश्च, निर्वहिता—नितरा वोढा, नामरूपभागित्यर्थ। ते अन्तरा—नामरूपे विना, यत् वर्तते, तत्-मुक्तावस्थ, ब्रह्म—बृहत्त्वगुणयोगि, तत्, अमृत—मरणरहित, स—आत्मा इति श्रुत्यर्थ। अत्र प्रत्यगात्मनो [1] "नामरूपयोर्निर्वहिता" इति

[1] छा ८ १४ १ [2] छा ८ १३ १ [3] छा ८ १४ १ [4] तै आर ३ १२

अनेन देवमनुष्यादिनामभाक्त्वरूपबद्धावस्थोच्यते; [1]"ते यदन्तरा" इत्यादिना च नामरूपविनिर्मुक्तत्वरूपमुक्तावस्था प्रतिपाद्यत इति, अत 'आकाश'-शब्दवाच्यो जीव एवेति ॥

## सिद्धान्तः ।

[2]"नामरूपयोर्निर्वहिता" इत्यत्र वहनरूपयोगार्थापेक्षया निर्वोढृत्वरूपरूढ्यर्थस्यैव शीघ्रोपस्थितिकतया प्रबलत्वेन स एव ग्राह्य । [1]"ते यदन्तरा" इत्यत्र, 'ते अन्तरा—तयोर्नामरूपयोर्मध्ये वर्तते' इत्यनेन नामरूपाभ्यामस्पृष्टत्वमुच्यते । अतो नामरूपकर्तृत्वरूप तन्निर्वोढृत्वं ताभ्यामसस्पृष्टत्व च परमात्मन एव धर्म इति, पूर्वमन्त्रे "ब्रह्मलोक'-इत्यत्र 'ब्रह्म'शब्देन प्राप्यतयाऽभिहित परमात्मैवास्मिन् मन्त्रे 'आकाश'-शब्देन प्रतिपाद्यते, न तु प्राप्ता मुक्तात्मा। एव च सति, निरुपाधिकबृह'-त्वममृतत्वमात्मत्व च स्वरसत सङ्गच्छते । अतोऽत्र 'आकाश'शब्दवाच्यः परमात्मेव ॥

ननु नामरूपकर्तृत्वादिना परमात्मनो जीवादर्थान्तरत्वस्य आपातत प्रतीतावपि, परमात्मा जीवादर्थान्तरमेवेति निर्धारणमयुक्तम् । बृहदारण्यके [3]"कतम आत्मा" इति वैदेहप्रश्नस्य याज्ञवल्क्यप्रतिवचने, [3]"योऽय विज्ञानमय प्राणेषु" इत्यादिना विज्ञानमयशब्दनिर्दिष्ट जीवात्मान प्रस्तुत्य, प्रतिवचनान्ते [4]"एष ब्रह्मलोक सम्राडिति होवाच याज्ञवल्क्य" इत्यत्र, 'ब्रह्मलोक'शब्देन "धूत्वा शरीरमकृत कृतात्मा ब्रह्मलोकमभिसभवामि" इत्यादिषु 'ब्रह्मलोक'शब्देन निर्दिष्ट प्राप्य वस्तु प्रत्यभिज्ञाप्य, तस्य "एष" इति एतच्छब्दपरामृष्टपूर्वप्रकृतजीवात्मना प्राप्त्रा सममैक्योपदेशात्, तस्मिन्नेवाध्याये चतुर्थब्राह्मणे, [6]"मनसैवानुद्रष्टव्य नेह नानास्ति

---

[1] छा ८ १४ १ [2] छा ८ १२ १ [3] बृ ६ ३ ७ [4] बृ ६ ४ २३
[5] छा ८ १३ १ [6] बृ ६ ४ १९, २०

किञ्चन....एकधैवानुद्रष्टव्यं" इत्यत्र द्वैतनिषेधाच्च इति चेत्। मैवं-तत्रैव तृतीयब्राह्मणे सुषुप्तिनिरूपणप्रकरणे, [1]"एवमेवायं पुरुषः प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद, नान्तरं" इत्यनेन सुषुप्तस्य जीवस्य प्राज्ञशब्दोक्तस्य परमात्मनश्च परिष्वज्यपरिष्वञ्जकभावस्य अभिहितत्वेन, तदवस्थायां परिष्वज्यपरिष्वञ्जकयोरज्ञप्राज्ञयोर्भेदस्यावश्यंभावात्, तत्रैव जीवस्य देहात् उत्क्रान्त्यभिधानप्रकरणे, [2]"प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन् याति" इत्यत्र शकटसारथ्योरिव जीवपरमात्मनोरन्वारोहरूपसंबन्धविशेषस्य प्रतिपादनेन तेनापि तयोर्भेदावश्यंभावाच्च। [3]"एष ब्रह्मलोकः सम्राट्" इति इदं वाक्यं तु न उक्तरीत्या प्राप्यप्राप्त्रोः परमात्मप्रत्यगात्मनोः स्वरूपैक्यपरं, अपि तु "एष" इति सुषुप्तचाधारतया पूर्वप्रकृतस्य परमात्मनः [4]"अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" इति सुषुप्तिप्रकरणवाक्यस्थब्रह्मलोकशब्दवाच्यत्वप्रतिपादनपरम्। ततश्च एषः-प्रत्यगात्मन सुषुप्त्याधारः परमात्मा छान्दोग्ये अष्टमाध्याये [4]"एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" इत्यत्र 'ब्रह्मलोक'शब्दवाच्य इत्यर्थः ॥

एवं [5]"नेह नानास्ति किञ्चन" [6]"एकधैवानुद्रष्टव्यम्", इत्यनयोरनन्तरं [7]"सर्वस्याधिपतिः स न साधुना कर्मणा भूयान् नो एवासाधुना कर्मणा कनीयान् एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय" इत्यादिना परमात्मनो मुक्तात्मन्यसभावितस्याकर्मायत्तैश्वर्यादेः प्रतिपादनेन तयोर्भेदावश्यंभावेन, "नेह नानास्ति

[1] बृ. ६-३-२१. [2] बृ. ६-३-३५. [3] बृ. ६-४-२३. [4] छा. ८-३-२
[5] बृ. ६-४-१९. [6] बृ. ६-४-२०. [7] बृ. ६-४-२२.

किञ्चन'' इत्यस्य आत्मद्वैतनिषेधपरत्वायोगात्, बद्धान्मुक्ताच्च जीवात् परमात्मनोऽर्थान्तरत्वं दुरपह्नवमिति ॥

इति अर्थान्तरत्वाधिकरणम् ॥ १० ॥

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य श्रीदेशिकाचार्यस्य कृतिषु
शारीरकाधिकरणरत्नमालाप्रकाशे
प्रथमाध्यायस्य तृतीयः पादः ॥

## प्रथमाध्यायस्य चतुर्थः पादः ॥

### २८ ॥ आनुमानिकाधिकरणम् ॥ १ ॥

प्रथमपादे मुमुक्षुभिर्जिज्ञास्यस्य ब्रह्मणो जगत्कारणत्वं लक्षणमभिधाय, कारणवाक्येषु प्रधानादीनां प्रतिपाद्यत्वशङ्कानिराकरणेन चिदचिद्विलक्षणे ब्रह्मणि लक्षणसमन्वयः कृतः । अनन्तरत्रिपाद्या उक्तलक्षणस्यातिव्याप्तिनिरासमुपक्रम्य, द्वितीयपादे अस्पष्टचिदचिल्लिङ्गप्रतिपादककारणवाक्यानां, तृतीयपादे स्पष्टचिदचिल्लिङ्गप्रतिपादककारणवाक्यानां च विचारेण तयोः अतिव्याप्तिशङ्का परिहृता । इदानीं चतुर्थपादे अत्यन्तस्पष्टचेतनाचेतनालिङ्गप्रतिपादककारणवाक्यविचारेण तयोरतिव्याप्तिशङ्का परिह्रियते इत्युत्तरोत्तरपूर्वपक्षयुक्तिप्राबल्यात् पादविभागक्रमः । अनन्तरपूर्वाधिकरणे बद्धमुक्तोभयावस्थात् जीवात् विलक्षणः परमात्मेति व्यवस्थापितम् । जीवात्परस्य

परमात्मनाऽन्न कस्यचिद्भावात् तदनुपपन्नमित्याक्षेपश्च परिहृत । प्रकारान्तरेण तथाविधाक्षेपपरिहाराय प्रवृत्तमिदमधिकरणम् । अत्र हि [1]"इन्द्रियेभ्य परा ह्यर्था " इत्यादिमन्त्रे, [2]"पुरुषान्न पर किञ्चित् " इति बद्धमुक्तोभयावस्थात् साङ्ख्याभिमतपुरुषात् परस्य प्रतिषेधमाशङ्क्य परिह्रियते ॥

## आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १-४-१ ॥

[सूक्ष्म तु तदर्हत्वात ॥ २ ॥
तदधीनत्वादर्थवत् ॥ ३ ॥
ज्ञेयत्वावचनाच्च ॥ ४ ॥
वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥
त्रयाणामेव चैवमुपन्यास प्रश्नश्च ॥ ६ ॥
महद्वच्च ॥ ७ ॥]

एकेषां—कठाना शाखाया, कठवल्लीष्विति यावत्, आनुमानिकं—स्वतन्त्र प्रधान अपि प्रतिपाद्य दृश्यते इति चेत्, इत्यन्त शङ्काप्रकार । 'न'इत्यादि तत्परिहारप्रकार । शरीररूपकविन्यस्तगृहीतेः—शरीररूपस्य रूपकविन्यस्तस्य, रथत्वेन रूपितस्य, गृहीतेः—[1]"इन्द्रियेभ्य परा ह्यर्था " इति विचारविषयवाक्यस्थाव्यक्तशब्देन ग्रहणात् । इन्द्रियादीना नियन्तव्यता दर्शयति च श्रुति इति सूत्रार्थ ॥

योगिवशीकरणीयेष्विन्द्रियपूर्वेषु यस्य मुख्यत्वम् ।
अभिधत्ते कठवल्ली तद्ब्रह्म श्रीनिवासनाम भजे ॥ ३० ॥

अर्थः । [1]"इन्द्रियेभ्य परा ह्यर्था अर्थेभ्यश्च पर मन । मनसस्तु

[1] कठ १ ३ १०   [2] कठ १ ३ ११

परा बुद्धिः बुद्धेरात्मा महान् परः। महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः॥" इति कठवल्लीश्रुतिः वागादीन्द्रियप्रभृतिषु उपासननिष्पत्त्यर्थमुपासकवशीकरणीयेषु अर्थेषु, यस्य—श्रीनिवासापरनामधेयस्य ब्रह्मणो, मुख्यत्वं-प्रधानत्वं, अभिधत्ते, तद्ब्रह्मेति पूर्ववत्॥

भावः। कठवल्ल्यां, [1]"आत्मानं रथिनं विद्धि शरीरं रथमेव च। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च। इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।" इत्युपक्रम्य, [2]"विज्ञानसारथिर्यस्तु मनःप्रग्रहवान् नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्॥" इत्यन्तेन संसाराध्वपारभूतं वैष्णवं परमपदं जिगमिषोरुपासकस्य स्वात्मस्वशरीरबुद्धिमनश्चक्षुरादीन्द्रियतद्विषयेषु गमनपरिकरभूतरथिरथसारथिप्रग्रहाश्वगमनमार्गत्वानि परिकल्प्य, वशीकृतोपदर्शितरथिप्रभृतिगमनमार्गपर्यन्तपरिकरेणैव उपासकेन जिगमिषितं वैष्णवं पदं प्राप्तुं शक्यं इत्यभिधाय, उपासकेन वशीकरणीयेषूत्तरोत्तरं प्रधानभूतानि यानि यानि, तानि [3]"इन्द्रियेभ्यः परा ह्यर्थाः" इत्यादिना उच्यन्ते। तत्र वशीकरणीयेषु, इन्द्रियापेक्षया विषयाः शब्दादयः प्रधानभूताः, तेभ्यो मनः, तदपेक्षया अध्यवसायः, तदपेक्षया स्वात्मा, तदपेक्षया उपासकशरीरं, तदपेक्षया अधिगन्तव्यो विष्ण्वाख्यः परमपुरुषः प्रधानभूतः, तदपेक्षया वशीकरणीयं न किञ्चिदस्ति इत्युच्यते॥

अत्र वशीकार्या इन्द्रियादयः स्वस्वशब्देनैव निर्दिश्यन्ते; रथत्वेन परिकल्पितं शरीरं तु न स्वशब्देन उच्यते। अतः परिशेषात्, उदाहृतश्रुतिवाक्यस्थाव्यक्तशब्देन तदुच्यत इति निश्चीयते। एतदेवेन्द्रियादीनां

[1] कठ. १-३-३. [2] कठ. १-३-९. [3] कठ. १-३-१०.

नियन्तव्यत्वं अनन्तरमन्त्रो दर्शयति [1]"यच्छेद्वाङ्मनसी प्राज्ञः तद्यच्छेत् ज्ञान आत्मनि। ज्ञानमात्मनि महति नियच्छेत् तद्यच्छेच्छान्त आत्मनि" इति। प्राज्ञः–उपासकः, वाक्–वाचं; द्वितीयालोपः। वाक्छब्दश्च वागादिकर्मज्ञानेन्द्रियेषु लाक्षणिकः। 'मनसी' इत्यत्र दीर्घश्छान्दसः; मनसि इत्यर्थः। ततश्च वाक्पूर्वकाणि इन्द्रियाणि मनसि नियच्छेत्–नियमयेत्। इन्द्रियाणां मनसि नियमनं नाम मनःप्रवृत्तिविपरीतप्रवृत्तिवैमुख्यापादनम्। तत् मनः, 'आत्मनि' इति विषयसप्तमी; आत्मविषयके ज्ञाने गच्छेत्। ज्ञानशब्देनात्र [2]"मनसस्तु परा बुद्धिः" इत्यत्रोक्ता बुद्धिर्विवक्षिता। सा चाध्यवसायविशेषरूपा। ततश्च, तन्मनः आत्मविषयके अध्यवसाये नियमयेत् इत्यर्थः। मनस आत्मविषयकाध्यवसाये नियमनं नाम आत्मा अहेयः, तदितरत्सर्वं हेयं इत्येवंविधहेयाहेयविषयकाध्यवसायविषयकत्वापादनम्। तत् ज्ञानं–तं अध्यवसायं, महति आत्मनि—कर्तृत्वेनोत्कृष्टे प्रत्यगात्मनि, नियच्छेत् नियमयेत्। अध्यवसायस्य प्रत्यगात्मनि नियमनं नाम, स एवोपादेयः इत्येवमुपादेयविषयकत्वापादनम्। तत् तं; लिङ्गव्यत्ययः छान्दसः। तं कर्तारं, शान्ते-ऊर्मिषट्कराहित्ये, आत्मनि–परमात्मनि, नियच्छेत्। कर्तुरात्मनः परमात्मनि नियमनं नाम तदेकोपायत्वानुसन्धानं शरणागत्यपरनामधेयम्। अत्र इन्द्रियादीनां जीवात्मपर्यन्तानां नियन्तव्यतायाः उक्तत्वात्, [2]"इन्द्रियेभ्यः परा ह्यर्थाः" इति मन्त्रेऽपि वशीकार्येषु उत्तरोत्तरप्राधान्यमुच्यत इति निश्चीयते। [3]"अव्यक्तात् पुरुषः परः" इत्यत्र 'पुरुष'शब्देन [4]"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदं" इत्यत्र प्राप्यतया प्रागुक्तः श्रीनिवासापरनामधेयो विष्ण्वाख्यः परमपुरुष एव वशीकार्यत्वे प्रधानतया उच्यते। [3]"पुरुषान्न परं किंचित्" इत्यनेन च, तदपेक्षया अन्यत् वशीकरणीयं नास्ति, वशीकरणीयेषु सैव काष्ठा इति उच्यते॥

[1] कठ. १-३-१३. [2] कठ. १-३-१०. [3] कठ १-३-११. [4] कठ. १-३-९.

## पूर्वपक्षः ।

[1]"इन्द्रियेभ्यः परा" इति मन्त्रे कापिलतन्त्रसिद्धतत्त्वप्रक्रिया प्रत्यभिज्ञायते । 'इन्द्रियाणि दश, भूतानि दश, अन्तःकरणं, अहङ्कारः, महान्, अव्यक्तं, पुरुषः इति पञ्चविंशतिः तत्त्वानि, तदतिरिक्तं तत्त्वं नास्ति' इति हि तत्तन्त्रप्रक्रिया । सा च [2]"इन्द्रियेभ्यः परा ह्यर्थाः" इत्यस्मिन् मन्त्रे अर्थशब्देन भूतानां ग्रहणात्, इन्द्रियादीनि पुरुषान्तानि पञ्चविंशतितत्त्वान्यभिधाय, "'पुरुषान्न परं किञ्चित्" इति पञ्चविंशातिरिक्ततत्त्वनिषेधेन प्रत्यभिज्ञायते । पञ्चविंशतितत्त्वातिरिक्तस्य ब्रह्मणो निषेधात्, अब्रह्मात्मकत्वमुक्ततत्त्वानां प्रतीयते । अतो अब्रह्मात्मकप्रधानस्यैवेहाभिधानात्, अब्रह्मात्मकप्रधानकारणतावादोऽपि श्रुतिसंमत इति ॥

## सिद्धान्तः ।

अस्मिन् मन्त्रे इन्द्रियादिषु पुरुषान्तेषु उत्तरोत्तरस्य पूर्वस्मात् पूर्वस्मात् परत्वं उच्यते । तच्च परत्वं उत्कृष्टत्वरूपं वाच्यम् । उत्कर्षश्च न कारणत्वनिबन्धनः सुवचः; अर्थानामिन्द्रियकारणत्वस्य तन्मतेऽप्यनभ्युपगमात् । अपि तु इन्द्रियादीनां पुरुषान्तानां पुरुषार्थप्राप्तये वशीकार्यत्वे प्राधान्यनिबन्धनः । इन्द्रियाद्यवशीकारे अनर्थस्य, तद्वशीकारे पुरुषार्थप्राप्तेश्च [3]"यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सह । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ यस्तु विज्ञानवान् भवति युक्तेन मनसा सह । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचि । न स तत्पदमाप्नोति संसारं चाधिगच्छति ॥ यस्तु विज्ञानवान्

[1] कठ. १-३-१०. [2] कठ. १-३-११. [3] कठ. १-३-५ to ८.

भवति समनस्कः सदा शुचिः । स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥" इति प्राकरणिकमन्त्रेष्वभिधानेन इन्द्रियादिवशीकार्यत्वे प्रकरणस्य तात्पर्यावगमात्, वशीकार्येषु इन्द्रियादिषु उत्तरोत्तरस्य प्राधान्यमेवास्मिन् मन्त्रे विवक्षितमित्यवगम्यते । ततश्च पूर्वोक्तपारिशेष्यन्यायेन "[1]इन्द्रियेभ्यः परा ह्यर्थाः" इत्यस्मिन् मन्त्रे 'अव्यक्त'शब्देन पूर्वं रथत्वेन रूपितस्य शरीरस्यैव ग्रहणात्, न कापिलप्रसिद्धतत्त्वप्रत्यभिज्ञा, न वा "पुरुषान्न परं किञ्चित्" इति पञ्चविंशातिरिक्ततत्त्वप्रतिषेधः । सूक्ष्मावस्थप्रधानवाचिना अव्यक्तशब्देन शरीरस्याभिधानं तु कारणभूतप्रधानवाचिनः तस्य तत्कार्ये शरीरे लाक्षणिकत्वात् उपपद्यते । सूक्ष्मावस्थस्य प्रधानस्य मोक्षोपायानुष्ठानप्रवृत्त्यनर्हत्वात्, शरीरात्मना परिणतस्यैव तस्य तत्प्रवृत्त्यर्हत्वाच्च, अव्यक्तशब्देन लक्षणया तत्कार्यस्य शरीरस्यैव ग्रहीतुमुचितत्वात् । प्रधानस्य ब्रह्मपरतन्त्रत्वेनैव कार्यकरत्वस्य श्रुतिसिद्धतया साङ्ख्यमते तथा अनभ्युपगमादेव तन्मतप्रतिक्षेपः ॥

किञ्च प्रधानस्य साङ्ख्ये ज्ञेयत्वाङ्गीकारात् प्रकृते च प्रधानस्य ज्ञेयत्वानुक्तेः न प्रकृतमन्त्रस्थाव्यक्तशब्दः स्वतन्त्रप्रधानपर इति निश्चीयते । [3]"अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते" इति मन्त्रस्तु नाव्यक्तस्य ज्ञेयत्वप्रतिपादनपरः । तस्य [4]"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ।" इति पूर्वमन्त्रप्रकृतावैष्णवाख्यप्राप्यभूतपरब्रह्मणः साक्षात्कार्यत्वप्रतिपादनपरत्वात्, प्रकरणेन तथाऽवगमात् । "महतः परः" इत्यस्य इन्द्रियादिभ्य उत्कृष्टाज्जीवात्मन उत्कृष्टत्वप्रतिपादनपरतयोपपत्तेः ॥

[1] कठ १३१० [2] कठ १३११ [3] कठ १३१५ [4] कठ १३९

किञ्च अस्मिन् प्रकरणे [1]"अन्यत्र धर्मादन्यत्राधर्मात् अन्यत्रास्मात् कृताकृतात्। अन्यत्र भूतात् भव्याच्च यत्तत्पश्यसि तद्वद," इति प्राप्यस्य ब्रह्मणः तत्प्राप्त्युपायस्य तत्प्राप्तुश्च त्रयाणामेव स्वरूपजिज्ञासया प्रश्नः, त्रयाणामेव ज्ञेयत्वेन प्रतिवचनं च दृश्यते, न प्रधानस्य। अतः प्रधानस्य अप्रकृतत्वादेव "इन्द्रियेभ्यः परा ह्यर्था" इत्युदाहृतमन्त्रस्थाव्यक्तशब्दो न ज्ञेयत्वेन साङ्ख्याभिमतप्रधानपरः, अपि तु पुरुषार्थसाधनप्रवृत्त्युपयोगितया प्रकृततत्परिणामभूतशरीरपर इति निश्चीयते। एवं यथा उक्तमन्त्रे [2]"बुद्धेरात्मा महान् परः" इत्यत्र महच्छब्दः आत्मेति विशेषणात्, न साङ्ख्यमतसिद्धमहत्तत्त्वपरः, तथा [3]"महतः परमव्यक्तं" इत्यत्र अव्यक्तशब्दोऽपि तदर्थस्य महतः परः इति महच्छब्दोक्तादात्मनः परत्वेनोच्यमानतया न साङ्ख्यमतसिद्धप्रधानाख्यतत्त्वपरः, तस्य आत्मापेक्षया परत्वासम्भवादिति निश्चीयते इति ॥

इति आनुमानिकाधिकरणम् ॥ १ ॥

---

२९ ॥ चमसाधिकरणम् ॥ २ ॥

पूर्वाधिकरणे पारिशेष्यन्यायेन अव्यक्तशब्दस्य शरीरपरतासिद्ध्या, स्वतन्त्रप्रधानपरत्वं निराकृतम्। 'अजा'मन्त्रे तथाविधप्रमाणाभावात्, स्वतन्त्रप्रधानपरत्वमस्तु इत्याक्षेपपरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## चमसवदविशेषात् ॥ १-४-८ ॥

ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥

[कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥]

---

[1] कठ १ २ १४ [2] कठ १ ३ १० [3] कठ १ ३ ११

यथा [1]"अर्वाग्बिलश्चमस ऊर्ध्वबुध्न" इत्यत्र भक्षणसाधनमात्रवाचिना 'चमस'शब्देन भक्षणसाधनविशेषाप्रतिपत्तावपि, प्राकरणिकेन [1]"इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न" इति वाक्येन शिरोरूपः चमसविशेषः प्रतीयते, तद्वत् इह 'अजा'मन्त्रे 'न जायते इत्यजा' इत्यजात्वमात्रप्रतीतावपि, प्रकृते स्वतन्त्रत्वास्वतन्त्रत्वरूपविशेषप्रतिपादकप्रकरणाद्यभावात्, अजामन्त्रेण न स्वतन्त्रं प्रधानमुच्यत इति प्रथमसूत्रार्थः ॥

द्वितीयसूत्रे 'तु'शब्दोऽवधारणार्थः । 'अजा'मन्त्रे अभिधीयमाना प्रकृतिः ज्योतिरुपक्रमा तु—ज्योतिः परं ब्रह्म, तदुपक्रमा तत्कारणिका; तत्कार्यभूतैवेत्यर्थः । एके—तैत्तिरीयशाखिनः, ब्रह्मकार्यत्वेनैव एना अधीयते हि इति द्वितीयसूत्रार्थः ।

यत्कार्यत्वं प्रकृतेः प्रजाः सृजन्त्या अजाश्रुतिर्ब्रूते ।
शाखान्तरैककण्ठ्यात् तद्ब्रह्म श्रीनिवासनाम भजे ॥२१॥

[2]"अजामेका" इति श्वेताश्वतरश्रुतिः शाखान्तरैककण्ठ्यात्—तैत्तिरीयशाखास्थाजामन्त्रेणैकार्थ्यात्, प्रजाः सृजन्त्याः प्रकृतेः यत्कार्यत्वं—श्रीनिवासापरनामधेयब्रह्मकार्यत्वं ब्रूते, तद्ब्रह्मेति पूर्ववत् ॥

भावः । श्वेताश्वतरोपनिषदि [2]"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य" इति श्रूयते । अत्र 'अजा'शब्देन 'न जायत इत्यजा' इति व्युत्पत्त्या अनुत्पन्नत्वमात्रं प्रधानस्य प्रतीयते, न तु स्वतन्त्रत्वं, अस्वतन्त्रत्वं वा, तद्ग्राहकप्रमाणाभावात् । प्रस्तुत अजामन्त्रेण शाखान्तरैकार्थ्येन

[1] बृ. ४-२-३. [2] श्वे ४-५

ह्मपारतन्त्र्यमेव प्रतीयते । तैत्तिरीयशाखायां अंभस्यनुवाके हि [1]"अणोरणीयान् महतो महीयान् आत्मा गुहायां निहितोऽस्य जन्तोः । तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्" इति प्रकृत्य. [1]"सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्चिषः समिधः सप्त जिह्वाः" इत्यादिना परमात्मनः सकाशात् विश्वोत्पत्त्यभिधानप्रकरणे, [1]"अजामेकां" इति मन्त्रः पठ्यते । अतो ब्रह्मकार्येषु मध्यपाठात्, प्रकृतेरपि ब्रह्मकार्यत्वं प्रतीयते । अयं च विश्वोत्पादक आत्मा मुण्डकोपनिषदि द्वितीयखण्डे, [2]"सप्त प्राणाः प्रभवन्ति तस्मात्" इत्यादिना विश्वोत्पादकत्वेन अभिहित आत्मेति प्रत्यभिज्ञायते । तत्र च विश्वोत्पादकत्वेनाभिहित आत्मा [3]"नारायणात् प्राणो जायते" इति मन्त्रविवृतार्थेन [4]"एतस्माज्जायते प्राण" इति तत्प्रकरणस्थमन्त्रेण नारायण एवेति निश्चीयत इति पूर्वमेवोक्तम् । अतः 'अजा'-शब्दवाच्यप्रधानस्य, परमात्मनः श्रीनिवासापरनामधेयान्नारायणात् उत्पत्तिप्रतीत्या, तत्कार्यत्वं प्रतीयत इति ॥

## पूर्वपक्षः ।

श्वेताश्वतरोपनिषदि [5]"अजा" इत्यादिमन्त्रः पठ्यते । अस्यार्थः—लोहितशुक्लकृष्णां—रजस्सत्त्वतमोरूपगुणत्रयमयी, सरूपाः—सत्त्वरजस्तमोमयीः, प्रजा–देवमनुष्यादिरूपाः, सृजमानां–उत्पादयन्तीं, एकां अजां—प्रकृतिं, एकः अजः—संसार्यात्मा, जुषमाणः—प्रीयमाणः सन्, अनुशेते—अनुसृत्य वर्तते । अन्योऽजः मुक्तात्मा, भुक्तभोगां—अनुभूतशब्दादिविषयां, एनां–प्रकृतिं, जहाति–त्यजति इति ॥

अत्र [5]"सृजमानां" इत्यत्र कर्त्रर्थविहित'शानच्'प्रत्ययेन, प्रकृतेः सृष्टौ कर्तृत्वं बोध्यते । तच्च कर्तृत्वं [6]"स्वतन्त्रः कर्ता" इत्यनुशासनेन

---

[1] तै. उ.　[2] मुण्ड. २　[3]　[4]　[5] श्वे. ४-५.
[6] अष्टा.

स्वतन्त्रत्वरूप प्रतिपन्नम्। अत प्रकृते सृष्टौ स्वातन्त्र्यप्रतीते 'अजा' इत्यकार्यत्वश्रवणाच, कापिलतन्त्रसिद्धा अब्रह्मात्मिका प्रकृति कारण प्रतीयत इति ॥

## सिद्धान्तः ।

[1] "सृजमाना" इति 'शानच्'प्रत्ययेन स्वातन्त्र्यप्रतीतावपि, 'रथो गच्छति' इत्यादा सारथिप्रेरितस्यापि रथस्य गमने व्यापाराश्रयत्वरूपस्वतन्त्रत्वप्रतीतिवत् इहापि प्रागुक्तरीत्या ब्रह्मप्रेरिताया अपि प्रकृते सृष्टौ व्यापाराश्रयत्वरूपस्वतन्त्रत्वोपपत्ते, न कापिलतन्त्रसिद्धानब्रह्मात्मकप्रकृतेर्ग्रहणे नियामकमस्ति। प्रत्युत प्रागुक्तरीत्या ब्रह्मकार्यतया ब्रह्मात्मिकाया एव प्रकृते तैत्तिरीयशाखायामवगमात्, ब्रह्मात्मकप्रकृतिरेव गृह्यते। यद्यपि प्रधानस्य अजाशब्दाभिहितमनुत्पन्नत्व सृष्टिप्रकरणावगतमुत्पन्नत्व च विरुध्यते, तथाऽपि तम स्वरूपकारणावस्थापन्नाया तस्या अनुत्पन्नत्व, महदादिकार्यावस्थापन्नाया तस्या उत्पन्नत्व चेति अवस्थाभेदात् न विरोध। यथा मधुविद्याया आदित्यस्य एकस्यव कार्यावस्थाया उदयास्तमयौ मधुत्व च, कारणावस्थाया तेषामभावश्च उक्तौ अवस्थाभेदेन न विरुध्येते, तद्वत् ॥

इति चमसाधिकरणम् ॥ २ ॥

---

३० ॥ सङ्ख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥

पूर्वाधिकरणे 'अजा'मन्त्रे अजाशब्देन अब्रह्मात्मकप्रकृतिर्गृह्यत इति विशेषनिर्णायकाभावेन, ब्रह्मात्मकप्रकृतिरेव गृह्यत इति व्यवस्थापितम्। "यस्मिन् पञ्च पञ्चजना' इति मन्त्रे विशेषग्रहणहेतरास्त इत्याक्षेपपरिहाराय प्रवृत्तमिदमधिकरणम् ॥

[1] श्वे ४-५ [2] ३-१-४-१७

# न संख्योपसङ्ग्रहादपि नानाभावादति-रेकाच्च ॥ १-४-११ ॥

[प्राणादयो वाक्यशेषात् ॥ १२ ॥

ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥]

सङ्ख्यायाः--पञ्चविंशतिसङ्ख्याया, उपसङ्ग्रहेऽपि--प्रतिपादनाङ्गीकारेऽपि, नानाभावात्--मन्त्रोक्तानामर्थाना कापिलतन्त्रोक्तेभ्यो भिन्नत्वात्, अतिरेकाच्च--आकाशस्य आत्मनश्च अतिरिक्तत्वाच्च, न कापिलतन्त्रसिद्धतत्त्वग्रहणमिति सूत्रार्थ ॥

पञ्चजनशब्दितानामाकाशस्येन्द्रियाणां च ।
यदधीना स्थितिरुक्ता तद्ब्रह्म श्रीनिवासनाम भजे ॥ ३२ ॥

अर्थः । बृहदारण्यके [1] "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठित तमेवमन्य आत्मान विद्वान् ब्रह्मामृतोऽमृत" इति मन्त्रे 'पञ्चजन'शब्दनिर्दिष्टानां चक्षुरादीन्द्रियाणां आकाशस्य च, यदधीना---श्रीनिवासापरनामधेयब्रह्माधीना स्थितिरुक्ता, तद्ब्रह्मेति पूर्ववत् ॥

भावः । "यस्मिन् पञ्च पञ्चजना" इति मन्त्रे पञ्चशब्दविशेषितेन पञ्चजनशब्देन पञ्च ज्ञानेन्द्रियाण्यभिधाय, तेषा आकाशस्य च 'यस्मिन्' इति सप्तम्यन्तयच्छब्दनिर्दिष्टे वस्तुनि प्रतिष्ठितत्वमभिधाय, उत्तरार्धे यच्छब्दनिर्दिष्टस्य ब्रह्मत्वेन विवरणात्, इन्द्रियाणा आकाशस्य च ब्रह्मणि प्रतिष्ठितत्वोक्त्या ब्रह्मशरीरत्वपर्यवसितब्रह्माधीनस्थितिकत्वमुक्त भवति । इद च आकाशस्येन्द्रियाणा चाधारतया उच्यमान ब्रह्म मुण्डकोपनिषदि "यस्मिन्

[1] बृ ६ ४ १७ मु २ ·

द्यौ पृथिवी चान्तरिक्षमोत मन सह प्राणैश्च सर्वे । तमेवैकं जानथाऽऽत्मान'' इत्यत्र आकाशादे इन्द्रियाणा च आधारतया उच्यमान आत्मेवेति प्रत्यभिज्ञायते । स च आत्मा अमृतत्वप्रापकत्वरूपामृतसेतुत्वादिना श्रीनिवासापरनामधेयो नारायण एवेति द्युभ्वाद्यधिकरणे निरूपिततया [1]''यस्मिन् पञ्च पञ्चजना'' इति मन्त्रोक्त ब्रह्मापि श्रीनिवासापरनामधेयो नारायण एवेति निर्धार्यत इति ॥

## पूर्वपक्षः ।

[1]''यस्मिन् पञ्च पञ्चजना'' इति मन्त्रे 'पञ्चाना जनाना समूहा पञ्चजना' इति 'पञ्चपूल्य' इतिवत् समास । पुलिङ्गत्व छान्दसम् । तेन पञ्चाना समूहा लभ्यन्ते, तेषा पञ्चत्वसङ्ख्याविशेषणेन समूहपञ्चक लभ्यते । तेन कापिल तन्त्रसिद्धपञ्चविंशतितत्त्वसंख्या प्रत्यभिज्ञायते । अत पञ्च महाभूतानि, पञ्च तन्मात्राणि, पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, प्रकृतिमहदहङ्कारमनासि पुरुषश्च इति पञ्च, आहत्य पञ्चविंशतितत्त्वसङ्ख्यालाभात्, तावन्त्येव तत्त्वानि इत्यर्थलाभेन, अब्रह्मात्मकान्येव एतानि तत्त्वानि इति निर्धार्यत इति ॥

## सिद्धान्तः ।

उक्तरीत्या पञ्चविंशतिसङ्ख्यालाभाभ्युपगमेऽपि, तेषा [1]'' यस्मिन् '' इति यच्छब्दनिर्दिष्टपरमात्मप्रतिष्ठितत्वोक्त्या, ब्रह्मात्मकत्वलाभात्, नात्र तन्त्रसिद्धाब्रह्मात्मकतत्त्वोक्ति । यच्छब्दनिर्दिष्टस्य आत्मन आकाशस्य च अधिकस्योक्तेरपि, न तन्त्रसिद्धपञ्चविंशतिसङ्ख्याप्रत्यभिज्ञा । आकाशस्य पृथ ङ्निर्देशेन, आकाशघटितमहाभूतसमूहस्य 'पञ्चजन'शब्देन ग्रहणासभवात्, सूत्रे 'अपि'शब्देन पञ्चविंशतिसङ्ख्यालाभ एव न सभवति इति द्योत्यते ॥

[1] बृ ६ ४ १७

उक्तमन्त्रे 'पञ्चजन'शब्दार्थस्तु, [1]"प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुस्ते निचिक्युर्ब्रह्म पुराणमग्र्यं" इति वाक्यशेषात्, इन्द्रियाणि इत्यवगम्यते। अत्र मन्त्रे [1]"चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं" इत्यादिना, अस्य मन्त्रस्य [2]"तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतं" इति पूर्वमन्त्रे प्रस्तुतं यत् ब्रह्मणो ज्योतिषां ज्योतिष्ट्वं इन्द्रियाणां स्वस्वकार्यनिर्वहणशक्त्याधायकत्वरूपं तद्विवरणाय प्रवृत्तत्वमवगम्यते। ततश्च 'प्राण'शब्दमुख्यार्थस्य प्राणस्य 'ज्योतिः'शब्दनिर्देशानर्हत्वात्, वाय्वाप्यायितं त्वगिन्द्रियं प्राणशब्देन लक्ष्यते। ततश्च प्राणस्य–त्वगिन्द्रियस्य, प्राणं—स्पर्शग्रहणशक्त्याधायकमित्यर्थः। [1]"चक्षुषश्चक्षुः" इत्यादेरपि चक्षुरादीनां रूपादिग्रहणशक्त्याधायकमित्यर्थः। [1]"अन्नस्यान्नं" इत्यत्र 'अन्न'शब्देन पृथिव्याप्यायितं घ्राणेन्द्रियं, अन्नभक्षणसाधनं रसनेन्द्रियं च तन्त्रेण गृह्यते। अन्नस्यान्नं—तयोरिन्द्रिययोः स्वविषयग्रहणशक्त्याधायकमित्यर्थः। एवंविधं ब्रह्म ये विदुः ते ब्रह्म निश्चितवन्त इति श्रुत्यर्थः॥

अस्मिन् मन्त्रे त्वक्चक्षुश्श्रोत्रघ्राणरसनानां पञ्चानां ज्ञानेन्द्रियाणां विशिष्योक्तेः [3]"यस्मिन् पञ्च पञ्चजनाः" इति पूर्वमन्त्रे 'पञ्चजन' शब्दनिर्दिष्टानां पञ्चत्वसङ्ख्योक्तेश्च, पञ्चत्वसंख्याविशेषिताः पञ्चजनाः त्वगिन्द्रियादीनि पञ्च ज्ञानेन्द्रियाणि इति निश्चीयते।

यद्यपि काण्वशाखायां 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुस्ते निचिक्युर्ब्रह्म पुराणमग्र्यं' इत्येवंरूपे वाक्यशेषे अन्नस्य अग्रहणात्, तेन पञ्चजनशब्दार्थः पञ्च ज्ञानेन्द्रियाणि इति न लभ्यते, तथाऽपि तत्र [2]"तं देवा ज्योतिषां ज्योतिः" इति पूर्वमन्त्रे षष्ठ्यन्तज्योतिःशब्देन विषयप्रकाशकानां केषाञ्चित् उपात्तत्वात्, [3]"यस्मिन् पञ्च

[1] बृ. ६-४-१८. [2] बृ. ६-४-१६. [3] बृ. ६-४-१७.

पञ्चजना'' इति मन्त्रे पञ्चजनशब्दोक्तेषु पञ्चत्वसङ्ख्यानिवेशाच्च पञ्चत्वसङ्ख्याविशेषिता पञ्चजना पूर्वमन्त्रे ज्योतिःशब्दोक्तानि विषयप्रकाशकानि त्वगादीनि पञ्चज्ञानेन्द्रियाणि इति निश्चीयते । अतस्तेषामपि [1]'' प्राणस्य प्राण'' इत्यादिमन्त्र त्वगादिपञ्चज्ञानेन्द्रियपर एवेति निश्चीयमानतया, सर्वशाखाप्रत्ययन्यायेन तत्र 'अन्नस्यान्न' इति पदमुपसंहर्तव्यमिति ॥

इति सङ्ख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥

३१ ॥ कारणत्वाधिकरणम् ॥ ४ ॥

पूर्वाधिकरणे इन्द्रियाणामाकाशादीना च ब्रह्माश्रितत्वोक्त्या ब्रह्मात्मकत्वलाभेन, अब्रह्मात्मकस्य प्रधानस्य कारणत्व न श्रुतिसमतमित्युक्तम् । इदानीं वेदान्तेषु कारणवाक्याना ब्रह्मपरत्वे ऐककण्ठ्यासभवेन, प्रधानपरत्वे ऐककण्ठ्यसभवेन च अब्रह्मात्मकप्रधानकारणत्व एव श्रुतीना तात्पर्यमवश्यमाश्रयणीय इत्याक्षेपपरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः

[समाकर्षात् ॥ १५॥] ॥ १-४-१४ ॥

आकाशादिषु—आकाशतेज प्रभृतिषु कार्येषु, कारणत्वेन यथा व्यपदिष्टस्य उक्तेः—सर्वज्ञत्वसर्वशक्तित्वसत्यसङ्कल्पत्वादिपूर्वोक्तप्रकारविशिष्टस्यैव आकाशादिकारणत्वोक्तेरिति यावत्, कारणवाक्ये ब्रह्मैव कारणमिति निश्चेतु शक्यमिति सूत्रार्थ ॥

सर्वज्ञत्वादियुत यदेव वियदादिकारणत्वेन ।
श्रुतयो वदन्ति सर्वा. तद्ब्रह्म श्रीनिवासनाम भजे ॥ ३३ ॥
सर्वमेऽर्थ ।

[1] बृ ६ ४ १८

भावः । [1]"सोऽकामयत बहु स्यां प्रजायेयेति" इत्यादिकारणवाक्येषु सर्वेषु सर्वज्ञत्वादिविशिष्टस्य आनन्दमयस्य पुण्डरीकाक्षस्य श्रीनिवासाख्यस्य ब्रह्मण एकस्यैव कारणत्वप्रतिपादनेन सर्वेषां कारणवाक्यानामैककण्ठ्यसंभवात्, ब्रह्मकारणतावादे न कश्चित् दोष इति ॥

## पूर्वपक्षः ।

कारणवादिवाक्येषु कचित् [2]"असद्वा इदमग्र आसीत्, ततो वै सदजायत" इत्यादिषु असतः कारणत्वमभिधीयते । [3]"सदेव सोम्येदमग्र आसीत्" इत्यादौ सतः कारणत्वमुच्यते । ब्रह्मकारणत्ववादे ब्रह्मणः सत्त्वासत्त्वयोर्द्वयोरसंभवात् वाक्यद्वयैककण्ठ्यं न संभवति । एवं [4]"तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यां व्याक्रियत" इति 'अव्याकृत'शब्दनिर्दिष्टस्य कारणत्वमुच्यते । तदपि ब्रह्मकारणत्वपक्षे न घटते । अव्याकृतत्वं हि नामरूपविशिष्टतया व्यक्तत्वाभाव । तच्च प्रलयावस्थापन्नेऽव्यक्तशब्दवाच्ये प्रधान एवोपपद्यते । तस्यानादित्वात् [1]"सदेव सोम्येदमग्र आसीत्" इत्यादिषु सच्छब्देन निर्देशोपपत्तिः; परिणामित्वाच्च [2]"असद्वा इदमग्र आसीत्" इत्यादिषु असच्छब्दव्यपदेशोऽपि कार्यावस्थावैशिष्ट्येन असत्त्वपरतया उपपद्यत इति । एवमव्याकृतसदसच्छब्दैः प्रधानमेव कारणमिति निश्चिते सति, ईक्षणादय सृष्ट्यौन्मुख्याभिप्रायकतया वर्णनीयाः । अवश्यं न ब्रह्मकारणत्ववादिनापि ईक्षणादीनाममुख्यत्वं आश्रयणीयम् । तत्पक्षे चिदचिद्विशिष्टस्य ब्रह्मण कारणत्वाभ्युपगमात्, तत्र विशिष्टान्तर्गते विशेषणे अचिदंशे मुख्येक्षणासंभवात्; ततश्च ईक्षणस्य कचिदंशे अमुख्यत्वं कचिन्मुख्यत्वं इत्याश्रयणस्यान्याय्यत्वात् अचितोऽव्यक्तस्य कारणत्वं स्वरसप्रतिपन्नमभ्युपगम्य, ईक्षणादीनां गौणत्वाश्रयणमेव युक्तमिति ॥

---

[1] तै. आन. ६. [2] तै. आन. ७ [3] छा. ६-२-१. [4] बृ. ३-४-७.

सिद्धान्तः ।

कारणवाक्येषु सर्वेषु सर्वज्ञत्वादिविशिष्टस्यैव कारणत्वमभिधीयते । यथा [1]"सत्यं ज्ञानमनन्तं ब्रह्म" इत्युपक्रम्य, "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति" इति ब्रह्मणो 'विपश्चिता' इति सर्वज्ञत्वरूप विपश्चित्त्वमभिधाय, [1]"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इति तदेव तच्छब्देन परामृश्य, तस्मात् सर्वज्ञात् ब्रह्मण आकाशादीनामुत्पत्तिमभिधाय, विपश्चित्त्वविवरणाय प्रवृत्ते [2]"सोऽकामयत । बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इदं सर्वमसृजत" इत्यादौ तच्छब्देन आकाशादिकारणभूतं विपश्चितमात्मानं परामृश्य, तस्य बहुभवनसङ्कल्पं तपःशब्दनिर्दिष्टं स्रष्टव्यप्रकारालोचनं तत्पूर्वकसृष्टिं चाभिधाय, [3]"तदप्येष श्लोको भवति" इति तद्विषयमेव श्लोकमुपक्रम्य, [3]"असद्वा इदमग्र आसीत्" इत्यादिना स एव श्लोकः पठ्यते । अतोऽत्र बहुभवनसङ्कल्परूप व्यप्रकारालोचनपूर्वकसृष्टिकर्ता विपश्चिदात्मा "असद्वा" इति असच्छब्देन आकृष्यत इति निश्चीयते । तस्य असच्छब्दव्यपदेशस्तु [3]"ततो वै सदजायत । तदात्मानं स्वयमकुरुत" इत्यादिना तस्यैव स्वात्मनः कार्यभूत देवमनुष्यादिजगदाकारेण करणाभिधानेन सृष्टेः पूर्वं तस्य देवमनुष्यादि जगद्रूपकार्याकारेण असत्त्वाभिप्रायेणेति निश्चीयते ॥

एवं [4]"सदेव सोम्येदमग्र आसीत्" इत्यत्रापि, [5]"तदैक्षत बहु स्यां प्रजायेयेति" इति बहुभवनसङ्कल्पपूर्वकं तेजःप्रभृतिसृष्टेः, नामरूप व्याकरणसङ्कल्पपूर्वकं नामरूपसृष्टेश्चाभिधानात्, सच्छब्दनिर्दिष्टः सर्वज्ञः सत्यसङ्कल्पः चेतनविशेष इति निश्चीयते । ईक्षणस्य गौणत्वे, सङ्कल्पाना तत्तत्प्रकारविशेषोक्तिस्वारस्यभङ्गप्रसङ्गात् । तस्य सच्छब्दनिर्देशस्तु [4]"एक मेवाद्वितीयं" इत्यनेन कारणावस्थतया सत्त्वाभिप्रायेणेति निर्णीयते ॥

---

[1] तै आन-१ [2] तै आन ६ [3] तै आन ७ [4] छा ६२१ [5] छा ६२३

बृहदारण्यके [1] "तद्धेदं तर्ह्यव्याकृतमासीत्। तन्नामरूपाभ्यां व्याक्रियत" इत्यत्रापि उत्तरत्र [1] "स एष इह प्रविष्ट आनखाग्रेभ्यः पश्यन् चक्षु शृण्वन् श्रोत्रं" इत्यादिना नामरूपव्याकर्तारं पूर्वप्रस्तुतं "स एष" इत्यादिना परामृश्य, तस्य कार्ये जगति प्रवेशस्य दर्शनश्रवणादिज्ञानविशेषाणा चाभिधानात्, चेतनविशेष एवायं नामरूपव्याकर्ता इति निश्चीयते। [1] "तन्नामरूपाभ्या व्याक्रियत" इत्यत्र कर्मकर्तरिलकारेण स्वयमेव स्वात्मानं नामरूपविशिष्टमकरोत् इति प्रतीत्या. [2] "तदात्मानं स्वयमकुरुत" इति श्रुत्यैकार्थ्यप्रतीते सर्वज्ञ सत्यसङ्कल्पं ब्रह्मैव नामरूपव्याकर्तृ नामरूपभाक् च इति निश्चीयते। अतोऽत्रापि अव्याकृतशब्देन नामरूपभाक्त्वरूपकार्यावस्थाशून्यं ब्रह्मैवोच्यत इति निश्चीयते। तस्य ब्रह्मण कार्ये जगति अनुप्रवेशकथनात्, यथा जीवात्मन शरीरे अनुप्रवेशकृतं देवमनुष्यादिरूपभाक्त्व, तथा ब्रह्मणोऽपि कार्ये जगति आत्मतया अनुप्रवेशकृतं नामरूपभाक्त्वं जगद्व्याकारकमिति निश्चीयते। एवमात्मतया चिदचिदन्तःप्रविष्टस्य ब्रह्मणो जगत्स्रष्टृत्वनिश्चयात्, स्रष्टव्यप्रकारालोचनपूर्वकस्रष्टेः सर्वज्ञत्वसत्यसङ्कल्पत्वादिकं विना अनुपपत्ते चेतनाचेतनयो सार्वज्ञ्यासम्भवात्, ईश्वरसङ्कल्पादिकर्तृत्व ब्रह्मण एव, न विशेषणयोश्चेतनाचेतनयोरिति सङ्कल्पस्य न गौणत्वाश्रयणप्रसङ्ग इति॥

इति कारणत्वाधिकरणम्॥ ४॥

---

## ३२॥ जगद्वाचित्वाधिकरणम्॥ ५॥

पूर्वाधिकरणे सर्वेषु वेदान्तेषु चेतनस्यैव कारणत्वमुच्यत इत्युक्तम्। अस्तु चेतन कारणं, तथाऽपि स कर्मवश्याज्जीवान्नातिरिच्यत इति तदधिष्ठितं प्रधानमेव जगत्कारणमित्याक्षेपपरिहाराय प्रवृत्तमिदमधिकरणम्॥

---

[1] बृ ३-४-७ [2] तै. आन ७

## जगद्वाचित्वात् ॥ १-४-१६ ॥

[जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्यातम् ॥ १७ ॥
अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥]

[1]"न संख्योपसङ्ग्रहात्" इति सूत्रात् 'न' इत्यनुषज्यते । ततश्च [2]"यस्य वैतत्कर्म" इति वाक्यस्थकर्मशब्दस्य ब्रह्मकार्यभूतजगद्वाचित्वात्, नेह सांख्यमतसिद्धपुरुषस्य ग्रहणमिति सूत्रार्थः ॥

यस्यैतत्कर्मेति श्रुतिरक्षादिप्रमाणसिद्धस्य ।
ब्रूते यत्कार्यत्वं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ३४ ॥

अर्थः । [2]"यस्य वा एतत्कर्म" इति कौषीतकी श्रुतिः अक्षादिप्रमाणसिद्धस्य—प्रत्यक्षादिप्रमाणसिद्धस्य सर्वस्य जगतः, यत्कार्यत्वं—श्रीनिवासापरनामधेयब्रह्मकार्यत्वं, ब्रूते—तद्ब्रह्मेति पूर्ववत् ॥

भावः । कौषीतक्युपनिषदि बालाक्यजातशत्रुसंवादे, [2]"यो वै बालाके एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः" इति श्रूयते । इदं च बालाकिना ब्रह्मत्वेन उक्तानामादित्यचन्द्रादीनां ब्रह्मत्वं निराकुर्वतोऽजातशत्रोः तं प्रति वचनम् । त्वदुक्तानामादित्यचन्द्रादीनां यः कर्ता, अथवा, किं विशिष्य अभिधानेन । एतत् प्रत्यक्षादिप्रमाणसिद्धं कृत्स्नं जगत् यस्य कर्म, क्रियत इति कर्म—कार्यं, सः—जगत्कारणभूतः पुरुषः वेदितव्यः । वै इत्यवधारणार्थकम् । स एव वेदितव्य इत्यर्थः । इत्थं चानेन वाक्येन जगतो ब्रह्मकार्यत्वमेवोच्यते । [2]"यो वै बालाके

[1] शा. सू. १-४-११ [2] कौषी. ४-१८.

एतेषां पुरुषाणां कर्ता, यस्य वैतत्कर्म" इत्यत्र यच्छब्दस्य अनुवादरूपतया, पुरुषसूक्ते [1]"चन्द्रमा मनसो जातः चक्षोः सूर्यो अजायत" इत्यादिना सकलजगत्स्रष्टृत्वेनोक्त श्रीनिवासापरनामधेयो महापुरुष एव अत्र यच्छब्देन आदित्यादिकर्तृत्वेन अनूद्यत इति निर्णीयत इति ॥

पूर्वपक्षः ।

[1]"यो वै बालाके एतेषां पुरुषाणा कर्ता" इत्यत्र आलोकप्रदानादिना स्वभोगोपकरणभूतानामादित्यादीनामदृष्टद्वारकं भोक्तु कर्तृत्वमुच्यते । अदृष्टद्वारा कर्तृत्वनिर्वाहकं भोक्तृसंबन्धि सुकृतरूपं कर्म, [2]"यस्य वा एतत्कर्म" इत्यत्र कर्मशब्देनोच्यते । इत्थं चात्र सुकृतरूपकर्मसंबन्धी भोक्ता जीव एव यच्छब्देनोच्यते, न परं ब्रह्म; तस्य कर्मसंबन्धानभ्युपगमात् ॥

न च–'क्रियत इति कर्म' इति व्युत्पत्त्या कर्मशब्दः कार्यवाची; ततश्च एतत्-परिदृश्यमानं जगत्, यस्य कार्यं स वेदितव्य इति वाक्यार्थः । इत्थं च पूर्ववाक्येऽपि कृत्स्नजगत्कर्तु ब्रह्मण एव आदित्यादिकर्तृत्वमभिधीयते । न त्वदृष्टद्वारकं भोक्तुर्जीवस्य आदित्यादिकर्तृत्वम् । इत्थं च यच्छब्देन परं ब्रह्माभिधीयते, न जीव इति–वाच्यम् । कर्मशब्दस्य सुकृतदुष्कृतरूपे कर्मणि रूढतया, योगात् रूढेर्बलीयस्त्वेन सुकृतरूपरूढ्यर्थस्यैव ग्राह्यत्वात् । इत्थं च यच्छब्दस्य जीवपरत्वमेवोचितम् ॥

किञ्च उत्तरत्र [1]"तौ ह सुप्तं पुरुषमीयतु" इत्यादिना वेदितव्यतयोक्तस्य प्रकृतस्य पुरुषस्य यष्टिघातेनोत्थापनमभिधीयते । एवं [2]"क्वैष एतद्बालाके पुरुषोऽशयिष्ट" इत्यादिप्रश्नप्रतिवचनावसरे [3]"यदा सुप्तः स्वप्नं न कथञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवति" इत्यत्र 'अस्मिन्' इति

[1] तै आर ३-१२ [2] कौषी. ४-१८. [3] कौषी ४-१९.

इदशब्दपरामृष्टस्य तस्यैव पुरुषस्य 'अस्मिन्' इत्येतत्समानाधिकरणेन 'प्राण'शब्देन प्राणसबन्ध उक्त । अत्र प्राणशब्दस्य प्राणभृति लक्षणाया अवश्यवक्तव्यत्वात् । अतो यष्टिघातोत्थापनस्वप्नसुषुप्तत्याद्यवस्थान्वयप्राण भृत्त्वरूपाणा जीवलिङ्गाना उपलभ्यमानत्वाऽपि अथ वेदितव्यतयोक्त पुरुषो जीव एवेति निश्चीयते । तस्य कर्मवियुक्त शुद्धस्वरूप प्रकृतिवि युक्ततया वेदितव्यमिति [1]"स वे वेदितव्य" इत्यनेनोपदिश्यते । अतोऽत्र सारयतन्त्रसिद्धप्रधानाधिष्ठातृपुरुषस्यैवाभिधानात्, सर्वेषु वेदान्तेषु पुरुषा धिष्ठित प्रधानमेव जगत्कारणमुच्यत इति ॥

सिद्धान्तः ।

बालाकिना ब्रह्मत्वेन उक्तानामादित्यादिपुरुषाणा ब्रह्मत्व निराकृत्य तदज्ञातब्रह्मज्ञापनाय प्रवृत्तेऽस्मिन् अजातशत्रुवचने कर्मशब्दस्य पुण्यापुण्य रूपकर्मपरत्वे, कर्मवश्यस्य आदित्यादिसजातीयपुरुषस्य आदित्यादिवत् तेनैव ज्ञानत्वेन अज्ञातज्ञापनासिद्धे नाय कर्मशब्द पुण्यापुण्यरूपकर्मवाची, अपि तु 'क्रियत इति कर्म' इति व्युत्पत्त्या कार्यवाची । एतच्छब्दश्च पूर्ववाक्यप्रस्तुतादित्याद्युपस्थापितजगद्वाची । ततश्च एतत्—कृत्स्न जगत्, यस्य कर्म—यत्कार्य, स वेदितव्य इत्यर्थ ॥

इत्थ च पुरुषसूक्तादिषु आदित्यादिकृत्स्नजगत्कर्तृत्वेन प्रसिद्धस्य महापुरुषस्य वेदितव्यत्वलाभात्, अज्ञातज्ञापनासिद्धि । अतो नेद वाक्य साख्याभिमतप्रकृत्यधिष्ठातृसेश्वरपुरुषपर, अपि तु कृत्स्नजगत्कारणभूतब्रह्म परम् । [1]"यो वै बालाके एतेषा पुरुषाणा कर्ता स व वेदितव्य " इति पुल्लिङ्गेन यच्छब्दोक्तिस्तु, [2]"चन्द्रमा मनसो जात । चक्षो सूर्यो अजायत" इत्यादिना आदित्यचन्द्रादीनामुत्पादकतया, "तमेव विद्वानमृत इह भवति"

[1] कौषी ४ १९ [2] तै आर ३ १२

इत्यमृतत्वसाधनभूतस्ववेदनतया च पुरुषसूक्तेऽभिहितस्य च श्रीनिवासापरनामधेयस्य लक्ष्मीपतेर्महापुरुषस्य प्रत्यभिज्ञापनार्था। एवमुपसंहारे [1] "सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यं आधिपत्यं पर्येति य एवं वेद" इत्यनेन उक्तपुरुषवेदनस्य सर्वपापापहतिपूर्वकं स्वाराज्यशब्दितकर्मवश्यत्वाभावरूपमोक्षफलप्रतिपादनादपि [1] "स वै वेदितव्य" इति वाक्योक्तः पुरुषः परं ब्रह्मैवेति निश्चीयते। एवं [2] "ब्रह्म ते ब्रवाणि" इति 'ब्रह्म'-शब्देनोपक्रमः। मध्ये [2] "यस्य वैतत्कर्म" इति जगत्कारणत्वरूपब्रह्मलक्षणोक्तिः। उपसंहारे मोक्षरूपफलोक्तिः इत्येतैः लिङ्गैः महावाक्यस्य ब्रह्मपरत्वे निश्चिते, [1] "अथास्मिन् प्राण एवैकधा भवति" इत्यत्र, 'अस्मिन्' इति पदं ब्रह्मपरमेव। प्राणशब्दश्च प्राणशरीरकपरः इति इन्द्रप्राणाधिकरणोक्तन्यायेन 'अस्मिन् प्राणे' इति सामानाधिकरण्यं निर्वाह्यम्। यष्टिघातोत्थापनादिभिः जीवप्रतिपादनं तु जीवसुषुप्त्याधारतया ब्रह्मणः तद्व्यतिरिक्तत्वप्रतिबोधनार्थमिति प्रश्नप्रतिवचनाभ्यामवगम्यते॥

तथा हि—[2] "क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्वैतदभूत् कुत एतदागात्" इति जीवस्य स्वप्नसुषुप्तिस्थानयोः, प्रबोधे निर्गमापादानस्य च प्रश्नः। [3] "हिता नाम नाड्यः" इत्यादिना जीवस्य स्वप्नस्थानप्रतिवचनम्। [1] "यदा सुप्तः स्वप्नं न कथञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवति" इत्यादिना सुषुप्तिस्थानप्रश्नस्य प्रतिवचनम्। 'यदाऽयं जीवः सुषुप्तो भवति, तदा प्राणशरीरके अस्मिन् परमात्मनि, एकधा भवति—लीनो भवति' इति तदर्थः। ततश्च अत्र परमात्मनो जीवसुषुप्त्याधारत्वोक्त्या, जीवात् व्यतिरेकः प्रतिबोधितो भवति। तदेवं परमात्मनो जीवसुषुप्त्याधारतया जीवातिरिक्तत्वप्रतिबोधनाय अस्मिन् प्रकरणे जीवोक्तिः।

---

[1] कौषी. ४-२०. [2] कौषी ४-१८. [3] कौषी. ४ १९.

ननु [1]"कैनदभूत्" इति द्वितीयप्रश्ने, एतच्छब्दो न जीवपरः, अपि तु वागादिकरणजातपरः। ततश्च वागादीन्द्रियवर्गस्य कुत्र लय इति प्रश्नः [2]"अथास्मिन् प्राण एवैकधा भवति" इति वागादिकरणजातं प्राणभृति जीवे लीनं भवतीति प्रतिवचनम्। इत्येवं प्रश्नप्रतिवचनयोरन्यथैवोपपत्तेः अस्मिन् प्रकरणे जीवप्रतिपादनं जीवातिरिक्तब्रह्मप्रतिबोधनार्थमेव इति कथं निश्चीयत इति चेत्। उच्यते—बृहदारण्यके बालाक्यजातशत्रुसंवादे [3]"यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदाऽभूत्" इति विज्ञानमय-शब्दनिर्दिष्टस्य जीवस्य सुषुप्त्याधारविषयकप्रश्नस्य [4]"य एष विज्ञानमयः पुरुषस्तदैषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते" इति परमात्मनो जीवसुषुप्त्याधारताप्रतिपादकप्रतिवचनस्य च दर्शनात्, तदैकार्थ्यात् प्रकृते [1]"कैतदभूत्" इति प्रश्ने एतच्छब्दनिर्दिष्टो जीव इति, [2]"अथास्मिन् प्राण एवैकधा भवति" इति प्रतिवचने 'अस्मिन्' इति इदं शब्देन परमात्मैव विवक्षित इति च निश्चीयते। [3]"य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते" इत्यत्र 'आकाश'शब्दः परमात्मपरः, [5]"दहरोऽस्मिन्नन्तर आकाशः" इत्यादौ 'आकाश'शब्दस्य परमात्मनि प्रसिद्धेः। तदेवमस्मिन् प्रकरणे जीवप्रतिपादनस्य परमात्मनो जीवादतिरिक्तत्वप्रतिबोधनार्थत्वात्, [1]"यस्य वैतत्कर्म स वै वेदितव्यः" इत्यत्र न प्रकृत्यधिष्ठातृतया साङ्ख्यमतसिद्धभोक्तृपुरुषः प्रतिपाद्यते अपि तु परं ब्रह्मैवेति॥

इति जगद्वाचित्वाधिकरणम्॥ ५॥

## २३ ॥ वाक्यान्वयाधिकरणम्॥ ६॥

पूर्वाधिकरणे [1]"यस्य वैतत्कर्म" इत्यत्र 'कर्म'शब्दस्य 'क्रियत इति कर्म' इति योगमाश्रित्य जगत्परत्वाश्रयणेन तद्वाक्यस्य भोक्तृपरत्वं

[1] कौषी. ४-१८ [2] कौषी. ४-१९ [3] बृ. ४-१-१६ [4] बृ ४-१-१७
[5] छा ८-१-१.

निराकृतम् । मैत्रेयीब्राह्मणे कर्मफलभोक्तुरेव साक्षात्प्रतिपादनेन तद्वाक्यस्य भोक्तृपरत्वमेव युक्तं इत्याक्षेपपरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## वाक्यान्वयात् ॥ १-४-१९ ॥

[प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥
उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥
अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥]

मैत्रेयीब्राह्मणस्थमहावाक्यान्वयसामञ्जस्यबलात् तद्वाक्यप्रतिपाद्य आत्मा न कर्मफलभोक्ता जीवः, अपि तु परमपुरुष इति सूत्रार्थः ॥

**द्रष्टव्य इति य उक्तस्तस्यामृतहेतुताद्युक्तया ।**
**स यदिति गमयति विद्या तद्ब्रह्म श्रीनिवासनाम भजे ॥२५॥**

अर्थः । [1]"आत्मा वा अरे द्रष्टव्यः" इत्यत्र द्रष्टव्यतयोक्तस्य आत्मनः **अमृतहेतुतायाः**—मोक्षोपायोपासनविषयतारूपायाः तस्यैकस्य ज्ञानेन सर्वस्य ज्ञाततायाश्च, **उक्तया**—अभिधानेन, **विद्या**—मैत्रेयीविद्या, **सः**-आत्मा, **यदिति**—श्रीनिवासाभिधानं ब्रह्मेति, **गमयति**, **तद्ब्रह्मेति** पूर्ववत् ॥

**भावः** । मैत्रेयीब्राह्मणे [2]"येनाहं नामृता स्यां किमहं तेन कुर्याम् । यदेव भगवान् वेद तदेव मे ब्रवीतु" इति मैत्रेय्या अमृतत्वोपायोपासन-विषयं पृष्टेन याज्ञवल्क्येन [1]"आत्मा वा अरे द्रष्टव्यः" इत्यमृतत्वार्थिना उपास्यतया उक्त आत्मा [3]"तमेवं विद्वानमृत इह भवति" इत्यमृतत्वो-पायोपासनविषयतया पुरुषसूक्तादिप्रतिपादितः श्रीनिवासापरनामधेयो महा-पुरुष एवेति निर्धार्यते ॥

[1] बृ ६-५-६. [2] बृ ६-५-४ [3] तै, आर ३-१२.

एवं [1]"आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितं" इति प्रकृतस्य आत्मन एकस्य विज्ञानेन सर्वस्य ज्ञातत्वं प्रतिज्ञायते। अस्याः प्रतिज्ञायाः सद्विद्याप्रकरणस्थायाः [2]"येनाश्रुतं श्रुतं" इत्यादेः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाश्च ऐक्यात्, तस्याश्च [3]"सदेव सोम्येदमग्र आसीत्," "सेयं देवतैक्षत" इत्याद्युत्तरवाक्ये सदादिपदानिर्दिष्टनामरूपव्याकर्तृमहापुरुषलक्ष्मीपतिविषयकत्वादपि सः लक्ष्मीपतिः श्रीनिवास एवायं मैत्रेयीब्राह्मणे द्रष्टव्यतया उक्त आत्मेति निर्धार्यते। इदं च प्रत्यभिज्ञापकं श्लोके 'आदि'पदेन ग्राह्यमिति ॥

## पूर्वपक्षः ।

बृहदारण्यके मैत्रेयीब्राह्मणे [1]"न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति। न वा अरे जायायै कामाय जाया प्रिया भवति" इत्युपक्रम्य, [1]"आत्मा वा अरे द्रष्टव्य" इत्यमृतत्वोपायं पृष्टवतीं मैत्रेयीं प्रति याज्ञवल्क्यस्य प्रतिवचनं श्रूयते। अत्र 'जायां प्रति पत्युः प्रियत्वं न पत्युरिष्टसंपत्तये, अपि तु जायाया इष्टसंपत्तये' इत्याद्यभिधाय [1]"आत्मा वा अरे द्रष्टव्य" इत्यभिधानेन, 'यस्य स्वेष्टसंपत्तये पत्यादिकं प्रियं भवति स आत्मा द्रष्टव्य' इत्यभिधानात्, पतिजायापुत्रवित्तादिसम्बन्धिन आत्मनो द्रष्टव्यत्वलाभात्, पतिजायादीनां भोक्ता आत्मा द्रष्टव्य इत्युक्तं भवति। अतो भोक्तृत्वोपलक्षितस्य शुद्धस्वरूपस्य द्रष्टव्यतालाभात्, तस्यैव भोक्तुरुत्तरत्र जगत्कारणत्वाभिधानात्, भोक्तैव प्रकृत्यधिष्ठाता, तदधिष्ठितं प्रधानमेव कारणतया प्रतिपाद्यत इति ॥

---

[1] बृ. ६-५-६. [2] छा. ६-१-३. [3] छा.६-२-१.

## सिद्धान्तः ।

[1]"न वाऽरे पत्युः कामाय पतिः प्रियो भवति, आत्मनस्तु कामाय पतिः प्रियो भवति" इत्युपक्रम्य [1]"आत्मा वा अरे द्रष्टव्यः" इत्यभिधानात्, [1]"न वाऽरे पत्युः कामाय पतिः प्रियो भवति" इत्याद्यभिधानं पत्यादीनां परित्याज्यतालाभायेति प्रतीयते । ततश्च पत्यादयो यत स्वात्मेष्टसंपत्तये प्रिया भवन्ति, अतः पत्यादीन् प्रियान् परित्यज्य पत्यादिप्रियवियुक्तं स्वात्मस्वरूपमन्वेष्टव्यं इत्युक्ते, अर्थासङ्गतिः स्यात् । स्वात्मन प्रिय एव ह्यन्वेष्टव्यो भवति न तु तद्वियुक्तं स्वात्मनः स्वरूपम् । अतोऽत्र आत्मशब्दो न जीवात्मपरः, अपि तु परमात्मपरः । ततश्च परमात्मन कामाय—परमात्मसङ्कल्पं निर्वर्तयितुं पत्यादयस्तत्प्रतिसंबन्धिनां प्रिया भवन्ति, न तु पत्यादिसङ्कल्पनिर्वृत्तये इत्यर्थः ॥

इत्थं च 'अहमस्याः प्रियः स्यां' इति पतिसङ्कल्पात् पतिर्जायाया न प्रियो भवति; अपि तु 'अयं पतिः अस्या जायाया प्रियो भवतु' इति परमात्मसङ्कल्पात् पतिर्जायायाः प्रियो भवति इत्युक्तं भवति । इत्थं च पत्यादीनां प्रियत्वं कर्मफलप्रदस्य परमात्मनः सङ्कल्पायत्तं इति पत्यादीनां प्रियत्वस्यौपाधिकत्वलाभात् औपाधिकप्रियान् पत्यादीन् परित्यज्य, निरुपाधिकप्रिय परमात्मा अन्वेष्टव्य इत्यर्थलाभात्, न असङ्गतिः । ततश्च [1]"आत्मनस्तु कामाय" इति, [1]"आत्मा वाऽरे द्रष्टव्यः" इत्युभयत्र 'आत्म'शब्दः ब्रह्मपर एव, न तु पतिजायादिप्रतिसम्बन्धिजीवात्मपरः । अतोऽस्मिन् प्रकरणे न तन्त्रसिद्धपुरुषाभिधानम् ॥

ननु अस्य प्रकरणस्य परमात्मपरत्वे, [2]"एवं वाऽरे इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" इति

[1] बृ ४-४-५. [2] बृ. ४-४-१२.

उत्तरत्र देहात्मना परिणतभूतोत्पत्तिविनाशानुविधाय्युत्पत्तिविनाशवत्त्वरूप जीवधर्मोक्ति कथमुपपद्यत इति चेत् [1]"मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदित" इत्येकस्य प्रकृतात्मनो विज्ञानेन सर्वस्य विदितत्वप्रतिज्ञासिद्धेन "यथा सुदीप्तात् पावकात् विस्फुलिङ्गा सहस्रश प्रभवन्ते सरूपा, तथाऽक्षरात् विविधा सोम्य भावा प्रजायन्ते तत्र चैवापियन्ति" इति श्रुत्युक्तेन जीवब्रह्मणो कार्यकारणभावेन सिद्धस्य तयोरभेदस्य ज्ञापनाय [3]"महद्भूतमनन्तमपार" इत्युक्तस्य परमात्मन 'विज्ञानघन'शब्दनिर्दिष्टस्य जीवात्मनश्च सामानाधिकरण्येन ऐक्योक्ति इत्याश्मरथ्याचार्यमतम् ॥

अस्मिन् मते जीवात्मन परमात्मसकाशात् उत्पत्तेरभ्युपगमात्, [4]"न जायते म्रियते वा विपश्चित्" इत्यादिजीवोत्पत्तिनिषेधपरबहुश्रुतिविरोध, जीवस्योत्पत्त्यभ्युपगमे कृतहानाकृताभ्यागमप्रसङ्ग इत्यादिबहुतरदोषप्रसङ्ग । अतो मतमिदमयुक्त इत्यभिप्रयत औडुलोमेराचार्यस्य न जीवात्मनो मुक्तिदशाया परमात्मना सममभेदस्य "एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय पर ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यादिश्रुतिसिद्धतया मुक्तिदशाभाविन जीवात्मपरमात्मनोरभेदमाश्रित्य, 'महद्भूतमनन्तमपार विज्ञानघन एव' इति सामानाधिकरण्यनिर्देश इति मतम् ॥

अस्मिन्नपि मते 'आमोक्षात् जीवस्य परमात्मतो भेद, मुक्तिदशाया अभेद' इत्यभ्युपगमात्, "परमात्मात्मनोर्योग परमार्थ इतीष्यते । मिथ्यैतदन्यत् द्रव्य हि नैति तद्द्रव्यता यत" इति भिन्नयो द्रव्ययो ऐक्योत्पत्तिनिषेधपरप्रमाणविरोध ।

---

[1] बृ ४४५　[2] मु २११　[3] बृ ४४१२　[4] कठ १२१८
[5] छा ८३४　[6] वि पु २१४२७

[1] "एष संप्रसाद" इत्यादिश्रुतिस्तु जीवात्मनो मुक्तिदशायां अपहतपाप्मत्वादिस्वरूपाविर्भावपरा, न तु परमात्मना समैक्यापत्तिपरा इति [2] "संपद्याऽऽविर्भावः स्वेन शब्दात" इति सूत्रे वक्ष्यते । अतः परमात्मनो जीवात्मन्यन्तरात्मतया अवस्थानस्य जीवात्मनः परमात्मशरीरत्वस्य च [3] "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद, यस्यात्मा शरीरं" इत्यादिश्रुतिसिद्धतया, शरीरवाचकानां शब्दानां शरीरिपर्यन्तवाचकताया आकृत्यधिकरणन्यायसिद्धत्वेन, प्रकृते जीवात्मवाचिनो 'विज्ञानघन'शब्दस्य जीवान्तर्यामिपरमात्मपर्यन्तवाचकतया, तस्य [4] "महद्भूतमनन्तमपारं" इति परमात्मवाचकशब्देन सामानाधिकरण्योपपत्तिः ॥

ततश्च [4] "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" इति वाक्यखण्डोक्तस्य उत्पत्तिविनाशवत्त्वस्य विशेषणीभूतजीवद्वारा परमात्मन्यन्वयात्, नानुपपत्तिः । अत्र जीवस्य उत्पत्तिः देहसम्बन्धप्रयुक्तज्ञानविकासरूपा विवक्षिता; विनाशश्च तत्सम्बन्धविनाशप्रयुक्तज्ञानसङ्कोचरूपो विवक्षितः । [5] "न जायते म्रियते वा विपश्चित्" इति जीवात्मन उत्पत्तिविनाशयोः प्रतिषेधात् इति काशकृत्स्नस्याचार्यस्य मतम् । इदमेव मतं सूत्रकारस्याभिमतम्, तदुत्तरं मतान्तरानुपन्यासात् इति ॥

ननु 'परमात्मन एव जीवभावेन अवस्थानेन तयोरैक्यात्, [4] "महद्भूतमनन्तमपारं विज्ञानघन एव" इति सामानाधिकरण्योपपत्तिः इत्येव [6] "अवस्थितेरिति काशकृत्स्न" इति सूत्राभिप्रायः किं न स्यात्' इति चेत् । उच्यते—[7] अत्राधिकरणे [8] "गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्" इति सूत्रे

[1] छा. ८-३-४. [2] शा. सू. ४-४-१. [3] बृ. ५-७-२२. [4] बृ. ४-४-१२.
[5] कठ. १-२-१८. [6] शा. सू. १-४-२२. [7] शा.सू. १-२-२ [8] शा. सू. १-२-११.

द्विवचनान्तेन अनुपहितात्मस्वरूपवाचिना 'आत्मानौ' इति शब्देन परस्पर-भिन्नस्वरूपयोः जीवात्मपरमात्मनोः हृदयगुहाप्रवेशः [1] "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये" इति श्रुत्या प्रतिपाद्यत इत्यभिधानात्, जीवब्रह्मणोः निरुपाधिकभेद एव श्रुत्यभिमत इति सूत्रकाराभिप्रायावगमात्, [2] "अवस्थितेरिति काशकृत्स्न" इति सूत्रानन्तरं मतान्तरानुपन्यासाच्च, जीवब्रह्मणोः श्रुत्यभिमतस्वरूपभेदाविरोधेनैव तयोः सामानाधिकरण्यनिर्वाहः सूत्राभिमत इत्यवश्यवक्तव्यतया, सूत्रस्य जीवब्रह्मणोः स्वरूपैक्यमाश्रित्य, तयोः सामानाधिकरण्यनिर्वाहपरत्ववर्णनमनुपपन्नमिति संक्षेपः ॥

इति वाक्यान्वयाधिकरणम् ॥ ६ ॥

---

२४ ॥ प्रकृत्यधिकरणम् ॥ ७॥

पूर्वाधिकरणे मैत्रेयीं प्रति याज्ञवल्क्यप्रतिवचने द्रष्टव्यतया उक्तस्याऽऽत्मन एकस्य विज्ञानेन सर्वं विज्ञातं भवति इत्यभिधानेन तस्य आत्मनः सर्वोपादनताल्लाभात्, जीवात्मन. श्चिदचित्समुदायरूपसर्वोपादानत्वासंभवात्, न द्रष्टव्यतया उक्त आत्मा जीवात्मा, अपि तु परमात्मेति सिद्धान्तितम्। तत्र परमात्मनो जगदुपादानत्व यदभ्युपगतं, तन्नोपपद्यत इत्याक्षेपपरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥१-४-२३॥

[अभिध्योपदेशाच ॥ २४ ॥

साक्षाच्चोभयाम्नानात् ॥ २५ ॥

आत्मकृते. ॥ २६ ॥

---

[1] कठ. १-३-१.   [2] ब्र. सू. १-४-२२.

परिणामात् ॥ २७ ॥
योनिश्च हि गीयते ॥ २८ ॥

अत्र प्रकृतिः इत्युपादानकारणपरम्; च शब्देन निमित्तकारणत्वं समुच्चीयते। 'ब्रह्म' इति प्रकरणसिद्धम्। ततश्च ब्रह्म न निमित्तकारणमात्रं, अपि तु उपादनकारणमपि। प्रतिज्ञायाः—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया मृत्पिण्डघटादिदृष्टान्तस्य च तथा सत्येवोपपत्तिसिद्धेः इति सूत्रार्थः॥

यस्यैकस्य ज्ञानात् ज्ञातमिदं भवति सर्वमित्युक्त्या।
गमयति यदुपादानं तद्ब्रह्म श्रीनिवासनाम भजे॥ ३६॥

अर्थः। [1]"उत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवति" इति श्रुतिः, यस्य-श्रीनिवासापरनामधेयस्य ब्रह्मणः ज्ञानात्, इदं सर्वं-चेतनाचेतनात्मकं जगत्, ज्ञातं भवति इत्युक्त्या, यत्-श्रीनिवासापरनामधेयं ब्रह्म, उपादानं-जगदुपादानकारणं इति, गमयति, यस्य उपादानकारणतां ज्ञापयति इत्यर्थः, तद्ब्रह्मेति पूर्ववत्॥

भावः। एकस्या मृदि प्रथम पिण्डत्वावस्था जायते; अनन्तरं घटत्वावस्था। तत्र पूर्वावस्थावद्द्रव्यमुपादान; उत्तरावस्थापन्नं तदेव द्रव्यमुपादेयमित्युच्यते। तत्र पूर्वोत्तरावस्थाद्वयापन्नद्रव्यस्यैकत्वात्, उपादानवस्तुज्ञानस्य उपादेयवस्तुज्ञानरूपत्वेन, उपादाने ज्ञाते सति, उपादेयं ज्ञातं भवति। तद्वत्, प्रकृते 'ब्रह्मणि ज्ञाते, इदं सर्वं ज्ञातं भवति' इति [1]"येनाश्रुतं श्रुतं भवति" इति श्रुत्याऽभिधानात्, ब्रह्मणो जगदुपादानत्वं ज्ञायते। यद्यपि दृष्टान्ते मृद्द्रव्यस्यैकस्यैव पिण्डत्वघटत्वाद्यवस्थाद्वययोगेन, पिण्डस्य ज्ञानेन घटस्य ज्ञातता युक्ता। प्रकृते जगद्ब्रह्मणोः भिन्नत्वात्,

---

[1] छ. ६-१-३.

ब्रह्मज्ञानस्य जगज्ज्ञानरूपत्वासंभवात्, न ब्रह्मज्ञानेन जगतो ज्ञाततासंभवः; नाप्युपादानोपादेयभावसंभवः, ब्रह्मणो निर्विकारतया अवस्थारूपविकारवत्त्वासंभवात्। तथाऽपि ब्रह्मज्ञानेन जगतो ज्ञाततासंभवोक्त्या, तयोरुपादानोपादेयभावमन्तरा तदसंभवात्, निर्विकारस्य ब्रह्मणः साक्षाद्विकाररूपावस्थाया असंभवात्, चेतनाचेतनात्मकजगद्रूपशरीरद्वारा विकारवत्त्वं संभवति इति श्रुतेराशयोऽवगम्यते। ततश्च यथा जीवात्मनो निर्विकारस्य साक्षात् बालत्वयुवत्वाद्यवस्थाविरहेऽपि, तच्छरीरगतबालत्वाद्यवस्थाद्वयमादाय, 'बालो युवा जात' इत्यादिव्यवहारसिद्धोपादानोपादेयभावः, तद्वत् इहापि॥

नन्वेवं ब्रह्मशरीरभूतस्य जगत एव परिणामित्वे ब्रह्मणश्चापरिणामित्वे, ब्रह्मणः किमर्थमुपादानत्वं अङ्गीकरणीयम्? उपदर्शिताया एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः प्राधान्याभिप्रायेणोपपत्तेः, यथा 'राज्ञि दृष्टे अमात्यादयो दृष्टा भवन्ति' इत्युक्तिः प्राधान्याभिप्रायेण; तत्र हि 'यत्किञ्चित्प्रयोजनलाभाय द्रष्टव्येषु राजादिषु, अमात्यादिदर्शनेन यत्प्रयोजनं लब्धव्यं, तत् राजदर्शनेन लभ्यत' इति राज्ञः प्राधान्याभिप्रायेण तथोक्तिः, तद्वत् इहापि श्रोतव्येषु ब्रह्मश्रवणेन तदितरश्रवणलभ्यप्रयोजनलाभाभिप्रायेण, ब्रह्मणि श्रुते तदितरत्सर्वं श्रुतं भवति इति प्राधान्याभिप्रायेण उक्तप्रतिज्ञानिर्वाहसंभवात् इति चेत्। मैवं—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः प्राधान्याभिप्रायेण गौणत्वाङ्गीकारे, तदुपपादनायोपात्तदृष्टान्तानामुपरोधः स्यात्। तत्र हि [1]"येनाश्रुतं श्रुतं" इत्यादिना ब्रह्मणः श्रवणेन सर्वस्य जगतः श्रुतत्वं प्रतिज्ञाय, कथमन्यस्य श्रवणेन अन्यस्य श्रुतत्वसंभवः इति "कथं नु भगवः स आदेशः" इत्याक्षेपे, [2]"यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्," [3]"यथा

[1] छा. ६-१-३. [2] छा. ६-१-४. [3] छा. ६-१-५.

सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्'' [1] ''यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात्'' इति दृष्टान्तत्रयेण ब्रह्मण. श्रवणेन सर्वस्य जगतः श्रुतत्वं संभवति इत्युपपादितम्। लोहमणिः-सुवर्णपिण्डः; लोहमयं—सुवर्णमयं कटकमकुटादि। नखनिकृन्तनं—कार्ष्णायसपिण्डः। अत्र उदाहृतेषु दृष्टान्तेषु न प्रधानज्ञानेन अप्रधानस्य ज्ञातत्वं दृष्टान्तीक्रियते; मृत्पिण्डघटादीनां प्रकृतिविकृतिभावं प्रदर्श्य, मृत्पिण्डादिज्ञानेन घटादीनां ज्ञाततायाः निदर्शितत्वात्। बहूदाहरणप्रदर्शनं दार्ष्टान्तिके जगद्ब्रह्मणोरुपादानोपादेयभावप्रतीतिदार्ढ्यार्थमिति निश्चीयते। अत उक्तदृष्टान्तत्रयोपादानानुरोधेन जगद्ब्रह्मणोः उपादानोपादेयभाव एव एकविज्ञानेन सर्वविज्ञानप्रतिज्ञया प्रतिपिपादयिषित इति निर्णीयते॥

न चोक्तदृष्टान्तत्रयानुरोधेन ब्रह्मणो जगद्रूपेण परिणामोऽभ्युपगन्तुं शक्य.; [2] ''निष्कलं निष्क्रियं शान्तं'' इत्यादिभिर्ब्रह्मणो निर्विकारत्वप्रतिपादनेन, तद्विरोधप्रसङ्गात्। अतो ब्रह्मणो निर्विकारत्वश्रुतेः जगदुपादानत्वश्रुतेश्च उपपादनाय, जगद्रूपशरीरद्वारा परिणाम एवाङ्गीकर्तव्यः। जगद्ब्रह्मणो. शरीरशरीरिभावश्च अन्तर्यामिब्राह्मणादिषु बहुधा प्रपञ्चितः। दृष्टश्च शरीरद्वारकपरिणाममाश्रित्य, निर्विकारस्यात्मन उपादानोपादेयभावव्यवहार 'योऽनभिज्ञो बाल आसीत् स इदानीं युवाऽभिज्ञो जात' इत्यादिः, इत्यलं बहुना॥

अत्र च [3] ''येनाश्रुतं श्रुतं भवति'' इत्यादिना ब्रह्मणो जगदुपादानत्वं प्रदर्श्य, तद्विवरणाय प्रवृत्ते ''सदेव सोम्येदमग्र आसीत्'' इत्याद्युत्तरसन्दर्भे सच्छब्देन पूर्वं यच्छब्दनिर्दिष्टं ब्रह्म निर्दिश्य, तस्य ''तदैक्षत'' इत्यादिना बहुभवनसङ्कल्पादिप्रतिपादनात्, तस्य च श्रीनिवासापरनामधेयलक्ष्मीपति-

---

[1] छा. ६-१-६. [2] श्वे. ६-१९. [3] छा. ६-२-३.

महापुरुषप्रत्यभिज्ञापकतया पूर्वोपपादितत्वात्, श्रीनिवासापरनामधेय ब्रह्मैव जगदुपादानमिति निर्धार्यत इति ॥

## पूर्वपक्षः ।

ब्रह्मणो जगदुपादानत्वं न सभवति, तस्य जगन्निमित्तकारणताश्रवणात् । श्रूयते हि [1]"सोऽकामयत" इत्यारभ्य, "स तपस्तप्त्वा, इद सर्वमसृजत" इति ब्रह्मणो जगत्स्रष्टृत्वम् । निमित्तोपादानयोर्भेदश्च लोके नियमेन दृश्यते—यथा घटादिकार्ये तन्निमित्तोपादानयो कुलालमृत्पिण्डयो श्रुतिषु च "अस्मान्मायी सृजते विश्वमेतत्, तस्मिंश्चान्यो मायया सन्निरुद्ध माया तु प्रकृतिं विद्यान्मायिनं तु महेश्वर" इत्यादिषु परमात्मनो जगत्स्रष्टृत्व प्रकृतेरुपादानत्व च वदन्तीषु जगन्निमित्तोपादानयोर्भेदो व्यपदिश्यते। न केवल लोके तयोर्भेददर्शनमात्रेण ब्रह्मणोऽनुपादानत्व, उपादानलक्षणा सभवादप्यनुपादानत्वमेष्टव्यम् । कार्यात्मना परिणममानत्व ह्युपादानत्व, यथा घटात्मना परिणममानाया मृदो घट प्रत्युपादानत्वम् । निर्विकारत्वेन श्रुतिसिद्धस्य ब्रह्मण परिणामाश्रयत्व न सभवति । न च साक्षात्परिणामाश्रयत्वासभवेऽपि, अचेतनद्वारा परिणामाश्रयत्वमादाय उपादानत्वसभव , अतिप्रसङ्गात् । न हि घटात्मना परिणममानमृदाश्रयस्य भूतलादेर्घट प्रति उपादानत्वम् । अत साक्षात्परिणामाश्रयत्वाभावात् नोपादानत्वमभव इति।

## सिद्धान्तः ।

ब्रह्मज्ञानेन जगतो ज्ञातता प्रतिज्ञाय, मृद्घटादिदृष्टान्त तदुपपादनेन एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया ब्रह्मणो जगदुपादानत्वे तात्पर्यावगमात् [1]"बहु स्या प्रजायेय" इति ब्रह्मण एव बहुभवनसङ्कल्पश्रवणेन तस्यैव

[1] तै आन ६ २ [2] श्वे ४ ९

जगद्रूपेण बहुभवनावगमात्, *"ब्रह्म वनं ब्रह्म स वृक्ष आसीत् यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा विब्रवीमि वः। ब्रह्माध्यतिष्ठत् भुवनानि धारयन्" इत्यादिश्रुतिषु ब्रह्मण एव जगदुपादानत्वजगत्स्रष्टृत्वोपकरणाधिष्ठातृत्वयोरुभयोः साक्षाच्छ्रवणात्, [1]"तदात्मानं स्वयमकुरुत" इत्यादिषु ब्रह्मणः स्वात्मन एव स्वयमेव जगद्रूपेण बहुधाकरणश्रवणात् [2]"तदनुप्रविश्य, सच्च त्यच्चाभवत्" इत्यादिना ब्रह्मणः 'सत्'त्यत्'-शब्दितचेतनाचेतनरूपेण भवनस्य अनुप्रवेशपूर्वकत्वाभिधानेन चिदचिदात्मके प्रपञ्चे अनुप्रवेशकृतमेव ब्रह्मणश्चिदचिदात्मना परिणामाश्रयत्वमिति चिदचितो. ब्रह्मणश्च शरीरात्मभावप्रतिपादकश्रुतिभिश्चिदचिद्रूपापृथक्सिद्ध-विशेषणद्वारक तदाश्रयत्वमिति चावगमेन अतिप्रसङ्गस्य श्रुत्यैव परिहृतत्वात्, लोके कुलालादीनां घटाद्युपादानताग्राहकप्रमाणस्य तदुपादानतानिर्वाहक-तच्छरीरकत्वादेश्चाभावेन तदुपादानत्वविरहेऽपि ब्रह्मणि जगदुपादानत्व-तन्निर्वाहप्रकारयो द्वयो बहुश श्रुतिभि प्रदर्शितत्वात्, [3]"यद्भूतयोनिं परिपश्यन्ति धीराः" इत्यादिषु ब्रह्मणो जगद्योनित्वश्रवणात्, [4]"यथोर्णनाभिः सृजते गृह्णते च, यथा पृथिव्यामोषधयः सम्भवन्ति" इति तदुत्तर-मन्त्रे भूतयोनित्वस्य जगदुपादानत्वरूपतया विवरणाच्च ब्रह्मणो जगन्निमित्तत्वं तदुपादानत्वं च दुरपह्नवमिति ॥

इति प्रकृत्यधिकरणम् ॥ ७ ॥

---

*तै. ब्रा. २-८-७-८ यतः—यस्मादुपादानात्, द्यावापृथिवी द्यावापृथिव्यादिकृत्स्नजगत्, निष्टतक्षुः—निर्मितवान्, बहुत्वमविवक्षितम्। ईश्वर इति शेषः। स उपादानभूतो वृक्षः, ब्रह्म, वनं—तस्य वृक्षस्य आधारभूतमपि ब्रह्म, भुवनानि धारयन् ईश्वरः, ब्रह्म—स्वात्मानमेव, अध्यतिष्ठत्—अधिष्ठितवान्, अधिष्ठेयं उपकरणमपि ब्रह्मैवेत्यर्थः ॥

[1] तै. आन ७-१. [2] तै. आन. ६-२ [3] मु १-१-६. [4] मु १-१-७

३५ ॥ सर्वव्याख्यानाधिकरणम् ॥ ८ ॥

प्रथमे जिज्ञासाधिकरणे ब्रह्मणो जिज्ञास्यत्वं प्रतिज्ञाय, द्वितीये तस्य जगत्कारणत्वलक्षणेन इतरव्यावृत्ततया प्रतिपत्तुं शक्यतां, तदुत्तराधिकरणद्वयेन अज्ञानत्वबुभुत्सितत्वाभ्यां शास्त्रेण प्रतिपाद्यत्वसंभवं च प्रसाध्य, विचारमारभ्य, त्रिंशता अधिकरणैः सद्विद्यानन्दमयविद्यान्तरादित्यविद्यादिपरविद्यासु जगत्कारणतया मुमुक्षूपास्यतया च प्रतिपादितं परं ब्रह्म श्रीनिवासापरनामधेयो नारायणाख्यो देवताविशेष एवेति तत्तद्विद्यासु तत्तत्प्रत्यभिज्ञापकलिङ्गविशेषैर्निर्धारितम् । तदिदं निर्धारणमयुक्तं रुद्राख्यदेवताविशेषस्य कासुचिदुपनिषत्सु जगत्कारणत्वमुमुक्षूपास्यत्वयोः प्रतिपादनादिति शङ्कायां उक्तत्रिंशदधिकरणोक्तन्यायैः प्रत्युक्ततां दर्शयितुं प्रवृत्तमिदमधिकरणम् ॥

## एतेन सर्वे व्याख्याता व्याख्याताः॥१-४-२९॥

एतेन – बहुभवनसङ्कल्पनामरूपव्याकर्तृत्वापहतपाप्मत्वपरायणत्वदिव्यत्वरूपद्युसंबन्धित्वामृतत्वोपासनविषयत्वादिभिः देवताविशेषप्रत्यभिज्ञापकलिङ्गैः जगत्कारणस्य वस्तुनः श्रीनिवासापरनामधेयनारायणाख्यदेवताविशेषत्वनिर्धारणेन सर्वे जगत्कारणवाचिनः विचारितवाक्येतरवेदान्तवाक्यविशेषाः श्रीनिवासाख्यदेवताविशेषपरतया निर्धारिता इति सूत्रार्थः ॥

तैस्तैः शिवादिशब्दैरभिहितमपि वस्तु यद्धर्मैः ।
गमयन्ति यदिति विद्याः तद्ब्रह्म श्रीनिवासनाम भजे ॥३७॥

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य श्रीदेशिकाचार्यस्य कृतिषु
शारीरकाधिकरणरत्नमालायां
प्रथमाध्यायस्य चतुर्थः पादः ॥

अर्थः । श्वेताश्वतराद्युपनिषत्सु शिवरुद्रेशानादिशब्दैः मुमुक्षूपास्यत्वेन अभिहितमपि वस्तु, यस्य श्रीनिवासापरनामधेयस्य नारायणस्य असाधारणैः धर्मैः प्रत्यभिज्ञापकैः तास्ता उपनिषदः, यदिति श्रीनिवासाख्यं ब्रह्मेति गमयन्ति, तद्ब्रह्मेति पूर्ववत् ॥

भावः । 'सद्' 'आनन्दमय' 'पुरुष' 'आकाश' 'प्राण' 'इन्द्र' आदिशब्दैः साधारणैः अचेतनविशेषे चेतनविशेषे च रूढैः निर्दिष्टस्य कारणवस्तुनः पूर्वोक्तप्रत्यभिज्ञापकलिङ्गैः योगेन वा अचेतनविशेषस्य चेतनविशेषस्य वा असाधारणधर्मश्रवणे, तत्तत्पदरूढ्यर्थशरीरकतया वा देवताविशेषपरतायाः निर्धारिततया, येषु कारणवाक्येषु अर्थान्तररूढशब्दैः सामान्यशब्दैर्वा कारणवस्तु निर्दिश्यते, तेषु पूर्वोक्तप्रत्यभिज्ञापकलिङ्गेषु अन्यतमस्य जगत्कारणत्वस्य वा दर्शने, अर्थान्तररूढशब्दानां रूढ्यर्थासाधारणधर्माश्रवणे योगेन तल्लक्षणे तत्तद्रूढ्यर्थशरीरकतया श्रीनिवासाख्यदेवतापरत्वं निर्धारणीयमिति ॥

## पूर्वपक्षः ।

श्रीनिवासापरनामधेयो नारायणाख्यदेवताविशेष एव जगत्कारणं मुमुक्षूपास्यश्चेति निर्धारणमनुपपन्नम्; श्वेताश्वतरोपनिषदि रुद्रस्य जगत्कारणत्वमुमुक्षूपास्यत्वयो: प्रतिपादनात् । तथा हि—श्वेताश्वतरोपनिषदि चतुर्थाध्याये, "यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासत् शिव एव केवलः"[1] इति श्रूयते । 'यस्मिन् काले अहोरात्रविभागः नासीत्, तमःशब्दनिर्दिष्टं सूक्ष्मदशापन्नं प्रधानं परमासीत्, तदा केवलः—एकः, शिवः—रुद्रः, आसीत्' इति श्रुत्यर्थ । अत्र 'यदा' 'तम' इत्यादिना जगतः प्रलयमभिधाय, तत्काले एकस्य शिवस्यावस्थानमभिहितम् । 'शिव'शब्दश्च रुद्राख्यदेवताविशेषे

[1] श्वे. ४-१८.

रूढः। अतोऽस्मिन् मन्त्रे प्रलयकाले रुद्रादन्येषामवस्थानं प्रतिषिध्य, एकस्य रुद्रस्यैव अवस्थानप्रतिपादनात्, तस्यैव कारणत्वं गम्यते ॥

एवं तस्यामेवोपनिषदि [1] "अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः। मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इत्यत्र मायिना विश्वस्य सृष्टत्वमभिधाय, महेश्वरस्य मायित्वमभिहितम्। 'महेश्वर'शब्दश्च रुद्रे रूढः। अतो रुद्रस्यैव जगत्कारणत्वं प्रतीयते। एवं तत्रैव [2] "यो योनिर्योनिमधितिष्ठत्येको यस्मिन्निदं सं च वि चैति सर्वं। तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति" इत्यत्र ईशानोपासनस्य मोक्षोपायत्वमभिहितम्। 'ईशान'शब्दश्च रुद्रे रूढः। अतो रुद्रस्य मोक्षोपायोपासनविषयत्वं सिद्धम् ॥

एवमथर्वशिखायां [3] "कश्च ध्येयः" इति प्रश्नस्य "कारणं तु ध्येय" इति प्रतिवचनमभिधाय, "सर्वैश्वर्यसंपन्नः शंभुराकाशमध्ये ध्येयः" इत्यभिधानात्, रुद्रस्य कारणत्वं मुमुक्षुध्येयत्वं च सिद्धम्; 'शंभु'शब्दस्य रुद्रे रूढत्वात्। अतो नारायण एव जगत्कारणं मुमुक्षूपास्यश्चेति निर्धारणमनुपपन्नमिति ॥

सिद्धान्तः।

जगत्कारणस्य वस्तुनो बहुभवनसङ्कल्पनामरूपव्याकर्तृत्वादिलिङ्गैः नारायणाख्यदेवताविशेषत्वस्य निर्धारितत्वेन, उपदर्शित'शिव''ईशान' 'महेश्वर''शंभु'आदिशब्दाः रूढिभङ्गेन 'आकाश''इन्द्र'आदिशब्दवत् नारायणपरा नेतव्याः। न च रुद्रादिपदरूढ्यनुसारेण बहुभवनसङ्कल्पनामरूपव्याकरणादीनां रुद्रासाधारणता रुद्रप्रत्यभिज्ञापकता च आश्रित्य, नारायणादिशब्दानामेव रुद्रपरता किं न स्यात् इति शङ्कनीयम्। नारायणशब्दस्य योगेन रूढ्या वा रुद्रपरताया असंभवात्। रुद्रपरत्वे 'नारायण' इति 'ण'त्वासंभवात्; संज्ञायामेव णत्वविधानात्। एवं तस्य लक्ष्मीपतित्वा-

[1] श्वे. ४-९. [2] श्वे ४-११. [3] अथर्वशि.

सभवाच न नामरूपव्याकर्तृत्वमोक्षोपायोपासनविषयत्वादिसंभव. [विस्तरस्तु अस्मत्कृतव्याससिद्धान्तमार्ताण्डे द्रष्टव्य ।

ननु अन्तरधिकरणे आदित्यादिदेवताविशेषाणा, इन्द्रप्राणाधिकरणे देवाधिपतेरिन्द्रस्य, ईक्षतिकर्माधिकरणे अण्डाधिपतेश्चतुर्मुखस्य च कारणत्वमाशङ्क्य निराकृतम् । न तु कस्मिंश्चिदप्यधिकरणे रुद्रस्य कारणत्वं निराकृतम् । यदि सूत्रकाराणां रुद्रस्य कारणत्वं निराचिकीर्षितं स्यात्, तर्हि प्रधानमल्लनिबर्हणन्यायेन रुद्रकारणतावादिवाक्यविचारेण तत् निराकृतं स्यात् । तथा क्वचिदप्यधिकरणे तन्निराकरणादर्शनात्, सूत्रकाराणां न तत् निराचिकीर्षितमित्यवगम्यते । तत् कथं [1]"एतेन सर्वे व्याख्याता" इत्यस्पष्टाभिप्रायस्याधिकरणस्य तन्निराकरणपरतोक्तिरिति चेत् । उच्यते—यदि कश्चित् रुद्रादिपदाना रूढिमाश्रित्य 'रुद्र एव जगत्कारणं' इति प्रत्यवतिष्ठेत, तदा इन्द्रादिपदरूढ्या प्रतिवक्तव्य., यदि रुद्रादिपदरूढ्या रुद्रस्य कारणत्वमङ्गीक्रियते, तर्हि इन्द्रादिपदरूढ्या इन्द्रादेरेव कारणत्वमङ्गीक्रियतामिति । यदि इन्द्रादे कर्मवश्यत्वावगमात्, न तस्य कारणत्वं इति ब्रूयात्, प्रतिब्रूयादेनं रुद्रस्यापि कर्मवश्यत्वावगमात्, न कारणत्वमिति इन्द्रादिप्रतिबन्धा रुद्रकारणतावादिनिराकरणार्थमिन्द्रादीना कारणत्वं निराकृतमिति ॥

इदमत्रावधेय—जगत्कारणत्वं मुमुक्षूपास्यत्वं च अकर्मवश्यत्वनिबन्धन, कर्मवश्यस्य तदुभयायोगात् । जगत्कारणत्वं हि सर्वज्ञत्वसर्वशक्तित्वसत्यसङ्कल्पत्वादिसापेक्षम् । न च कर्मवश्यस्य सर्वज्ञत्वादिसंभवः; तस्य कर्मणा ज्ञानशक्त्यादिसङ्कोचस्य अवश्यभावात् । एवं मुमुक्षूपास्यत्वमपि कर्मवश्यस्य न संभवति; कर्मवश्यस्य कर्मनिर्मोक्षरूपमोक्षोपायत्वासंभवात् । अत तदुभयमप्यकर्मवश्यत्वरूपापहतपाप्मत्वनिबन्धनम् ।

[1] ब्रा. सू. १-४-२९.

अपहतपाप्मत्वमूलकाश्च विजरत्वविमृत्युत्वाविजिघत्सत्वापिपासत्वसत्यकामत्वसत्यसङ्कल्पत्वगुणा । ततश्च अपहतपाप्मत्व यस्य स्वाभाविक सर्वदेवातिरोहित च, तस्यैव अजरत्वादय सत्यसङ्कल्पत्वान्ता निरुपाधिका अतिरोहिताश्च । स्वाभाविकमपहतपाप्मत्व च नारायणस्यैकस्यैव, [1] "एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण" इति श्रुते । अत्र हि एकस्य नारायणस्यैव निरुपाधिकमपहतपाप्मत्व श्रूयते । तस्यौपाधिकत्वे, जीवानामपि मुक्तिदशायामपहतपाप्मत्वादीनामाविर्भावस्य प्रजापतिविद्याया श्रुतत्वात्, एकस्य नारायणस्य अपहतपाप्मत्वोक्तेरयुक्ततापत्ते । अत तत्प्रयुक्तमजरत्वादिकमपि निरुपाधिक नारायणस्यैव । रुद्रस्य तु अनपहतपाप्मत्वरूप कर्मवश्यत्व "अनपहतपाप्मा वाऽहमस्मि नाम धेहि" इत्यादिशतपथब्राह्मणस्थरुद्रवचनसिद्धम् ॥

अत सूत्रकार ईक्षत्याद्यधिकरणेषु सत्यसङ्कल्पत्वान्तर्भूतबहुभवनसङ्कल्पादिभि जगत्कारणस्य मुमुक्षूपास्यस्य च देवताविशेषत्वनिर्धारण सुसूपपन्नम् । एतदभिप्रेत्यैव सूत्रकारो महाभारते आनुशासनिके पर्वणि पुण्डरीकनारदसंवादे,

आलोड्य सर्वशास्त्राणि विचार्य च पुन पुन ।
इदमेक सुनिष्पन्न ध्येयो नारायण सदा ॥" इत्युक्तमिति ॥

२९ ॥ इति सर्वव्याख्यानाधिकरणम् ॥ ९ ॥

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तनिर्णयध्वजस्य श्रीदेशिकाचार्यस्य कृतिषु
शारीरकाधिकरणरत्नमालाप्रकाशे
प्रथमाध्यायस्य चतुर्थ पाद ॥

॥ प्रथमाध्यायः संपूर्णः ॥

[1] सुबाल ७ [2] शतपथब्राह्मण

श्रीश्रीनिवासपरब्रह्मणे नमः ।

श्रीशारीरकाधिकरणरत्नमालायां सप्रकाशायां

द्वितीयाध्यायस्य प्रथमः पादः ।

---

## १ ॥ स्मृत्यधिकरणम् ॥ १ ॥

प्रथमेऽध्याये जगत्कारणत्वेन वेदान्तप्रतिपाद्यं चिदचिद्विलक्षणं श्रीनिवासाख्यं परं ब्रह्मेति व्यवस्थापितम् । चिदचिद्विलक्षणस्य ब्रह्मणो जगत्कारणतां स्थूणानिखननन्यायेन दृढीकर्तुं तत्पक्षे संभावितसर्वप्रकारदोषपरिहाराय द्वितीयोऽध्याय आरभ्यते ॥

तत्र प्रथमे पादे साङ्ख्यादिभिरुद्भाविता दोषाः परिह्रियन्ते । प्रथमेऽध्याये चतुर्थपादे निरीश्वरसाङ्ख्य सेश्वरसाङ्ख्यश्च श्रुतिवाक्यतात्पर्यविवरणेन निरस्तौ । तत्र निरीश्वरसाङ्ख्यस्य कपिलस्मृतिविरोधोद्घाटनेन प्रत्यवस्थाननिराकरणाय प्रवृत्तमिदमधिकरणम् ॥

## स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ २-१-१ ॥

[इतरेषां चानुपलब्धेः ॥ २ ॥]

'चिदचिद्विलक्षणस्य ब्रह्मणः कारणत्वाङ्गीकारे, कपिलस्मृतेः निरवकाशत्वं स्यात् इति चेत्' इत्यन्तेन आशङ्क्य, परिह्रियते 'न' इत्यादिना । 'स्वतन्त्रप्रधानकारणत्वाङ्गीकारे अन्यासां मन्वादिस्मृतीनां निरवकाशत्वरूपदोषप्रसङ्गः । अतः उक्ताशङ्का न युक्ता' इति सूत्रार्थः ॥

मन्वाद्याप्तबहुस्मृत्युपबृंहितवेदमौलिसिद्धतया ।
यद्धेतुत्वमचाल्यं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ३८ ॥

अर्थः । **मन्वादीनामाप्तानां**; आप्तत्वं च यथावस्थितवस्तुसाक्षात्कर्तृत्वे सति यथादृष्टार्थवादित्वं, तद्वतां इत्यर्थः । **बहूनां स्मृतिभिः** वेदान्तार्थविशदीकरणैदम्पर्येण प्रवृत्तैर्ग्रन्थैः, **उपबृंहिताः** विशदीकृता या, **वेदमौलयः**--उपनिषदः, **तत्सिद्धतया, यद्धेतुत्वं**--यस्य श्रीनिवासापरनामधेयस्य ब्रह्मणः, **हेतुत्वं**--जगत्कारणत्वं, **अचाल्यं**--अन्यथयितुमशक्यं, **तद्ब्रह्म** इति पूर्ववत् ॥

भावः । स्वयोगमहिमसाक्षात्कृतपरावरतत्त्वयाथात्म्यैः मनुपराशरप्रभृतिभिः महर्षिभिः वेदान्तार्थविशदीकरणाय प्रणीतस्मृतिसहकारेण वेदान्तवाक्यैर्निश्चिततया श्रीनिवासापरनामधेयस्य परस्य ब्रह्मणो जगत्कारणत्वं कपिलस्मृतिविरोधेन अप्रामाणिकत्वशङ्कास्पदं न भवति इति ॥

## पूर्वपक्षः ।

"सदेव सोम्य"[1] इत्यादिवेदान्तवाक्यानां किं स्वतन्त्रप्रधानकारणत्वे, किं वा चिदचिद्विलक्षणब्रह्मकारणत्वे तात्पर्यमिति संशये, वेदान्तवाक्यतात्पर्यनिर्णयैदम्पर्येण प्रवृत्तकपिलस्मृत्यनुसारेण तात्पर्यनिर्णय एव युक्तः, अन्यथा तस्याः स्मृतेः सर्वथा अप्रामाण्यं स्यात् । न चेष्टापत्तिः, वेदान्तेषु आप्तत्वेनाभिहितस्य कपिलमहर्षेः भ्रान्त्ययोगेन तत्प्रणीतस्मृतेरप्रामाण्यायोगात् । न चैवं ब्रह्मकारणत्ववादिनीनां मन्वादिस्मृतीनां अप्रामाण्यप्रसङ्गस्य तुल्यतया कपिलस्मृत्यनुसारेण श्रुतितात्पर्यनिर्णयो न युक्त इति वाच्यम् । मन्वादिस्मृतीनां कर्मकाण्डोक्तकर्मविशदीकरणपरत्वेन प्रामाण्योपपत्तेः । कपिलस्मृतेस्तु ज्ञानकाण्डोक्ततत्त्वविशदीकरणैदम्पर्येण प्रवृत्ततया, ब्रह्मकारणत्वाङ्गीकारे

[1] छा ६-२-१.

प्रधानकारणतावादिन्याः तस्या विषयान्तरालाभेन सर्वथा अप्रामाण्यप्रसङ्गः। अतः तस्या निरवकाशत्वप्रसङ्गपरिहाराय तदुक्तप्रधानकारणत्व एव श्रुतेः तात्पर्यमास्थेयमिति।

### सिद्धान्तः।

वेदान्तवाक्यानां तात्पर्यनिर्णये, नचात्पर्यनिर्णयाय प्रवृत्तस्मृत्यपेक्षाया आवश्यकत्वेऽपि, स्वयोगमहिमसाक्षात्कृतपरावरतत्त्वयाथात्म्यमनुपराशराद्यनेकासतमहर्षिप्रणीतस्मृत्यनुसारेण वेदान्तवाक्यतात्पर्यनिर्णय एव न्याय्यः; न त्वेकस्य मन्वाद्यनुपलब्धस्वतन्त्रप्रधानकारणतावादिनः कपिलस्य महर्षेः स्मृत्यनुसारेण। कपिलस्मृतेः मन्वादिस्मृतीना च परस्परविरोधे, 'भूयसां स्याद्बलीयस्त्वं' इति न्यायेन मन्वादिस्मृतीना बलीयस्तया तद्विरोधेन कपिलस्मृते. भ्रान्तिमूलत्वनिर्णयात्। मन्वादिस्मृतिषु श्रीनिवासापरनामधेयब्रह्मणो जगत्कारणत्वं प्रतिपाद्यते। यथा विष्णुपुराणे, "विष्णो सकाशादुद्भूतं जगत् तत्रैव च स्थितं। स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च स॥" इति। एवं मन्वादिस्मृतिष्वपि द्रष्टव्यम्॥

२६॥ इति स्मृत्यधिकरणम्॥१॥

---

### २॥ योगप्रत्युक्त्यधिकरणम्॥ २॥

कपिलस्मृते भ्रान्तिमूलकत्वसंभवेऽपि वेदान्तप्रवचनाधिकृतहिरण्यगर्भप्रणीतयोगस्मृते भ्रान्तिमूलकत्वासंभवात्, तया वेदान्तोपबृंहणमेव न्याय्यं इत्याशङ्कापरिहाराय प्रवृत्तमिदमधिकरणम्॥

## एतेन योगः प्रत्युक्तः॥ २-१-३॥

एतेन–सांख्यस्मृतिनिराकरणेन योगस्मृतिरपि निराकृता इति सूत्रार्थः। तुल्यन्यायेन हिरण्यगर्भप्रणीताया. स्मृतेरपि दत्तोत्तरत्वात् मूले पृथक्तदनुक्तिः॥

भाव: । हिरण्यगर्भस्य वेदान्तप्रवचनाधिकृतत्वेऽपि, तेन ईश्वराभ्युपगमेऽपि अब्रह्मात्मकप्रधानकारणत्वाभ्युपगमेन ईश्वरस्य निमित्तकारणतामात्राभ्युपगमे च प्रस्फुटवेदान्तार्थविरुद्धवादितया, तत्प्रणीतस्मृतेरपि भ्रान्तिमूलकत्वनिर्णये तत्प्रणीतस्मृत्या श्रीनिवासापरनामधेयस्य ब्रह्मण कारणत्वं न निचालयितुं शक्यमिति ॥

२७॥ इति योगप्रत्युक्त्यधिकरणम् ॥ २ ॥

## ३ ॥ विलक्षणत्वाधिकरणम् ॥ ३ ॥

मन्वादिस्मृतीनां तर्कविरुद्धतया तत्कर्तृणां शतान्धन्यायेन भूयस्त्वम् किञ्चित्करम् । कपिलस्मृतेस्तु तर्कानुगृहीततया वेदान्तवाक्यतात्पर्यनिर्णये सेवाऽऽश्रयणीयेति निरीश्वरसाङ्ख्यस्य आक्षेपपरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ २-१-४ ॥

[अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥]

इदं पूर्वपक्षसूत्रम् । अस्य—सत्त्वादिगुणत्रयमयस्य चिन्मिश्रस्य अचित्प्रपञ्चस्य, विलक्षणत्वात्—विजातीयद्रव्यत्वात्, न—ब्रह्मोपादानकत्वं न सम्भवतीत्यर्थः । तथात्वं—विजातीयद्रव्यत्वं, शब्दात्—श्रुतेः च अवगम्यते 'च' शब्देन प्रत्यक्षादिकं समुच्चीयते इति सूत्रार्थः ॥

भाव: । 'यत् यत्कार्यं, तत् तत्सजातीयम्' इति व्याप्तिः मृत्कार्ये घटादौ सुवर्णकार्ये कटकादौ च दृष्टा । प्रकृते चिदचिद्रूपप्रपञ्चस्य ब्रह्मसजातीयत्वं न सम्भवति, चेतनस्य असर्वज्ञत्वात् दुःखित्वात्, अचेतनस्य जडत्वात् विकारित्वाच्च, ब्रह्मणः सर्वज्ञत्वात् दुःखित्वाद्यभावात् ज्ञानस्वरूपत्वात् निर्विकारत्वाच्च । तदिदं जगद्ब्रह्मणोर्वैलक्षण्यं [1] "सत्यं ज्ञानमनन्तं ब्रह्म," [2] "विज्ञान

1 2

चाविज्ञानं च," [1]"ज्ञाज्ञौ द्वावजावीशनीशौ," [2]"समाने वृक्षे पुरुषो निमग्नः अनीशया शोचति मुह्यमानः," [3]"यः सर्वज्ञः सर्ववित्" इत्यादि-श्रुतिसिद्धम्। [4]"तं पृथिव्यब्रवीत्," [5]"आपो वा अकामयन्त" इत्यादिषु पृथिव्यादिशब्दैः तत्तदभिमानिदेवतानामेव विवक्षितत्वात्, न तादृशश्रुतिबलात् जडानां चैतन्यगुणसिद्धिः। अतो ब्रह्मविजातीयस्यास्य जगतो ब्रह्मोपादानकत्वं न सम्भवति। प्रधानं तु गुणत्रयमयत्वाचेतनत्वविकारित्वादिभिः तथाविधजगत्सजातीयम्। अतस्तदेव जगदुपादानं भवितुमर्हतीति तर्कानुगृहीतत्वात्, प्रधानकारणतावादिकपिलस्मृतिः प्रबला। मन्वादिस्मृतयस्तु तर्कविरुद्धब्रह्मकारणतावादित्वात् दुर्बलाः। अतः कपिलस्मृत्यनुसारेणैव उपनिषत्तात्पर्यस्य निर्णेतव्यतया ब्रह्मणो जगदुपानत्वमप्रामाणिकमेव इति॥

अत्र सिद्धान्तसूत्रम्।

दृश्यते तु ॥ २-१-६ ॥

[असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

न तु दृष्टान्तभावात् ॥ ९ ॥

स्वपक्षदोषाच्च ॥ १० ॥

तर्काप्रतिष्ठानादपि ॥ ११ ॥

अन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ १२ ॥]

तु शब्दः पूर्वपक्षव्यावर्तकः। विलक्षणयोरप्युपादानोपादेयभावो दृश्यते। अतः सजातीययोरेव कार्यकारणभाव इति न नियमः इति सूत्रार्थः।

उक्तसूत्रप्रभृतिसिद्धान्तसूत्रार्थसङ्ग्राहकाण्यमानि पद्यानि।

---

[1] श्वे. १-९. [2] मु. ३-१-२. [3] मु. १-१-९. [4] तै. म.५-५-२. [5] तै. आर. ३-१-५.

द्रव्यैक्यमेव नियतं प्रकृतिविकृत्योर्न साजात्यं ।
चिदचिच्छरीरकस्य ब्रह्मण एवात्र हेतुकार्यत्वात् ॥ ३९ ॥
अन्तर्यामिब्राह्मणसिद्धत्वाद्देहदेहिभावस्य ।
अपृथक्सिद्धे जगति ब्रह्म प्रति देहलक्षमसत्त्वाच्च ॥ ४० ॥
देहगतावस्थानां देहिन्यात्मन्यनन्वयाच्चापि ।
यद्धेतुत्वमचाल्यं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ४१ ॥

अर्थः। प्रकृतिविकृत्योः उपादानोपादेययोः साजात्यं न नियतं, व्यभिचारात्, अपि तु एकद्रव्यत्वमेव नियतम्। ततश्च अत्र ब्रह्मकारणतावादिमते चिदचिच्छरीरस्य एकस्य ब्रह्मण एव हेतुकार्यत्वात् हेतुश्च कार्यं च हेतुकार्ये, तयोर्भावस्तत्त्वं तस्मात्, कार्यकारणभावापन्नत्वात् इत्यर्थः। चिदचितोर्ब्रह्मणश्च शरीरशरीरिभावस्य अन्तर्यामिब्राह्मणे प्रतिपादितत्वेन प्रामाणिकत्वात्, ब्रह्मापृथक्सिद्धविशेषणभूते चिदचिदात्मके जगति ब्रह्मशरीरलक्षणसत्त्वात्, शरीरगतदोषाणां आत्मनि असम्पर्शस्य लोके दृष्टत्वाच्च यस्य श्रीनिवासनाम्नो ब्रह्मणो हेतुत्वं जगदुपादानकारणत्वं तच्चालयितुं न शक्यं, तद्ब्रह्मेति पूर्ववत् ॥

भावः। कार्यकारणयोरेकजातीयत्वनियमो न सम्भवति, गोमयकार्यवृश्चिकादौ व्यभिचारात्। तदेवेदमिति कारणवस्तुप्रत्यभिज्ञापकाकारेण हि साजात्यं भवता वक्तव्यम्। येन केनचिदाकारेण साजात्यस्यातिप्रसक्ततया अप्रयोजकत्वात्। ततश्च गोमयकार्ये वृश्चिके गोमयमिदमिति प्रत्यभिज्ञापकाकारविरहेण उक्तनियमस्य व्यभिचारो दुर्वारः। कार्यकारणयोरेकद्रव्यत्वं परमावश्यकं अन्यथा असत्कार्यवादप्रसङ्गात्। तत्तु प्रकृतेऽप्यस्त्येव। ब्रह्मण एकस्यैव सूक्ष्मावस्थापन्नचिदचिच्छरीरकत्वेन कारणत्वं, स्थूलावस्थापन्नचिदचिच्छरीरकत्वेन कार्यत्वमिति शरीरगतावस्थाभेदेन कार्यकारणभावोपपत्तेः।

यद्यपि कार्यकारणयोरेकजातीयत्वनियमेऽपि प्रकृते न काऽपि क्षतिः, ब्रह्मण एव कार्यत्वात् कारणत्वाच्च, तथाऽपि वस्तुस्थितिमनुरुध्य तयोः साजात्यनियमनिराकरणम् ।

जगद्ब्रह्मणोः शरीरशरीरिभावश्च अन्तर्यामिब्राह्मणे सुबालोपनिषदि च स्पष्टमुक्तः । तच्चेतनं प्रति अपृथक्सिद्धविशेषणद्रव्यत्वं, तदवस्थापन्नस्य तं चेतनं प्रति शरीरत्वम् । अस्ति चेदं लक्षणं संप्रतिपन्ने चैत्रादिशरीरे शरीरत्वावस्थापन्नस्य तद्द्रव्यस्य चैत्रात्मानं प्रति अपृथक्सिद्धविशेषणत्वात् । तच्च अपृथक्सिद्धविशेषणत्वं तदात्मसम्बन्धसत्तादशायां तच्छरीरसत्तायाः, तदपगमे शरीरत्वावस्थापगमस्य च दर्शनादवसीयते । प्रकृते चिदचिदात्मकस्य प्रपञ्चस्य ब्रह्मापृथक्सिद्धविशेषणत्वं [1] "न तदस्ति विना यत् स्यान् मया भूतं चराचरं" इत्याद्यध्यात्मशास्त्रसिद्धम् । अत उक्तलक्षणसत्त्वात् जगतो ब्रह्मशरीरत्वमुपपन्नम् । शरीरगतकृशत्वस्थूलत्वाद्यवस्थाना आत्मनीव ब्रह्मशरीरभूतजगद्गतविकारित्वदुःखित्वादीनां ब्रह्मण्यनन्वयात् तस्य निर्विकारत्वमपि उपपन्नम् ॥

अतो जगद्ब्रह्मणोः सालक्षण्याभाव-द्रव्यैक्यविरह-जगच्छरीरकत्वासंभव-सविकारत्वप्रसङ्गरूपतर्कै ब्रह्मकारणतावादस्य चालयितुमशक्यत्वात्, स्वतन्त्रप्रधानकारणतावादस्य उत्तरत्र दूषयिष्यमाणत्वात्, केवलतर्काणां परस्परमुत्तरोत्तरतर्कैश्च प्रतिघातेन अप्रतिष्ठिततया केवलतर्कमूलप्रधानकारणतावादस्य अयुक्तत्वाच्च श्रीनिवासापरनामधेयस्य ब्रह्मणः श्रुतिसिद्धं कारणत्वं सुस्थिरमिति ॥

३८ ॥ इति विलक्षणत्वाधिकरणम् ॥ २ ॥

---

[1] गी. १०-३९

४ ॥ शिष्टापरिग्रहाधिकरणम् ॥ ४ ॥

प्रधानकारणतावादिन एकस्य सांख्यस्य अप्रतिष्ठितेन तर्केण ब्रह्मकारणतावादस्य अविचाल्यत्वेऽपि, परमाणुकारणतावादिनां कणादगौतमसुगतार्हतादीनां बहूनां परमाणुकारणतानिर्णायकतर्कैः ब्रह्मकारणतावादः चालयितुं शक्य एव इत्याक्षेपपरिहाराय प्रवृत्तमिदं अधिकरणम् ॥

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ २-१-१३ ॥

एतेन--सांख्यपक्षनिराकरणेन, शिष्टाः--अवशिष्टाः, अपरिग्रहाः--वेदेन अपरिगृहीता कणादादिपक्षाः, व्याख्याताः--निरस्ताः इत्यर्थः ॥

कणभक्षादिमतानामन्योन्यं व्याहतत्वेन ।
यद्धेतुत्वमचाल्यं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ४२ ॥

स्पष्टोऽर्थः ।

**भावः** । कणादप्रभृतीनां परमाणुकारणतायां विवादाभावेऽपि परमाणुस्वरूपे नित्यत्वानित्यत्वादिबहुतरविवाददर्शनेन एकविधपरमाणुकारणतावादस्याप्रतिष्ठितत्वेन, तेन "[1]सदेव सोम्य इदमग्र आसीत्" इत्यादिश्रुतिसिद्धं श्रीनिवासापरनामधेयस्य ब्रह्मणो जगदुपादानत्वं चालयितुं न शक्यमिति ॥

३९ ॥ इति शिष्टापरिग्रहाधिकरणम् ॥ ४ ॥

---

[1] छा. ६-२-१.

॥ ५ भोक्त्रापत्त्यधिकरणम् ॥ ५ ॥

अनन्तरपूर्वाधिकरणे चिदचिच्छरीरकस्य ब्रह्मण जगत्कारणत्वेऽपि शरीरभूतचिदचिद्गतदु खित्वविकारित्वादिदोषा शरीरगतकृशत्वस्थूलत्वादयो जीवात्मनीव परमात्मनि न सनध्यन्त इत्युक्तम्। तेन शरीर प्रति जीवस्येव, जगद्रूपशरीर प्रति परमात्मन स्वामित्वलाभाच्छरीरस्वाम्यमवलम्ब्य साङ्कर्यस्य प्रत्यवस्थानप्रतिक्षेपार्थं प्रवृत्तमिदमधिकरणम् ॥

## भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ २-१-१४ ॥

भोक्त्रापत्तेः—सुखदु खभोक्तृत्वापत्ते, अविभागः—जीवेश्वरयोर्विभागाभाव प्रसज्यते इति चेत् इत्यन्तमाक्षेपप्रकार । त परिहरति स्यात् इति । भोक्तृभोक्तृव्यवस्थोपपत्त्या जीवेश्वरविभाग स्यादेव । लोकवत्—लोके शास्यशासकयो भोक्तृभोक्तृव्यवस्थावत् ॥

कर्मकृतभोक्तृताया अकर्मवश्ये प्रसक्त्यभावेन ।
यद्धेतुत्वमचाल्यं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ४३ ॥

स्पष्टोऽर्थ ।

पूर्वपक्षः ।

जीवस्येवेश्वरस्य शरीरवत्त्वाभ्युपगमे, शरीरसम्बन्धस्य सुखदु खभोगप्रयोजकतया जीवस्येवेश्वरस्य सुखदु खभोक्तृत्व स्यात् । ततश्च जीव सुखदु खभोक्ता नेश्वर इति जीवेश्वरविभागो न सिद्ध्येत् । ततश्च ब्रह्मकारणतावादे ब्रह्मण शरीरवत्त्वानभ्युपगमे, निर्विकारस्य तस्य जगत्कारणत्वानुपपत्ति । शरीरवत्त्वाभ्युपगमे च जीवेश्वरविभागासिद्धि । अतो ब्रह्मकारणतावादस्यायुक्ततया प्रधानकारणतावाद एव न्याय्य इति ॥

## सिद्धान्तः ।

यथा शासकस्य राज्ञः शास्यस्य अपराधिनश्च शरीरवत्स्वसाम्येऽपि शास्यस्यापराधिन एव शासनातिलङ्घनप्रयुक्त दुःखभोक्तृत्वं, न तु शासकस्य राज्ञः इति व्यवस्था लोके दृश्यते, तद्वदिहापि ईश्वराज्ञातिलङ्घनरूपकर्मप्रयुक्तं जीवस्य सुखदुःखभोक्तृत्वं, न तु शासकस्य ईश्वरस्य इति सुखदुःखभोक्तृत्वतदभावव्यवस्था उपपद्यत एव। सुखदुःखभोक्तृत्वस्य शरीरस्वाम्यप्रयुक्तत्वे हि ईश्वरस्य जीवस्येव सुखदुःखभोक्तृत्वापत्तिः । जीवस्य सुखदुःखभोक्तृत्वं न शरीरस्वाम्यप्रयुक्तं, अपि तु कर्मप्रयुक्तम् । [1]"न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति" इति श्रुतिस्तु कर्मकृतदेहसंबन्धाभिप्राया । अत एव हि [2]"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति" इति श्रुतौ जीवेश्वरयोः द्वयोः एकशरीरसंबन्धे समानेऽपि जीवस्यैव सुखदुःखभोक्तृत्वं, नेश्वरस्य इत्युक्तिरुपपद्यते । शरीरसंबन्धस्य दुःखभोक्तृत्वप्रयोजकत्वाभावे कर्मणः शरीररूपद्वारस्यानपेक्षणीयतापत्त्या शरीरसंबन्धस्य सुखदुःखभोक्तृत्वप्रयोजकत्वमवश्यमाश्रयणीय इत्याक्षेपस्तु [3]"न स्थानतोऽपि" इत्यधिकरणे परिहरिष्यते । ईश्वरस्योपासकानुग्रहाय तच्छरीरावस्थानं वा शरीरस्वाम्यं वा हेयभूतजीवशरीरसंबन्धे वा नापुरुषार्थसबन्धः । तस्य नित्यातिरोहितया स्वस्मिन्नपुरुषार्थसंस्पर्शावहशक्त्या नापुरुषार्थसंबन्धगन्धः इति [2]"द्वा सुपर्णा" इत्याद्युदाहृतया मुण्डकोपनिषदि तृतीयमुण्डके प्रथमखण्डस्थया श्रुत्या प्रतिपादनात् । तस्याश्च द्वितीयमुण्डके प्रथमखण्डद्वितीयखण्डयोः [4]"दिव्यो ह्यमूर्तः पुरुषः" [5]"अमृतस्यैष सेतुः" इत्यादिना

---

[1] छा. ८-१२-१. [2] मु. ३-१-१. [3] शा. सू ३-२-(अधि.).
[4] मु. २-१-२. [5] मु २-२-५.

प्रकृतपरमपुरुषविषयत्वात्, तस्य च परमपुरुषस्य श्रीनिवासापरनामधेय-नारायणरूपतया [1]अदृश्यत्वादिगुणकाधिकरणादिषु निर्णीतत्वात्, तथाविध-ब्रह्मकारणतावादे भोक्तृत्वापत्त्यादितर्काणामनवतारेण श्रीनिवासाख्यब्रह्म-कारणतावादः चालयितुं न शक्य इति ॥

४० ॥ इति भोक्त्रापत्त्यधिकरणम् ॥ ५ ॥

६ ॥ आरम्भणाधिकरणम् ॥ ६ ॥

[2]विलक्षणत्वाधिकरणे कार्यकारणयोः जगद्ब्रह्मणोः अनन्यत्वमा-श्रित्य ब्रह्मणो जगत्कारणत्वं स्थापितम् । तदेव कार्यकारणयोरनन्यत्वं वैशेषिकाक्षेपपरिहारेण साधयितुं प्रवृत्तमिदमधिकरणम् ॥

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥२-१-१५॥

[भावे चोपलब्धे ॥ १६ ॥
सत्त्वाच्चापरस्य ॥१७॥
असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः
शब्दान्तराच्च ॥१८॥
पटवच्च ॥ १९ ॥
यथा च प्राणादि ॥ २० ॥]

जगत इत्यध्याहार्यम् । कार्यस्य जगतः तस्मात् परमकारणात् ब्रह्मणो अनन्यत्वं-अभिन्नत्वं, आरम्भणशब्दादिभ्यः अनन्यत्वोपपादकेभ्यः अवगम्यत इति सूत्रार्थः ॥

[1] शा. मृ १-२ (अ) ५. [2] शा. मृ. २-१ (अ.) ३.

श्रुतिभिरुपपादितत्वात् प्रकृतिविकृत्योरभेदस्य ।
यद्धेतुत्वमचाल्यं तद्ब्रह्म श्रीनिवासनाम भजे ॥४४॥

अर्थः । प्रकृतिविकृत्योः उपादानोपादेययोः जगद्ब्रह्मणोः, अभेदस्य-ऐक्यस्य, श्रुतिभिः-[1]"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं" इति दृष्टान्तविषयश्रुत्या, [2]"सदेव सोम्येदमग्र आसीत् तदैक्षत बहु स्यां प्रजायेयेति" इत्यादिदार्ष्टान्तिकविषयश्रुतिभिश्च, उपपादितत्वेन, यस्य-श्रीनिवासापरनामधेयस्य ब्रह्मणः जगदुपादानकारणत्वं, अचाल्यं-चालयितुमशक्यं, तद्ब्रह्मेति पूर्ववत् ॥

भावः । अत्र "तदैक्षत बहु स्यां प्रजायेय" इति बहुभवनसङ्कल्पकर्त्री देवता श्रीनिवासापरनामधेयनारायणाख्यदेवताविशेष एवेति पूर्वं [3]ईक्षत्यधिकरणे निर्णीतमिति ॥

पूर्वपक्षः ।

संज्ञाभेदात्, आकारभेदात्, कार्यभेदात्, कालभेदात्, कारकव्यापारवैयर्थ्यापत्तेश्च उपादानोपादेययोः ऐक्यं न सम्भवति । न हि 'घटो मृत्पिण्ड' इति, न वा 'मृत्पिण्डो घट' इति व्यवह्रियते । अतः संज्ञाभेदस्तावत्सिद्धः । 'घटः पृथुबुध्नोदराकारः, पिण्डस्तु अन्याकारः' इत्याकारभेदः । घटेनोदकमाह्रियते, न पिण्डेन इति कार्यभेदः । पूर्वं मृत्पिण्डः, पश्चाच्च घट इति कालभेदः । एवं कार्यकारणयोरैक्ये, कार्यस्य घटस्य पूर्वमेव स्थितत्वात् घटोत्पादनार्थकुलालादिव्यापारवैयर्थ्यप्रसङ्गश्च । अतः कार्यकारणयोरैक्यासंभवात् ब्रह्मकार्यं जगत् ब्रह्मणः अन्यदेव इति ॥

सिद्धान्तः ।

छान्दोग्ये सद्विद्याप्रकरणे, [4]"उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति" इत्यादिना मृत्पिण्डघटादिदृष्टान्तेन जगद्ब्रह्मणोः कार्यकारणयोरैक्य

[1] छा ६-१-४. [2] छा. ६-२-१ [3] ब्रा.सू. १-१-५ [4] छा. ६-१-३.

प्रतिज्ञाय, दृष्टान्ते मृत्पिण्डघटादौ उपादानोपादेययोः मृत्पिण्डघटयोः [1]"वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यं" इत्यनेनैक्यमुपपादितम् ॥

विकारः—घटत्वशरावत्वादिरूपावस्था, नामधेयं—'घट शराव' इत्यादि नाम च, वाचा—अत्र वाक्छब्दस्य अजहल्लक्षणया व्याहारव्यवहारोभयमर्थः। व्याहारः—'अयं घट,' 'अयं शराव' इति शब्दोच्चारणं; व्यवहारः-उदकाहरणादिव्यापारः। 'वाचा' इत्यत्र तृतीयाया हेतुत्वमर्थः; तच्च हेतुत्वं प्रयोजनविषया। ततश्च 'वाचा' इत्यस्य व्याहारव्यवहारोभयार्थ-मित्यर्थः फलित.। आरंभणं—आरभ्यते-आलभ्यते, स्पृश्यते इत्यारंभणं; कर्मणि ल्युडन्तमिदं; स्पृश्यते इत्यर्थ। [2]"आरंभ· स्पर्शहिंसयोः" इत्यनुशासनात् उक्तार्थलाभ·।

अत्र 'मृत्पिण्डेन' इति पूर्ववाक्यादनुषज्यते। ततश्च 'अय घट·, अयं शराव.' इत्यादिव्यवहारसिद्ध्यर्थं, उदकाहरणादिक्रियासाधनत्वसिद्ध्यर्थं च, घटत्वशरावत्वाद्यवस्थां घट. शराव इत्यादिनाम च मृत्पिण्ड एव भजते इत्यर्थः पर्यवसित.। [1]"मृत्तिकेत्येव सत्यं" इति पूर्ववाक्यात् मृण्मयं इत्यनुषज्यते। तथा च 'मृण्मयं घटशरावादि, मृत्तिकेत्येव—मृद्द्रव्य-मित्येव, सत्यं—प्रामाणिक, प्रत्यभिज्ञाप्रमाणसिद्धं' इत्यर्थ.। तथा च 'मृदयं घटः, मृदयं शराव.' इत्यादिप्रत्यभिज्ञाप्रत्यक्षेण मृद्घटयो मृच्छराव-योश्च एकद्रव्यत्वसिद्ध्या मृत्कार्यं घटशरावादि कारणभूतद्रव्यादनतिरिक्तं, कारणभूतं मृद्द्रव्यमेव घटशरावाद्याकारान्तरं प्राप्नोति। तत्प्राप्तिश्च 'घटे-नोदकमाहर' इत्यादिलोकव्यवहारसिद्ध्यर्थं जलाहरणादिक्रियासाधनत्व-सिद्ध्यर्थं च इत्युक्तं भवति। अनेन कार्यकारणयोरेकद्रव्यत्वे प्रत्यभिज्ञा-प्रत्यक्षं प्रमाणमुक्तम्। अनेन मृत्पिण्डरूपमेकद्रव्यमेव रूपान्तरं तत्प्रयुक्त-नामान्तरं च प्राप्नोति। अतो मृत्पिण्डघटयो. न भेद इत्युपपादितं भवति ॥

[1] छा. ६-१-४ [2]

एवं दार्ष्टान्तिकयोर्जगद्ब्रह्मणोरपि द्रव्यैक्यं [1]"सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयं" इत्यादिना उत्तरग्रन्थेन उपपादितम्। अत्र हि [1]"सदेव सोम्येदमग्र आसीत्" इत्यनेन जगतः प्रलयरूपकारणावस्था प्रतिपाद्यते। तत्र सच्छब्दार्थः सर्वज्ञं सर्वशक्ति सत्यसङ्कल्पं परं ब्रह्मेति पूर्वं [2]ईक्षत्यधिकरणे निरूपितम्। 'इदं' इत्यस्य परिदृश्यमानं देवमनुष्यादि-नामरूपविभागवत् जगत् इत्यर्थः। 'इदं सदासीत्' इति सामानाधिकरण्येन तयोरैक्यं प्रतिपाद्य, अनन्तरं [1]"तदैक्षत, बहु स्यां प्रजायेयेति" इत्यादिना ब्रह्मण एव बहुभवनसङ्कल्पेन देवमनुष्यादिभेदभिन्नजगद्रूपता-प्राप्तिः इति एकस्यैव ब्रह्मणः कार्यकारणरूपावस्थाद्वयप्राप्तिप्रतिपादनेन जगद्ब्रह्मणोरैक्यमुपपादितम्।

अत्र च 'निर्विकारस्य ब्रह्मणः न स्वरूपेण देवमनुष्यादिभेद-भिन्नजगद्रूपताप्राप्तिः, अपि तु चेतनाचेतनरूपशरीरद्वारा बहुभवनमेव सङ्कल्पविषयः' इति [3]"सेयं देवतैक्षत हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मना अनुप्रविश्य नामरूपे व्याकरवाणि इति, जीवेनाऽऽत्मना अनुप्रविश्य नामरूपे व्याकरोत्" इत्युत्तरवाक्यद्वयेन अवसीयते। अत्र हि ब्रह्मणः तेजोजलपृथिवीषु जीवद्वारा अनुप्रवेशपूर्वकं नामरूपव्याकरण-सङ्कल्पः, तथा नामरूपव्याकरणं चाभिधीयते। तत्र ताटस्थ्येन नामरूप-व्याकरणे शक्येऽपि, अनुप्रवेशपूर्वकनामरूपव्याकरणस्य प्रयोजनान्तरा-दर्शनात् सृज्यमाननामरूपयोश्चेतनद्वारा चेतने, तद्द्वारा स्वस्मिंश्च संबन्ध-सिद्ध्यर्थमेव तथा नामरूपयोः सृष्टिरिति प्रतीयते। ततश्च सृज्यमान-देवत्वमनुष्यत्वादिकार्यावस्थानां देवमनुष्यादिनाम्नां च ब्रह्मण स्वानुप्रविष्ट-चेतनानुप्रविष्टाचेतनद्वारा स्वसंबन्धसिद्ध्या ब्रह्मैव परंपरया कार्यावस्थावत्

[1] छा. ६-२-१ [2] शा. सू. १-१-५.(ज.) [3] छा. ६-३-२.

नामरूपवच्च अभूदिति प्रतीत्या, देवमनुष्यादयः सर्वे कार्यवाचिनः शब्दाः देवत्वमनुष्यत्वाद्यवस्थाविशिष्टाचेतनवस्तुप्रविष्टचेतनवस्तुप्रविष्टब्रह्मवाचका इति ब्रह्मण उक्तपरंपरया बहुत्वरूपकार्यावस्थाप्राप्तिरिति च उपपादितं भवति। [1]"सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयं" इत्यत्रापि एकत्वरूपकारणावस्थाप्राप्तिरप्युक्तपरंपरयैव इति निश्चीयते ॥

इत्थं च [1]"सदेव सोम्येदमग्र आसीत्" इत्यत्र, कार्यावस्थजगद्वाचीदंशब्द उक्तपरंपरया कार्यावस्थाब्रह्मवाची। एवं सच्छब्दश्च उक्तपरंपरया कारणावस्थाब्रह्मवाची इति सामानाधिकरण्येन तयोरैक्यं बोध्यत इति निश्चीयमानतया, [2]'वाचारम्भणं" इति दृष्टान्तविषयश्रुत्या [1]"सदेव सोम्येदमग्र आसीत्" इत्यादिदार्ष्टान्तिकविषयश्रुत्या च, कार्यकारणयोः जगद्ब्रह्मणोः अनन्यत्वोपपादनात् तयोरैक्यमवगम्यते ॥

एवं 'मृदयं घटः,' 'कुण्डलमिदं हिरण्यं' इत्यादिप्रत्यभिज्ञाप्रत्यक्षेण, इदं घटशरावादि पूर्वाह्णे मृत्तिकैव आसीत्' इति व्यवहारेण च, मृद्घटयोः सुवर्णकुण्डलयोश्च उपादानोपादेययोः ऐक्यसिद्धेः, एकस्यैव द्रव्यस्य अवस्थाभेदेन संज्ञान्तराद्युपपत्तेः कारकव्यापारस्य अवस्थान्तरापादनार्थत्वेन सार्थक्योपपत्तेश्च कारणादनतिरिक्तमेव कार्यम् ॥

ननु 'इदं घटशरावादिकं पूर्वाह्णे नासीत्' इति घटादिकार्यस्य पूर्वमसत्त्वव्यपदेशात्, कार्यकारणयोरैक्यमनुपपन्नं; पूर्वाह्णे सतः कारणस्य तदानीं असतः कार्यस्य चैक्यायोगात्। एवं वेदेऽपि [3]"इदं वा अग्रे नैव किञ्चनाऽऽसीत्," [1]"असदेवेदमग्र आसीत्," [4]"असद्वा इदमग्र आसीत्" इत्यादिषु कार्यस्य जगतः असत्त्वव्यपदेशादपि कार्यस्य कारणात् अनन्यत्वमनुपपन्नमिति चेत्। उच्यते—'इदं घटशरावादिकं सर्वं पूर्वाह्णे

[1] छा. ६-२-१ [2] छा. ६-१-४. [3] तै. ब्रा. २-२-९. [4] शतपथब्रा. ६-१-१.

मृत्कूटमेवासीत्' इत्यपि प्रतीतिव्यवहारयोः लोके दर्शनेन घटशरावादीनां मृत्तिकात्वेन पूर्वमवस्थानसिद्ध्या 'इदं घटशरावादिकं पूर्वाह्णे नासीत्' इति व्यवहारो मृद्द्रव्यस्य घटत्वाद्यवस्थाऽभावविषयकः, न तु घटादेस्तुच्छत्वविषयक इत्यवश्यमभ्युपेयम्। अन्यथा पूर्वोक्तप्रतीतिव्यवहारविरोधप्रसङ्गात्। अत एकस्यैव मृद्द्रव्यस्य मृत्कूटत्वाद्यकारणावस्थानं 'इदं घटशरावादिकं पूर्वाह्णे मृत्कूटमेवासीत्' इति व्यवहारस्य विषयः; इदं घटशरावादि पूर्वाह्णे नासीत् इति व्यवहारस्य तु घटत्वाद्यवस्थाऽभावो विषय इति द्वयोः अविरोधः। घटत्वाद्यवस्थाऽभावश्च मृत्कूटत्वाद्यवस्थैव, अतिरिक्तस्य अनुपलम्भात्। क्लृप्तेन भावरूपावस्थान्तरेणैव प्रतीतिव्यवहारयोरुपपत्तौ अतिरिक्ताभावकल्पने गौरवात्॥

अत्रेदमवधेयम्—नित्यस्यैव द्रव्यस्य आगन्तुके तत्तदाकृतिविशेषयोगरूपैः अवस्थाविशेषैः असत्त्वव्यवहाराः उत्पत्तिविनाशव्यवहाराश्च प्रवर्तन्ते। तद्यथा मृद्द्रव्यं पिण्डत्वघटत्वकपालत्वाद्यवस्थाः क्रमेण प्राप्नोति। तत्र पूर्वपूर्वावस्थायामुत्तरोत्तरावस्थापन्नस्य असत्त्वं 'इदं पूर्वं नासीत्' इति व्यवह्रियते। तत्र व्यवह्रियमाणं घटादेरुत्तरस्य असत्त्वं तस्यैव मृद्द्रव्यस्य पिण्डत्वावस्थापन्नतारूपम्। उत्तरोत्तरावस्थादशायां पूर्वपूर्वावस्थापन्नस्य नाश उत्पत्तिश्च व्यवह्रियते यथा मृद्द्रव्यस्य घटत्वावस्थादशायां 'पिण्डो नष्टः, घट उत्पन्नः' इति। तत्र व्यवह्रियमाणं पिण्डस्य नष्टत्वं तस्य घटत्वावस्थापत्तिरूपम्; उत्पत्तिरपि आद्यक्षणावच्छिन्ना घटत्वावस्थैव। एवं तत्तदवस्थाभिरेव नित्यस्यैव द्रव्यस्य असत्त्वनाशोत्पत्तिव्यवहाराणां उपपत्तौ, उक्तव्यवहारबलात् तत्र तत्र नानाद्रव्यकल्पनं, पूर्वमसतां तेषां उत्पत्तिकल्पनं, तेषां प्रागभावप्रध्वंसाभावरूपपदार्थान्तरकल्पनं इत्यादिकं मृद्द्रव्यस्य उत्तरोत्तरानुवृत्तिग्राहकप्रत्यभिज्ञाप्रत्यक्षविरोधात्, अनुपलम्भात्, प्रागभावप्रध्वंसाभावद्रव्यान्तरादिबहुतरकल्पनागौरवाच्च अनादरणीयमिति॥

[1] "इदं वा अग्रे नैव किञ्चनाऽऽसीत्" इत्यत्र तु [1] "तदसदेव सन्मनोऽकुरुत" इति वाक्यशेषे पूर्वमसच्छब्दनिर्दिष्टस्य मनस्कारशब्दवाच्यसङ्कल्पश्रवणात्, पूर्वमपि तस्य सद्भावलाभात् कार्यावस्थाविशिष्टत्वेन अभाव. तादृशव्यवहारविषय । अन्यथा [2] "सदेव सोम्येदमग्र आसीत्" इत्यादिव्यवहारविरोधप्रसङ्गात् । अनेन हि व्यवहारेण कार्यस्य जगतः पूर्वमपि सद्भाव. प्रतीयते । ततश्च एकस्यैव ब्रह्मणो नामरूपशून्यत्वरूपकारणाकारेण सत्त्वं, [2] "सदेव सोम्येदमग्र आसीत्" इत्यादिव्यवहारविषय. । नामरूपभाक्त्वरूपकार्याकारेणासत्त्व [2] "असदेवेदमग्र आसीत्" इत्यादिव्यवहारविषयः । इदं च [3] "तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यां व्याक्रियत" इति श्रुत्यन्तरे स्पष्टम् । अत्र हि सृष्टे. प्राक् व्यपदिश्यमानमसत्त्वं नामरूपशून्यत्वमात्रमिति स्फुटम् । अत. कारणभूतं ब्रह्मैव प्रागुक्तरीत्या अवस्थान्तरापन्नं कार्यमित्युच्यते । यथा कारणभूततन्तुसमुदाय एव परस्परसंयुक्तत्वावस्थां प्राप्त पट इत्युच्यते; यथा च वायुरेक एव शरीरे अवस्थान्तरं प्राप्त प्राणापानादिशब्दैर्व्यवह्रियते, तद्वत् । न हि पटो नाम तन्तुसमुदायादतिरिक्त द्रव्यम् । परस्परसंयुक्तै. तन्तुभि पटाख्यद्रव्यान्तरोत्पादनाभ्युपगमे आरम्भकतन्तुसमुदायगुरुत्वस्य आरब्धद्रव्यगतगुरुत्वस्य च, द्वयोरभ्युपगमस्य आवश्यकतया, तोलने गुरुत्वाधिक्योपलब्धिप्रसङ्ग इति ॥

४१ ॥ इति आरम्भणाधिकरणम् ॥ ६ ॥

---

[1] तै. ब्रा २-२-९. [2] छा. ६-२-१. [3] बृ. ३-४-७

७ ॥ इतरव्यपदेशाधिकरणम् ॥ ७ ॥

एतावता ब्रह्मणो जगदुपादानत्वे साङ्ख्यवैशेषिकाद्युक्ततर्कविरोध परिहृत । इदानी ब्रह्मणो निमित्तकारणत्वे तर्कविरोध परिह्रियते ॥

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २-१-२१ ॥

इद पूर्वपक्षसूत्रम् । ब्रह्मण इतरव्यपदेशात् इतरत्वव्यपदेशात्, जीवत्वव्यपदेशात् इत्यर्थ । हिताकरणं अहितकरण चेति दोषद्वय प्रसज्यते इति सूत्रार्थ ॥

भावः । सद्विद्याप्रकरणे [1]"तत्त्वमसि" इत्यादिश्रुतिभि जीवब्रह्मणोरैक्य प्रतिपाद्यते । ब्रह्मण सर्वज्ञत्व, सर्वशक्तित्व, सत्यसङ्कल्पत्व, चेत्यादयो गुणा भवद्भि अभ्युपगम्यन्ते । तथाविधस्य ब्रह्मणो जगत्स्रष्टृत्वाङ्गीकारे स्वेष्टाकरण स्वानिष्टकरण चेति दोषद्वय प्रसज्यते । जगत् खलु आध्यात्मिकादिदुःखहेतुत्वात् जीवस्य प्रतिकूल दृश्यते । ततश्च जीवानतिरिक्तस्य सर्वज्ञस्य सत्यसङ्कल्पस्य ब्रह्मण ईदृशजगत्सृष्टि स्वानिष्टसपादनमेव । ततश्च सर्वज्ञस्य सर्वशक्तेस्तस्य स्वानुकूलजगदकरण स्वप्रतिकूलजगत्करण चेति दोषद्वय दुर्वारमिति आक्षेपप्रकार ।

उक्ताक्षेपपरिहाराय प्रवृत्तमिद सूत्रम्---

अधिकं तु भेदनिर्देशात् ॥ २-१-२२ ॥

[अश्मादिवच्च तदनुपपत्ति ॥ २३ ॥]

---

[1] छा ६-८-७

अत्र 'जीवात्' इति, 'ब्रह्म' इति चाध्याहार्यम् । 'तु' शब्दः पूर्वपक्षव्यावृत्त्यर्थः । तथा च ब्रह्म, जीवात् अधिकं–अर्थान्तरं, भेदनिर्देशात्; –अत्र भेदपदं भेदकधर्माणां, भेदस्य च प्रदर्शकं; तदुभयनिर्देशात् अर्थान्तरस्त्वमवगम्यते इति सूत्रार्थः ॥

तत्त्वमसीत्यादीनामन्यपरत्वाज्जगत्स्रष्टुः ।
सृज्यस्य च जीवस्य स्वरूपभेदस्य दुष्प्रकम्पतया ॥ ४५ ॥
जीवाहितकरणेऽपि स्वाहितकरणप्रसङ्गविरहेण ।
यद्धेतुत्वमचाल्यं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ४६ ॥

अर्थः । [1]"तत्त्वमसि," [2]"अयमात्मा ब्रह्म" इत्यादिश्रुतिवाक्यानां जीवब्रह्मणोः शरीरात्मभावरूपतादात्म्यपरतया जगत्स्रष्टुः ब्रह्मणः तत्सृज्यस्य च जीवस्य स्वरूपभेदस्य दुरपह्नवत्वात्, सृज्यस्य जीवस्य प्रतिकूलभूतजगत्करणेऽपि, ततोऽन्यस्य स्रष्टुः ब्रह्मणः स्वप्रतिकूलकरणस्वानुकूलाकरणरूपदोषद्वयप्रसङ्गाभावात्, यस्य श्रीनिवासस्य हेतुत्वं–निमित्तकारणत्वं चालयितुमशक्यं, तद्ब्रह्मेति पूर्ववत् ॥

भावः । [3]"ज्ञाज्ञौ द्वावजावीशनीशौ" इत्यादिषु जगत्स्रष्टुः ईश्वरस्य सर्वज्ञत्वं, जीवस्याल्पज्ञत्वं [4]"द्वा सुपर्णा सयुजा सखाया" इत्यादिषु जीवस्य सुखदुःखादिकर्मफलभोक्तृत्वं, ब्रह्मणस्तु तदभोक्तृत्वं इत्यादिवैधर्म्येण [5]"तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्मानन्दमयः," [6]"पृथगात्मानं प्रेरितारं च मत्वा" इत्यादिषु साक्षात् भेदस्य च बहुशः प्रतिपादनात्, जीवब्रह्मणोर्भेदो दुरपह्नवः । [1]"तत्त्वमसि" इत्यादिसामानाधिकरण्यनिर्देशस्तु [1]"ऐतदात्म्यमिदं सर्वं" इत्यादिसामानाधिकरण्यनिर्देशवत् अन्यपरः । तत्र हि 'इदं सर्वं' इति सर्वपदोक्तानां

[1] छा. ६-८-७. [2] बृ. ६-४-५. [3] श्वे. १-९. [4] श्वे ४-६. [5] तै. आन. २-५. [6] श्वे. १-६.

काष्ठलोष्टपाषाणादीनां 'ऐतदात्म्यं' इति श्रुतं ब्रह्मतादात्म्यं स्वरूपैक्यरूपं नोपपद्यते, जडाजडयोः स्वरूपैक्यायोगात्। अत [1]"स आत्मा" इत्यनन्तरवाक्यश्रुतशरीरात्मभावरूपं वाच्यम्। [1]"स आत्मा" इत्यत्र हि पूर्वप्रस्तुतस्य तच्छब्दपरामृष्टस्य ब्रह्मणः पूर्ववाक्ये [1]"इदं सर्वं" इति निर्दिष्टं चिदचिदात्मकं सर्वं प्रति शरीरप्रतिसंबन्धित्वरूपमात्मत्वमुपदिश्य, [1]"ऐतदात्म्यमिदं सर्वं" इति पूर्ववाक्योक्तं सर्वस्य ब्रह्मतादात्म्यं शरीरात्मभावरूपमिति विवृतम्। तद्वदेव [1]"तत्त्वमसि" इति तदनन्तरवाक्ये श्रुतं जीवब्रह्मणोस्तादात्म्यमपि शरीरात्मभावरूपमेव, हेयसबन्धार्हतदनर्हयोः जीवब्रह्मणोः स्वरूपैक्यायोगात्। अतश्च जीवब्रह्मणोः स्वरूपैक्यस्याप्रामाणिकत्वेन ब्रह्मण स्वस्मादन्यस्य जीवस्य तत्तत्कर्मानुसारेण स्वसङ्कल्पेन तत्प्रतिकूलजगत्सृष्टावपि न स्वप्रतिकूलकरणादिदोषप्रसङ्ग इति दिक्॥

अत्र सद्विद्याया [2]"तत्तेजोऽसृजत" इत्यत्र तच्छब्देन "सदेव सोम्येदमग्र आसीत्" इति पूर्ववाक्ये सच्छब्देन निर्दिष्टं ब्रह्म परामृश्य, तस्य जगत्स्रष्टृत्वरूपनिमित्तकारणत्वोक्त्या तस्य सच्छब्दवाच्यस्य ब्रह्मणः श्रीनिवासाख्यदेवताविशेषरूपताया [3]ईक्षत्याधिकरणे निर्णीतत्वात्, अत्र "यद्वेतत्वं" इति श्रीनिवासस्य निमित्तकारणत्वमुक्तम्॥

४२॥ इति इतरव्यपदेशाधिकरणम्॥ ७॥

---

## ८॥ उपसंहाराधिकरणम्॥ ८॥

पूर्वाधिकरणे सत्यसङ्कल्पत्वादिभिः ब्रह्मणो जीवात् वैलक्षण्यमुपपादितम्। ब्रह्मणो जगत्स्रष्टौ स्वसङ्कल्पमात्रपरिकरत्वमनुपपन्नं इत्याक्षेपपरिहाराय प्रवृत्तमिदमधिकरणम्॥

---

[1] छा. ६-८-७. [2] छा. ६-२-३. [3] छा. ६-२-१.

# उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥२-१-२४

उपसंहारदर्शनात्-सहकारिकारणसंपादनदर्शनात्, न-असहकृतस्य ब्रह्मणः कारणत्वं नोपपद्यते इति चेत्, तन्न; क्षीरवत् क्षीरस्येव; असहकृतस्य ब्रह्मण कारणत्वसंभवात्। हि इति प्रसिद्धिद्योतकः; लोकप्रसिद्धं इति सूत्रार्थः ॥

असहकृतक्षीरादेर्दध्याद्यारंभदर्शनाल्लोके ।
सहकारिनियमविरहात् शक्तिमतां तेषु तेषु कार्येषु ॥४७॥

सहकारमन्तरेवं जगदारंभस्य संभवात् प्रकृते ।
यद्धेतुत्वमचाल्यं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ४८ ॥

स्पष्टोऽर्थ.।

भावः। यथा क्षीरं सहकार्यन्तरनैरपेक्ष्येण दध्यात्मना परिणमते एवं सर्वशक्तं ब्रह्मापि सङ्कल्पमात्रेण जगदात्मना परिणमत इति ब्रह्मकारणतावादे न कश्चित् दोष । क्षीरस्याऽऽतञ्चन तु रसविशेषोत्पादनाय, न तु दध्यात्मना परिणामाय इति न दृष्टान्तासिद्धिः ॥

पूर्वपक्षः ।

लोके तत्तत्कार्यकरणशक्तानामपि कुलालादीनां दण्डचक्रादिसहकारिकारणसमवधान एव कार्योत्पादनदर्शनात् जगदारंभशक्तस्य सत्यसङ्कल्पस्यापि ब्रह्मण सृष्ट्यादौ एकत्वावधारणेन सहकार्यभावस्य लाभात् असहकृतस्य जगदारंभकत्वं नोपपद्यत इति ॥

सिद्धान्तः ।

'कार्यकरणशक्तस्य सहकारिसमवधान एव कार्यारंभकत्वं, नान्यथा' इति नियमस्य क्षीरादौ व्यभिचारात्, नायं नियमः। अपि च यथा

देवानां ऋष्यादीनां च शक्तिविशेषवतां सङ्कल्पमात्रेण स्वाभिमतार्थसिद्धिः, तद्वत् असहकृतस्यापि ब्रह्मणः सङ्कल्पमात्रेण जगदारंभकत्वमुपपन्नं इति। श्रीनिवासस्योभयविधजगत्कारणतायाः [1]प्रकृत्यधिकरणे निर्णीतत्वाभिप्रायेण अत्र "यद्धेतुत्वं" इत्युक्तम् ॥

४३ ॥ इत्युपसंहारदर्शनाधिकरणम् ॥ ८ ॥

---

९ ॥ कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥

पूर्वाधिकरणे क्षीरदृष्टान्तेन ब्रह्मण सहकारिनैरपेक्ष्येण जगदारभकत्वमुपपादितम्। तत्र दृष्टान्तवैषम्यशङ्कापरिहाराय प्रवृत्तमिदमधिकरणम्॥

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥

।२-१-२६।

इदं पूर्वपक्षसूत्रम्। ब्रह्मण इति प्रकरणसिद्धम्। निरवयवस्य ब्रह्मणो जगदात्मना परिणामे कृत्स्नस्य ब्रह्मण· कार्यभूतजगदात्मना परिणामप्रसङ्गः, एकदेशेन परिणामाभ्युपगमे तस्य निरवयवत्वश्रुतिविरोधः। अतो ब्रह्मण कारणत्वमनुपपन्नमिति सूत्रार्थ. ॥

भावः। क्षीरदृष्टान्तेन ब्रह्मणो जगदारंभकत्वोपपादनमयुक्तं; ब्रह्मणः क्षीरवत् सावयवत्वे निरवयवत्वश्रुतिविरोध ; निरवयवत्वे कार्त्स्न्येन परिणामः स्यात्। ततश्च ब्रह्मण· कार्त्स्न्येनैककार्यात्मना परिणामे कार्यान्तरात्मना परिणामासंभव.। यद्यपि ब्रह्मण. चिदचिद्रूपशरीरद्वारा परिणामस्य [1]"न तु दृष्टान्तभावात्" इत्यत्रोक्तत्वात् नोक्तशङ्कावकाश, तथाऽपि

---

[1] ब्रा सू. २-१-९.

चिदचिद्विशिष्टस्य ब्रह्मणः कारणत्वाङ्गीकारात् विशेष्यांशस्यापि विशेष्यांशात्मना परिणामस्याऽऽवश्यकतया निरवयवस्य तस्यैकस्मिन् कार्ये आत्मत्वेन पूर्णत्वे कार्यान्तरस्य निरात्मकत्वप्रसङ्गो दुर्वारः। अतो ब्रह्मकारणतावादो न युक्त इति॥

उक्तशङ्कापरिहाराय प्रवृत्तमिदं सिद्धान्तसूत्रम्—

श्रुतेस्तु शब्दमूलत्वात् ॥ २-१-२७ ॥
[आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥
स्वपक्षदोषाच्च ॥ २९ ॥
सर्वोपेता च तद्दर्शनात् ॥ ३० ॥
विकरणत्वान्नेति चेत् तदुक्तम् ॥ ३१ ॥]

तु शब्दः पूर्वपक्षव्यावर्तकः। ब्रह्मणो निरवयवत्वस्य, कार्यात्मना बहुभवनस्य च श्रुतत्वात्, ब्रह्मणः शब्दैकसमधिगम्यत्वाच्च, नोक्तदोष इति सूत्रार्थः॥

धर्मिग्राहकमानात् यद्वस्तु यथैव सिद्ध्यति तथैव।
तत्स्वीकार्यं सर्वैः ब्रह्मैकं निष्कलं च बहु भवति ॥ ४९ ॥
इत्यागमसिद्धेऽर्थे लौकिकचोद्यस्य निरवकाशत्वात्।
यद्धेतुत्वमचाल्यं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ५० ॥

अर्थः। येन प्रमाणेन यत् वस्तु यथा सिद्ध्यति तत्प्रमाणसिद्धं तद्वस्तु तथैवाङ्गीकार्यम्। प्रकृते ब्रह्म श्रुतिप्रमाणेनैकेन सिद्धम्। तच्च प्रमाणं 'ब्रह्म निरवयवं बहु भवति' इति चोपदिशति। अतः कथं निरवयवस्य ब्रह्मणो बहुधा भवनं इत्याक्षेपस्य नावकाशः। अतो [1]"निष्कलं

[1] श्वे. ६-१९.

*निष्क्रियं शान्तं" इत्यादिना निरवयवत्वेन प्रतिपादितस्य ब्रह्मणः श्रीनिवासस्य* सांद्विद्यायां बहुधाभवनस्य प्रतिपादितत्वात् तस्य कारणत्वं तर्कैश्चालयितुं न शक्यमिति ॥

भावः । लोके ययोर्धर्मयोः साहचर्यं नियमेन दृश्यते, तयोर्धर्मयोः श्रुत्येकसमधिगम्ये ब्रह्मणि एकस्य असद्भावे अनन्यथासिद्धश्रुतित सिद्धे तत्र ब्रह्मान्यत्वमन्तर्भाव्यैव व्याप्तिः कल्पनीया । प्रकृते ब्रह्मणो बहुभवितृत्वस्य निरवयवत्वस्य च श्रुतिसिद्धत्वात् ब्रह्मान्यस्यैव बहुभवितुः सावयवत्वं इत्येव व्याप्तिः कल्पनीया । अत. 'सावयवत्वाभावात् ब्रह्मणो बहुभवितृत्वं न स्यात्' इत्यापादनस्य नावकाशः । अत एव रूपसाक्षात्कारे चक्षुष, शब्दसाक्षात्कारे श्रोत्रस्य च लोके नियमेनापेक्षादर्शनमात्रेण रूपसाक्षात्कर्तृत्वं यस्य तस्य चक्षुष्मत्त्वं, शब्दसाक्षात्कर्तृत्वं यस्य तस्य श्रोत्रवत्त्वं इत्यादिव्याप्तिमाश्रित्य ब्रह्मणः चक्षुःश्रोत्रयोरभावे, रूपशब्दसाक्षात्कारयोरसंभवेन चक्षुःश्रोत्रादिमत्त्वं स्यादित्यापादनस्य नावकाशः, [1]"पश्यत्यचक्षुः स शृणोत्यकर्णः" इत्यादिश्रुतौ रूपशब्दसाक्षात्कर्तु ब्रह्मणः चक्षुःश्रोत्राद्यभावश्रवणेन तादृशसामान्यव्याप्त्यसिद्धे ॥

न चैतावता लोके अन्धबधिरादेः रूपशब्दसाक्षात्कारादर्शनेन रूपशब्दयोः साक्षात्कारे चक्षुःश्रोत्रयोरपेक्षानियमस्याभाव, ब्रह्मान्यकर्तृकरूपादिसाक्षात्कारे चक्षुराद्यपेक्षानियमस्य कल्पनीयत्वात्, अनन्यथासिद्धत्वस्य श्रुतौ विशेषणात् यद्बोधकश्रुतेरन्यथासिद्धिः तत्र तादृशश्रुतिबलात् ब्रह्मणो न तादृशधर्मवत्त्वसिद्धिः । अन्यथा भेदाभेदयोरपि विरुद्धत्वेन *लोके दृष्टयोः, ब्रह्मणि तद्बोधकश्रुतिबलेन अङ्गीकारप्रसङ्गात्; तादृशश्रुतेः* अन्यथासिद्धत्वेन तद्बलात् न तत्र भेदाभेदयोः समावेशप्रसङ्गः ।

---

[1] श्वे. ३-१९.

किञ्च लोके दर्शनमात्रेण ब्रह्मणि कस्यचित् धर्मस्य प्रसञ्जने घटादौ दृष्टस्य जडत्वादेः क्षेत्रज्ञेऽपि प्रसञ्जनं सुकरम्। तदप्रसङ्गश्च क्षेत्रज्ञस्वभाववैचित्र्यात् इति परिहरणीयम्। तद्वदेव ब्रह्मण्यपि लोकविसजातीये विचित्रशक्तिमति लोके दृष्टधर्माणां न प्रसङ्गः। अतो निरवयवस्यापि ब्रह्मणः प्रतिवस्तु आत्मत्वेन पूर्णतया अवस्थानं श्रुतिसिद्धं नानुपपन्नम्; प्रत्युत निरवयवमेकं प्रधानं महदहङ्कारादिरूपेण अनेकधा परिणमत इति कल्पयतः सांख्यस्य पक्ष एव निरवयवस्यानेकधा परिणामासंभवदोषः प्रसज्यते। अस्मन्मते तु निरवयवस्यैकस्य ब्रह्मणो बहुभवनस्य धर्मिग्राहकप्रमाणसिद्धत्वेन विचित्रशक्तिमत्त्वस्य कल्पनीयतया नानुपपत्तिः॥

न केवलं [1]"बहु स्यां" इति सङ्कल्पकर्त्र्याः परस्या देवताया विचित्रशक्तिमत्त्वस्य कल्पनीयता; [2]"पराऽस्य शक्तिर्विविधैव श्रूयते" इत्यादिश्रुतिसिद्धा च विचित्रशक्तिमत्ता। करणकलेबररहितस्यापि लोकविसजातीयस्य ब्रह्मणो विचित्रशक्तिमत्त्वेनैव सङ्कल्पमात्रेण कार्यारंभोपपत्तेः न काऽप्यनुपपत्तिः। सद्विद्याप्रकरणे [1]"तदैक्षत बहु स्यां प्रजायेय" इत्यत्र श्रुतस्य बहुभवनसङ्कल्पस्य, तथा बहुभवनस्य च श्रीनिवासाख्यदेवताविशेषप्रत्यभिज्ञापकतायाः ईक्षत्यधिकरणे निर्णीततया तदभिप्रायेण अत्र पद्ये यद्धेतुत्वं इत्युक्तमिति॥

४४ ॥ इति कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥

---

## १० ॥ प्रयोजनवत्त्वाधिकरणम् ॥ १० ॥

ब्रह्मणः सर्वशक्तित्वात् सत्यसङ्कल्पत्वाच्च सङ्कल्पमात्रेण जगत्स्रष्टृत्वं संभवतीत्युक्तम्। इदानीं सृष्टेः प्रयोजनासंभवात् स्रष्टृत्वं न संभवतीत्याक्षेपपरिहाराय प्रवृत्तमिदमधिकरणम्॥

---

[1] छा. ६-२-१. [2] श्वे. ६-८.

## न प्रयोजनवत्त्वात् ॥ २-१-३२ ॥

इद पूर्वपक्षसूत्रम् । 'सृष्टे' इत्यध्याहार्यम् । सृष्टे प्रयोजनवत्ता नियमात्, न-जगत्स्रष्टृत्व ब्रह्मणो नोपपद्यत इति सूत्रार्थ ॥

भावः । ब्रह्मणो जगत्सृष्टौ केनचित्प्रयोजनेन भाव्यम् । तच्च प्रयोजनं स्वस्य वा परस्य वा द्वेधा संभावितम् । प्रकृते च अवाप्तसमस्तकामस्य स्रष्टिलस्य न किञ्चिदपि प्रयोजन सभवति । सभवे च अवाप्तसमस्तकामत्वं न सभवति । जगत्सृष्टे जीवात्मन आध्यात्मिकादिदुःखैकहेतुत्वेन जीवात्मप्रयोजनार्थत्व च न सभवति । प्रत्युत तस्य दुःखसपादकत्वेन सृष्टे विषमत्वेन च, ब्रह्मण पक्षपातित्वनिर्दयत्वरूपदोषद्वयप्रसङ्ग । अत स्रष्टृत्व न सभवति इति ॥

उक्ताक्षेपपरिहाराय प्रवृत्तमिद सिद्धान्तसूत्रम्—

*लोकवत्तु लीलाकैवल्यम् ॥ २ १-३३ ॥*

[वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३४ ॥

न कर्माविभागादिति चेन्न अनादित्वादुपपद्यते चाप्युपलभ्यते च ॥३५॥

सर्वधर्मोपपत्तेश्च ॥ ३६ ॥]

*यथा लोके सार्वभौमस्य प्रयोजनान्तराभावेऽपि लीलारूपप्रयोजनायैव* कन्दुकादिविहार, तद्वत् ब्रह्मणोऽपि लीलार्थमेव जगत्सृष्टि इति सूत्रार्थ ॥

लीलाप्रवृत्तसृष्ट्यादिसंभरानिष्प्रयोजनत्वस्य ।
यद्धेतुत्वमचाल्यं तद्ब्रह्म श्रीनिगमनाम भजे ॥ ५१ ॥

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य श्रीदेशिकाचार्यस्य कृतिषु
शारीरकाधिकरणरत्नमालायां
द्वितीयाध्यायस्य प्रथमः पादः ॥

अर्थः । लीलार्थे प्रवृत्तायां सृष्टौ लीलारूपप्रयोजनसद्भावेन निष्प्रयोजनत्वासंभवात्, यस्य—श्रीनिवासस्य, जगत्कारणत्वं अचाल्यं तद्ब्रह्म इति पूर्ववत् ॥

भावः । सृष्टेः लीलारूपत्वेन प्रयोजनान्तरानपेक्षणात्, विषमसृष्टेश्च तत्तज्जीवकर्मानुगुणफलप्रदानरूपतायाः [1]"पुण्यः पुण्येन कर्मणा भवति पापः पापेन कर्मणा" इति, [2]"निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि । प्रधानकारणीभूता यतो वै सृज्यशक्तयः" इत्यादिश्रुतिस्मृतिसिद्धत्वाच्च, ब्रह्मणो न वैषम्यनैर्घृण्यदोषप्रसङ्गः । सृज्यानां—देवमनुष्यादीनां सृष्टौ, असौ—परमपुरुषः, निमित्तमात्रं—सामान्यकारणमात्रम् । सृज्यानां-देवमनुष्यादीनां, शक्तयः—तत्तद्देवादिजन्मानुगुणकर्माणि, प्रधानकारणीभूताः—विशेषकारणानि; यथा सस्यस्य जलं सामान्यकारणं, तत्तद्बीजं तु विशेषकारणं, तद्वत् इति श्लोकार्थः ॥

ननु [3]"सदेव सोम्येदमग्र आसीत्" इत्यादिश्रुतौ प्रलयदशायां क्षेत्रज्ञानां ब्रह्मणा ऐक्यश्रवणेन तदानीं क्षेत्रज्ञानामेवाभावसिद्धेः सुतरां तत्कर्मणामभावात्, कथं विषमसृष्टेः जीवकर्मानुगुणत्व इति चेत् । मैवं—क्षेत्रज्ञानां अनादितायाः [4]"न जायते म्रियते वा विपश्चित्," [5]"प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" इत्यादिश्रुतिस्मृतिसिद्धतया तत्कर्मप्रवाहाणामनादित्वसिद्धेः; कृतहानाकृताभ्यागमप्रसङ्गपरिहाराय क्षेत्रज्ञकर्मप्रवाहाणामनादितायाः अभ्युपगन्तव्यत्वाच्च । अविभागश्रुतिस्तु क्षेत्रज्ञानां नामरूपप्रहाणेन ब्रह्मण सकाशात् विभागानर्हातिसूक्ष्मदशापत्तिपरेति न विरोधः । अतो ब्रह्मणः लीलार्थजगत्सृष्टौ न कश्चिद्दोषः ॥

---

[1] बृ. ६-४-५. [2] वि. पु. १-४-५१. [3] छा. ६-२-१. [4] कठ. २-१५. [5] गीता १३-१९.

किं बहुना? प्रधानपरमाण्वादौ अनुपपद्यमानानां सर्वेषां कारणत्वोपपादक-धर्माणां ब्रह्मण्युपपत्त्या ब्रह्मकारणत्वमेव युक्तमिति ॥.

४९ ॥ इति प्रयोजनवत्त्वाधिकरणम् ॥ १० ॥

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य श्रीदेशिकाचार्यस्य कृतिषु
शारीरकाधिकरणरत्नमालाप्रकाशे
द्वितीयाध्यायस्य प्रथमः पादः ॥

## द्वितीयाध्यायस्य द्वितीयः पादः ।

### ११ ॥ रचनानुपपत्त्यधिकरणम् ॥ १ ॥

पूर्वस्मिन् पादे चिदचिद्विलक्षणं ब्रह्म जगत्कारणं इति स्वपक्षे परैः उद्भावितान् दोषान् परिहृत्य, स्वपक्षस्य निर्दोषतया प्रामाणिकत्वेन विश्वसनीयत्वं समर्थितम्। इदानीं परपक्षेषु दोषोद्घाटनेन ब्रह्मकारणतापक्ष एव प्रामाणिक इति बुद्धिमुत्पाद्य, तस्मिन् श्रद्धातिशयोत्पादनाय द्वितीयः पाद आरभ्यते ॥

तत्र सत्कार्यवादाभ्युपगमादिना प्रामाणिकत्वसंभावनातिशयास्पदतां सांख्यपक्षस्य हृदि निधाय तत्पक्षे दोषान् प्रदर्शयितुं प्रवृत्तमिदमधिकरणम् ॥

सांख्याः तावदेवमाहुः-' तनुभुवनादिकार्यं स्वसरूपकारणजन्यं, कार्यत्वात्, घटवत्। मृण्मयं घटादि हि तत्सरूपमृदादिरूपकारणजन्यं दृष्टम्। प्रकृते च तनुभुवनादेः पक्षस्य सुखदुःखमोहात्मकत्वदर्शनात् उक्तानुमानेन

सुखदुःखमोहात्मकत्वेन तत्तद्रूपकारणजन्यत्वं सिद्धम्। तानि च सुख-दुःखमोहात्मकानि कारणानि सत्त्वरजस्तमांसि द्रव्याणि। ततश्च अन्यूनानतिरिक्तत्वरूपसाम्यावस्थापन्नसत्त्वरजस्तमस्संघात एव जगत्कारणम्। स एव प्रधानमिति मूलप्रकृतिः इति च उच्यते। सा च न कस्यचित् विकृतिः। नित्या–परिणामशक्तियुक्ता। चेतनस्य भोगापवर्गप्रयोजना। सा च गुणवैषम्येण क्रमेण महदादिविकारान् आरभते। ते च विकारा–महान्, अहङ्कार, अन्तःकरणं, पञ्च तन्मात्राणि पञ्च महाभूतानि, पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि इति त्रयोविंशतिः; आहत्य चतुर्विंशति तत्त्वानि प्राकृतानि। पञ्चविंश. पुरुषः; स च चैतन्यमात्रस्वरूप नित्यो निष्क्रियो निर्विकारः सर्वगतः प्रतिशरीरं भिन्नश्च। प्रकृतिपुरुषयो. सान्निधानेन तयोर्भेदाग्रहात्, प्रकृतिधर्मस्य पुरुषे, पुरुषधर्मस्य चैतन्यस्य प्रकृतौ च आरोपेण 'चेतनोऽहं करोमि, भुञ्जे' इत्यादिभ्रमो भवति; स एव पुरुषस्य संसार.। तयोर्भेदग्रहेण तन्निवृत्तिरूपापवर्गो भवति इति। अत्र उक्तानुमानदूषणाय प्रवृत्तमिदं सूत्रम्॥

## रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥२-२-१॥

[पयोम्बुवच्चेत् तत्रापि ॥ २ ॥
व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ३ ॥
अन्यत्राभावाच्च न तृणादिवत् ॥ ४ ॥
पुरुषाश्मवदिति चेत् तथापि ॥ ५ ॥
अङ्गित्वानुपपत्तेश्च ॥ ६ ॥
अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॥ ७ ॥
अभ्युपगमेऽप्यर्थाभावात् ॥ ८ ॥
विप्रतिषेधाच्चासमञ्जसम् ॥ ९ ॥]

अनुमीयत इति अनुमानं-प्रधानम् । 'चेतनानधिष्ठितं,' 'जगत्-कारणं' इति च अध्याहार्यम् । ततश्च 'प्रधानं चेतनानधिष्ठितं सत् न जगत्कारणं' इत्यर्थः। तत्र हेतुमाह रचनानुपपत्तेश्च प्रवृत्तेश्च इति। अचेतनस्य चेतनानधिष्ठितस्य कार्यारंभानुपपत्तेः। चेतनाधिष्ठितस्यैव कार्यारंभप्रवृत्ते-दर्शनाच्च इति सूत्रार्थः।

प्राज्ञानधिष्ठितानां दार्वादीनां अचेतनानां न।
दृष्टः कार्यारंभः तस्मादचितः प्रधानस्य ॥ ५२ ॥
कार्यारंभकतायाः सांख्योक्ताया असंभवाच्छ्रौतम्।
यद्धेतुत्वं सुदृढं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ५३ ॥

अर्थः। दार्वादीनां अचेतनानां, चेतनानधिष्ठितानां-चेतन-सकल्पप्रयोज्यव्यापारशून्याना रथादिरूपकार्यारंभो न दृष्टः। अतो हेतोः अचेतनस्य प्रधानस्य सांख्यैरुक्ता या चेतनाधिष्ठानमन्तरेण जगदारंभ-कता, तस्या असंभवात्, श्रौतं-[1]"बहु स्यां प्रजायेय" इत्यादिश्रुति-सिद्धं, यस्य-श्रीनिवासापरनामधेयस्य ब्रह्मण हेतुत्वं जगत्कारणत्वं, सुदृढं-इदमेव प्रामाणिकमिति विस्रंभार्हं, तद्ब्रह्मेति पूर्ववत्।

अत्र [1]"बहु स्यां प्रजायेयेति" इति श्रुते श्रीनिवासापरनामधेय-नारायणाख्यपरदेवताविषयकत्वस्य [2]ईक्षत्यधिकरणादिपु समर्थितत्वाभि-प्रायेण 'श्रौत यद्धेतुत्व' इत्युक्तम् ॥

भावः। लोके रथप्रासादाद्यारंभकाणा दार्विष्टकादीना चेतनाधिष्ठान-मन्तरा स्वकार्यारंभकत्वस्यादर्शनात्, चेतनाधिष्ठान एव कार्यारंभकत्वदर्श-नाच्च 'यदचेतनं यत्कार्यारंभकं, तत् चेतनाधिष्ठितमेव तत्कार्यमारभते' इति

[1] छा. ६-२-१ [2] शा. सू १-१-५ (५)

व्याप्तिः सिद्धा । ततश्च 'प्रधानं चेतनानधिष्ठितं सत् न कार्यजनकं, अचेतनत्वात् रथाद्यारंभकदार्वादिवत्' इत्यनुमानेन प्रधाने चेतनानधिष्ठितत्वविशिष्टकार्यजनकत्वाभावस्य सिद्धौ प्रधानस्य चेतनाधिष्ठितत्वेन कार्यजनकतायाः सांख्यैरनभ्युपगमात्, उक्तसाध्यशरीरे चेतनानधिष्ठितत्वरूपविशेषणाभावमादाय उक्तविशिष्टसाध्यपर्यवसानासंभवात्, कार्यजनकत्वरूपविशेष्याभावमादायैव साध्यपर्यवसानस्य वाच्यतया सांख्याभिमतप्रधानस्य जगदारंभकत्वासंभव सिद्धः ॥

न च क्षीरस्य दध्यात्मना परिणामस्य, मेघमुक्तसलिलस्य एकरसस्य चूतकपित्थनारिकेलादिषु अनेकरसात्मना परिणामस्य च चेतनाधिष्ठानमन्तरेणैव दर्शनात् व्यभिचारात्, न उक्तव्याप्तिः इति वाच्यम्—क्षीरादेरपि पक्षतुल्यत्वेन तत्र व्यभिचारनिर्णयासंभवेन उक्तव्याप्तिसिद्धौ बाधकाभावात् । पक्षे तत्तुल्ये वा व्यभिचारसंशयस्य व्याप्तिनिर्णयप्रतिबन्धद्वारा अनुमितिप्रतिबन्धकत्वे अनुमितिमात्रोच्छेदप्रसङ्गात् ॥

ननु धेनुभुक्ततृणोदकादेरचेतनस्य चेतनसङ्कल्पं विनैव तत्सन्निधिमात्रेण यथा क्षीरारंभकता, तथा अचेतनस्य प्रधानस्य चेतनसन्निधानमात्रेण चेतनविशेषसङ्कल्पं विनैव जगदारंभकत्वं उपपद्यत एव इति चेत् । न—अनडुदाद्युपभुक्ततृणोदकादेः क्षीरारंभकत्वादर्शनेन धेनूपभुक्ततृणादेः चेतनविशेषसङ्कल्पेनैव क्षीरारंभकताया अवश्यकल्पनीयत्वात् ॥

ननु तथाऽपि दृक्छक्तिविकलस्य गमनशक्तिमतः अन्धस्य स्वस्कन्धारोपितदृक्छक्तिमत्पङ्गुसन्निधानेन गमनादिकार्ये प्रवृत्तिवत्, दृक्छक्तिमत्पुरुषसन्निधाने न प्रवृत्तिशक्तिमतः प्रधानस्य जगदारंभे प्रवृत्तिः उपपद्यते; एवं कान्तसन्निधानेन अयसः प्रवृत्तिवत्, पुरुषसन्निधानेन प्रधानस्य प्रवृत्तिः उपपद्यते इति चेत्—मैवम्; प्रथमदृष्टान्ते पङ्गोः मार्गदर्शनतदुपदेशादिव्यापाराणां,

पूर्वसूत्रात् 'असमञ्जस' इत्यनुवर्तते। ह्रस्वपरिमण्डलाभ्यां–द्व्यणुकपरमाणुभ्यां, महद्दीर्घवत्–त्र्यणुकवत्। अत्र सूत्रे त्र्यणुकग्रहणं द्व्यणुकस्याप्युपलक्षणम्। त्रिभि द्व्यणुकै त्र्यणुकस्य, परमाणुभ्यां द्व्यणुकस्य आरंभवादवत्। वाशब्द चार्थे, अन्यच्च इत्यर्थ.। असमञ्जस–दुष्टं इति सूत्रार्थ ॥

परमाणवो निरंशा यदि योगासंभवात् तेषां।
द्व्यणुकारंभो न स्यात् यदि सांशास्तेऽपि तद्वत् स्युः ॥५४॥

इत्यनवस्थेत्याद्यैः वैशेषिकदर्शनस्य दुष्टत्वात्।
यद्धेतुत्वं सुदृढं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ५५ ॥

अर्थः। द्व्यणुकारभकतया अभिमता परमाणवः निरवयवाश्चेत् तेषां परस्परसंयोगो न संभवति, सयोगस्य आंशिकत्वनियमात्। ततश्च तै द्व्यणुकोत्पत्त्यसिद्धि। यदि परमाणव सावयवा, तेषा अवयवानामपि परस्परसयोगसिद्ध्यर्थं सावयवत्वमङ्गीकार्यं, तेषामपि तथा इति अनवस्था इत्यादिदोषै परमाणुकारणतावादिवैशेषिकदर्शनस्य दुष्टत्वात्, यस्य श्रीनिवासस्य जगत्कारणत्वं सुदृढं, तद्ब्रह्म इति पूर्ववत् ॥

भावः। पटाद्यारभका तन्तुप्रभृतय प्रत्येक स्वस्वपार्श्वत्रयेण सयुक्ता, अपरै सप्तभि पार्श्वैरसयुक्ताश्च सन्त सापेक्षया अधिकपरिमाण पटादिकमारभमाणा दृष्टा। एव परमाणुकारणतावादे परमाणुभि प्रत्येक स्वस्वपार्श्वत्रयेण सयुक्तै सप्तभि पार्श्वै असयुक्तैश्च द्व्यणुकारम्भो वक्तव्य। ततश्च परमाणूना निरंशत्वे, द्व्यणुकारभो न सभवति। तेषा सांशत्वाङ्गीकारे तु तेषामप्यशाना परमाण्वन्तरसयोगसिद्ध्यर्थं सांशत्व अङ्गीकार्यम्। एवमुत्तरोत्तर अशपरपराया स्वीकर्तव्यतया अनवस्थाप्रसङ्ग.॥

ननु परमाणूनां दशदिक्परिमितत्वेन द्वाभ्यां विदिग्भ्यां एकया मध्यमया दिशा च परमाण्वन्तरसंयोगः संभवत्येव ; दिश एकत्वेऽपि दिगुपाधिभिरेव दिग्विदिग्भेदोपपत्तेः । अतः परमाणोः निरंशत्वपक्षे न कश्चिद्दोष इति चेत् ; उच्यते—दिगुपाधीनामपि परमाण्वसंयुक्तानां परमाण्वन्तरसंयोगे अवच्छेदकत्वासंभवात्, परमाणोरंशाभावे दिगुपाधिभिरपि संयोगासंभवात्, तत्तद्दिगुपाध्यवच्छेदेनापि परमाण्वन्तरसंयोगो न संभवत्येव ॥

एवं परमाणोः निरवयवत्वे द्व्यणुकारंभकसंयोगानुपपत्त्या द्व्यणुकारंभासंभवः ; सावयवत्वे तु अनवस्था । अतः उभयथापि दोषात् असमञ्जसं वैशेषिकमतम् ॥

किञ्च परमाणुषु परमाण्वन्तरसंयोगहेतुभूतक्रियाजनकतया अभिमतस्य अदृष्टस्य परमाणुगतत्वं न संभवति । क्षेत्रज्ञानुष्ठितपुण्यपापजन्यस्य अदृष्टस्य परमाणुगतत्वायोगात् । क्षेत्रज्ञगतेन च अदृष्टेन परमाणुषु क्रियोत्पादनं न संभवति, कार्यकारणयोः सामानाधिकरण्यनियमात् । अदृष्टस्य स्वाश्रयसंयुक्तत्वसंबन्धेन परमाणुगतक्रियां प्रति कारणत्वाभ्युपगमे च तेन संबन्धेन अदृष्टप्रवाहस्य परमाणुषु सर्वदा सत्त्वेन सर्वदा क्रियोत्पत्तिप्रसङ्गः ॥

न च ईश्वरेच्छाया अपि कार्यसामान्यं प्रति कारणत्वेन तद्विरहात् न सर्वदा परमाणुषु क्रियोत्पत्तिप्रसङ्ग इति वाच्यम् । तन्मते ईश्वरेच्छाया नित्यत्वाभ्युपगमात्, तस्याः सर्वदा सत्त्वेन सर्वदा परमाणुषु क्रियोत्पत्तिप्रसङ्गस्य दुर्वारत्वात् ॥

किञ्च 'तन्तुषु पटः,' 'घटे रूपं' इत्यादिप्रतीतिसिद्धस्य अवयवावयविनोः, गुणगुणिनोः, क्रियाक्रियावतोः, जातिव्यक्त्योश्च आधाराधेयभावस्य निर्वाहाय वैशेषिकैः समवायाख्यसंबन्धविशेषोऽभ्युपगम्यते । ततश्च 'घटे रूपसमवायः' इत्यादिप्रतीतिसिद्धाधाराधेयभावनिर्वाहाय समवायस्य

संबन्धान्तरं कल्पनीयम् । तस्यापि संबन्धान्तरं इत्यनवस्था । दण्डपुरुष-संयोगस्येव गुणगुणिनोराधाराधेयभावातिरिक्तस्य संबन्धान्तरस्य अनुपलंभेऽपि, अयुतसिद्धयोराधाराधेयभावनिर्वाहाय समवायसंबन्धं परिकल्प्य, तस्य संबन्धान्तरनैरपेक्ष्यकल्पनापेक्षया अयुतसिद्धेरेव तयोः संबन्धत्वकल्पनस्य उचितत्वात् ॥

किञ्च वैशेषिके समवायसंबन्धस्य नित्यत्वाभ्युपगमात् संबन्धिसत्तां विना संबन्धसत्ताया असंभवेन, समवायसंबन्धस्य नित्यत्वे तत्प्रतियोगिन घटादेरपि नित्यत्वप्रसङ्ग , ततश्च प्रत्यक्षविरोधः ; जगत्कारणत्वेन परमाणुकल्पनवैयर्थ्यं च स्यात् ॥

अपि च पार्थिव-आप्य-तैजस-वायवीयभेदेन चतुर्विधानां परमाणूनां रूपादिमत्त्वस्य तैः अभ्युपगमात्, रूपादिमतां घटादीनां विनाशदर्शनेन परमाणूनामपि रूपादिमत्त्वेन विनाशप्रसङ्गो दुर्वारः । उक्तदोषपरिहाराय परमाणूनां नीरूपत्वाभ्युपगमे, घटादेः नीरूपत्वप्रसङ्ग , अवयविगतरूपस्य अवयवरूपारब्धत्वस्य तैः अभ्युपगमात् । "कथमसतः सत् जायेत" इति वेदनिन्दितस्य असत्कार्यवादस्य आश्रयणाच्च असमञ्जसो वैशेषिक पक्ष ॥

तदेवं परमाणुकारणतावादिनां वैशेषिकाणां पक्षे परमाणूनां निरंशत्वे परमाणोः परमाण्वन्तरसंयोगस्य असंभवेन द्व्यणुकादिक्रमेण जगदारम्भानुपपत्तेः, तेषां सांशत्वे अनवस्थाप्रसङ्गात्, जीवात्मप्रयत्नादृष्टेन परमाणुषु द्व्यणुकारंभकसंयोगहेतुभूतक्रियोत्पत्त्यभ्युपगमे जीवगतादृष्टप्रवाहस्य सर्वदा सत्त्वेन सर्वदा सृष्टिप्रसङ्गेन कदाचिदपि प्रलयासंभवप्रसङ्गात्, तन्तुपटयोः अवयवावयविनोः समवायसंबन्धस्य तन्नित्यतायाश्च अभ्युपगमेन संबन्धिसत्तां विना संबन्धसत्ताया[illegible]नात् तन्तुपटादीनां

नित्यताप्रसङ्गात्, परमाणूनां रूपवत्त्वाभ्युपगमे रूपवतां घटादीनामिव तेषामपि विनाशित्वप्रसङ्गात्, तेषां रूपवत्त्वानभ्युपगमे घटादीनां अवयविनां रूपवत्त्वाभावप्रसङ्गात्, 'मृद्दयं घटः' इत्यादिप्रत्यभिज्ञाप्रत्यक्षविरोधेन वेददूषितस्य असत्कार्यवादस्य अभ्युपगमात्, शरीरादीनां अवयवोपचयापचयादिभिः सौगतवत् प्रतिक्षणं विनाशोत्पत्त्योरभ्युपगमाच्च, वैशेषिकपक्षस्य अत्यन्तासमञ्जसत्वेन, श्रुत्युक्तश्रीनिवासापरनामधेयब्रह्मकारणतापक्षस्य 'अयमेव पक्षः प्रामाणिकः' इति श्रद्धेयत्वं सिद्धम् ॥

४७ ॥ इति महद्दीर्घाधिकरणम् ॥ २ ॥

---

## १३ ॥ समुदायाधिकरणम् ॥ ३ ॥

परमाणुकारणतावादिवैशेषिकमते निरस्ते, परमाणुकारणतावादसाम्यात् उपस्थितस्य वैभाषिकसौत्रान्तिकयोः पक्षस्य प्रतिक्षेपाय प्रवृत्तमिदमधिकरणम् ॥

वैभाषिकाः पुनरित्थमाहुः—'रूपरसगन्धस्पर्शस्वभावाः, रूपरसस्पर्शस्वभावाः, रूपस्पर्शस्वभावाः, स्पर्शस्वभावाश्च इति चतुर्विधाः परमाणवः। तत्र चतुःस्वभावैः परमाणुभिः पृथिव्यात्मकः सङ्घातः; त्रिस्वभावैः जलात्मकः सङ्घातः; द्विस्वभावैः तेजोरूपः सङ्घातः; एकस्वभावैः वायुरूपसङ्घातश्च उत्पाद्यते। तेन च पृथिव्यादिसङ्घातात्मकेन भूतचतुष्टयेन शरीरेन्द्रियघटादिविषयरूपाः भौतिकाः सङ्घाताः उत्पाद्यन्ते। एते बाह्याः पदार्थाः। शरीरान्तर्वर्ती अहमिति प्रतीयमानो ज्ञानसन्तानरूप आत्मा आन्तरः। स च आत्मा चक्षुरादीन्द्रियैः घटादीन् बाह्यान् पदार्थान् साक्षात्करोति। तेषु च अस्थिरेषु स्थिरत्वबुद्धिरूपा, असुखे सुखत्वबुद्धिरूपा च अविद्या उत्पद्यते। तथा च सुखत्वेन प्रतीतेषु रागः, दुःखत्वेन प्रतीतेषु द्वेषः उत्पद्यते। तेन

च तत्र रागेण तत्तद्वस्तूपादाने, द्वेषेण च तत्तद्वस्तुहाने प्रवर्तते। उक्तक्रमेण भूतभौतिकादिव्यवहाराः हानोपादानादिव्यापाराश्च प्रवर्तन्ते। उक्ताः परमाणुप्रभृतय आत्मपर्यन्ताः सर्वे पदार्थाः प्रतिक्षणविनाशिनः' इति।

सौत्रान्तिकास्तु इमामेव प्रक्रियामाद्रियमाणाः बाह्यानां पदार्थानां अनुमेयतां आश्रित्य अनुमित्यैव सर्वव्यवहारनिर्वाहं वर्णयन्ति। तत्र क्षणिकपरमाणुभिः भूतभौतिकसङ्घातोत्पादवाददूषणाय प्रवृत्तमिदं सूत्रम्—

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः।२-२-१७।

[इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न सङ्घातभावानिमित्तत्वात् ॥१८॥
उत्तरोत्पादे च पूर्वनिरोधात् ॥ १९ ॥
असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २० ॥
प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २१ ॥
उभयथा च दोषात् ॥ २२ ॥
आकाशे चाविशेषात् ॥ २३ ॥
अनुस्मृतेश्च ॥ २४ ॥
नासतोऽदृष्टत्वात् ॥ २५ ॥
उदासीनानामपि चैवं सिद्धिः ॥ २६ ॥]

*उभयहेतुके*-परमाणुहेतुके भूतहेतुके च, *समुदाये*-सङ्घाते, *तदप्राप्तिः*-तस्य सङ्घातभावस्य अप्राप्तिः-असंभव इति सूत्रार्थः ॥

क्षणिकपरमाणुवादे परमाणूनां प्रतिक्षणं ध्वंसात्।
तैः समुदायासिद्धेः तदसिद्धौ देहसिद्धिविरहाच्च ॥ ५६ ॥
जगदारंभासिद्ध्या दुःस्थत्वात् बौद्धदर्शनस्यापि।
यद्धेतुत्वं सुदृढं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ५७ ॥
स्पष्टोऽर्थः।

भाष्यः। 'प्रथमं परमाणुषु क्रिया; ततः परमाण्वन्तरसंयोगः; ततः सङ्घातभावः' इति वक्तव्यम्। तत्र क्रियोत्पत्तिकाले प्रतिक्षणविनाशिनां परमाणूनां नष्टत्वात्, तेषां परमाण्वन्तरसंयोगक्रमेण सङ्घातभावो नोपपद्यते। एवं भूतैरपि प्रतिक्षणविनाशिभिः भौतिकसङ्घातारंभो नोपपद्यते। घटादेः विषयस्य प्रतिक्षणविनाशित्वे, इन्द्रियसन्निकर्षकाले तस्य नष्टत्वेन, ज्ञानोत्पत्तिकाले तस्य अनवस्थानात्, साक्षात्कारविषयता च न स्यात्। एवं आत्मनः प्रतिक्षणविनाशित्वे तदीयेन्द्रियस्य घटादिविषयसन्निकर्षकाले तस्य आत्मनो नष्टत्वात् तत्प्रत्यक्षानुपपत्तिः। अन्यदीयविषयेन्द्रियसंयोगेन अन्यस्य विषयप्रत्यक्षाभ्युपगमे, चैत्रस्य विषयचक्षुस्संयोगेन मैत्रस्य तद्विषयप्रत्यक्षापत्तिः। अन्येन अनुभूतस्य अन्येन स्मरणाभ्युपगमे पूर्वोक्तदोषप्रसङ्गः; विषयाणां घटादीनां क्षणिकत्वे, दृष्टस्य घटादेः तदैव नष्टत्वात्, दृष्टस्य हानं उपादानं वा इत्यादिव्यवहारासिद्धिश्च। अतः अयुक्तमिदं वैभाषिकमतम्॥

ननु आत्मनिष्ठया अस्थिरेषु स्थिरत्वबुद्धिरूपया अविद्यया परमाणूनां सङ्घातभाव उपपद्यत इति चेत्; नैवं—अस्थिरेषु स्थिरत्वबुद्धेः आस्थिराणां परमाणूनां सङ्घातभावं प्रति हेतुत्वायोगात्। अन्यथा शुक्तिकायां रजतबुद्ध्या शुक्तेः रजतात्मना सङ्घातभावप्रसङ्गात्॥

किञ्च घटादीनां क्षणिकत्वे उत्तरोत्तरघटोत्पत्तिक्षणे पूर्वपूर्वघटस्य नष्टत्वात्, हेत्वभावेन उत्तरोत्तरघटोत्पत्त्यनुपपत्तिः। अभावात् उत्पत्त्यङ्गीकारे, सर्वत्र सर्वदा सर्वस्य उत्पत्तिप्रसङ्गः। एवं हेत्वभावेऽपि कार्योत्पत्त्यभ्युपगमे अधिपतिसहकार्यालम्बनसमनन्तरप्रत्ययाः चत्वारो विज्ञानोत्पत्तौ हेतव इति स्वप्रतिज्ञाविरोधः। अत्र हि ज्ञानोत्पत्तिं प्रति अधिपत्यादीनां हेतुत्वं प्रतिज्ञायते। अधिपतिः–इन्द्रियं; सहकारी–आलोकादिः; आलम्बनं–विषयो घटादिः; समनन्तरप्रत्ययः–अनन्तरपूर्वक्षणोत्पन्नं ज्ञानं; एतानि चत्वारि ज्ञानोत्पत्तौ हेतव इति प्रतिज्ञार्थः॥

यदि प्रतिज्ञाऽविरोधनिर्वाहाय पूर्वघटक्षणे सत्येव उत्तरघटक्षणोत्पत्तिः अङ्गीक्रियते, तर्हि कार्यकारणयो. पूर्वोत्तरघटयोः युगपदुपलब्धिप्रसङ्ग; घटादीनां क्षणिकत्वभङ्गप्रसङ्गश्च। अपि च द्रव्यस्य निरन्वयनाशाभ्युपगमोऽप्यनुपपन्नः। क्षणिकत्ववादिभि. द्रव्यस्य सूक्ष्मः स्थूलश्च इति द्विविधो नाशोऽभ्युपगम्यते। तत्र सूक्ष्मनाशः प्रत्यक्षागोचर., सदृशसन्तानारंभकः; स्थूलस्तु मुद्गराभिघातादिजन्यः, उपलब्धियोग्य, सदृशसन्तानावसानभूतो, निरन्वयश्च। तौ यथाक्रमं अप्रतिसंख्यानिरोधप्रतिसंख्यानिरोधशब्दाभ्यां परिभाष्येते। तत्र द्रव्यस्य उत्पत्तिनाशौ अवस्थान्तरापत्तिरूपौ' इति [1]आरंभणाधिकरणे निरूपितत्वात्, द्रव्यस्य निरन्वयनाशोऽनुपपन्नः। तथा हि–'मृदयं घटः, मृदयं कपाल', मृच्चूर्णमिदं' इत्यादिप्रत्यभिज्ञया एकस्यैव मृद्द्रव्यस्य घटत्वकपालत्वचूर्णत्वाद्योऽवस्थाविशेषा इति घटत्वावस्थाप्राप्तिरेव घटस्योत्पत्तिः, कपालत्वावस्थाप्राप्तिश्च घटस्य विनाश', चूर्णत्वावस्थाप्राप्तिश्च कपालस्य विनाश., इति च निर्धार्यते। अत उत्तरोत्तरमवस्थाविशेषप्राप्ति', न कदाऽपि द्रव्यस्य निरन्वयविनाश; अवस्थाविशेषैरेव उत्पत्तिविनाशव्यवहारनिर्वाहे अतिरिक्तविनाशकल्पने मानाभावात् गौरवाच्च इति॥

किञ्च क्षणिकत्ववादिमते पूर्वघटक्षणनाशात् उत्तरघटक्षणोत्पत्ति., उत्पन्नस्य क्षणस्य नाशश्च अभ्युपगम्यते। सोऽप्यनुपपन्न.। मृत्सुवर्णादेरुत्पन्नस्य घटकुण्डलादेः मृत्सुवर्णत्वादिवत्, तुच्छात् उत्पन्नस्य घटस्य तुच्छत्वापत्ते'। द्रव्यस्य निरन्वयनाशे सति पश्चादुत्पन्नस्य जगतः तुच्छात् उत्पत्तिप्रसङ्ग.; ततश्च तुच्छात् उत्पन्नस्य जगतः तुच्छत्वप्रसङ्ग.। न च इष्टापत्तिः, भवद्भिरपि जगत. तुच्छत्वानभ्युपगमात्॥

किञ्च पृथिव्यादीनि चत्वारि भूतानि; आकाशस्तु तुच्छात्मकः इत्युक्तिरप्ययुक्ता। यथा पृथिव्यादीनि प्रत्यक्षसिद्धानि, तथा आकाशस्यापि

'इह पक्षी चरति,' 'इह आलोक' इत्याद्यबाधितप्रत्यक्षसिद्धत्वेन तस्य तुच्छात्मकत्वासंभवात्। न च आवरणाभाव एव आकाशः; न तु भावात्मकं पदार्थान्तरं इति वाच्यम्। कालविशेषावच्छिन्नदेशविशेषातिरिक्तस्य कस्यचित् अत्यन्ताभावस्य अप्रामाणिकत्वेन आवरणस्य पृथिव्यादेः अत्यन्ताभावस्य देशविशेषरूपताया दुरपह्नवत्वेन, आकाशस्य आवरणाभावरूपत्वेऽपि भावरूपताया अवर्जनीयत्वात्, 'इह घटो नास्ति' इति प्रतीयमानो घटात्यन्ताभावो हि तत्प्रतीतिकालावच्छिन्नतद्देशविशेषरूप एव; न त्वतिरिक्तः अनुपलम्भात्, अतिरिक्तकल्पने गौरवाच्च ॥

अपि च घटादीनां क्षणिकत्ववर्णनमप्ययुक्तम्। 'सोऽयं घटः' इति अबाधितप्रत्यभिज्ञाप्रत्यक्षेण घटस्य पूर्वोत्तरकालद्वयसम्बन्धसिद्धेः। न च 'सेयं दीपज्वाला' इति प्रत्यभिज्ञाप्रत्यक्षवत्, 'सोऽयं घटः' इति प्रत्यभिज्ञाऽपि सादृश्यमूला भ्रान्तिः इति वाच्यम्—'सेयं दीपज्वाला' इत्यादौ पूर्वोत्तरज्वालयोः तैलवर्त्यादिभिन्नसामग्रीजन्यत्वेन, भेदस्य अनुमानप्रमाणसिद्धत्वेन, तयोः ऐक्यावगाहिप्रत्यभिज्ञाया भ्रान्तित्वेऽपि, इह कालद्वयसम्बन्धिनो घटस्य भिन्नत्वे प्रमाणाभावेन, कालद्वयसम्बन्धावगाहिप्रत्यभिज्ञाप्रत्यक्षस्य भ्रान्तित्वायोगात् ॥

न च 'अयं घटः' इति घटस्य वर्तमानताग्राहिप्रत्यक्षेण वर्तमानस्य घटस्य अवर्तमानात् भविष्यतश्च घटात् भेदसिद्धिः। एवं 'घटः क्षणिकः अर्थक्रियाकारित्वात्, यन्नैवं तन्नैवं, यथा शशविषाणादि' इत्यनुमानेनापि घटादेः क्षणिकत्वसिद्धिः। अतः उक्तप्रत्यक्षानुमानाभ्यां पूर्वोत्तरघटयोः भेदसिद्ध्या, उक्तप्रत्यभिज्ञाप्रत्यक्षस्य भ्रान्तित्वमवश्यं अभ्युपगमनीयं इति वाच्यं—'अयं घटः' इत्यादिप्रत्यक्षेण घटस्य वर्तमानकालसम्बन्धमात्रप्रतीतावपि, कालान्तरसम्बन्धाभावाप्रतीतेः, अवर्तमानात् व्यावृत्त्यसिद्धेः। अर्थक्रियाकारित्वस्य द्विलक्षणादिसम्बन्धं विना अनुपपत्त्या तेन स्थिरत्वस्यैव सिद्ध्या उक्तहेतोर्विरुद्धत्वेन, तेन क्षणिकत्वसिद्ध्यसंभवात् इति दिक् ॥

किञ्च 'घटादीनां क्षणिकत्वे, घटचक्षुःसंयोगदशायां घटस्य नष्टत्वेन तस्य ज्ञानविषयत्वं न स्यात्; ज्ञानोत्पत्तिकाले अनवस्थानात्' इति प्रागुक्तदोषपरिजिहीर्षया यदुक्तं सौत्रान्तिकैः 'विषयस्य नीलादेः ज्ञाने नीलादिस्वाकारसंक्रमणहेतुत्वमेव ज्ञानविषयत्वम्। तच्च नीलादेरर्थस्य ज्ञानोत्पत्तिकाले असत्त्वेऽपि निर्वहति। नीलादावर्थे उत्पन्ने अर्थगतनीलाद्याकारस्य ज्ञाने संक्रमणात्, 'इदं नीलं' इति ज्ञानं भवति। तत्र ज्ञानगतनीलाद्याकारेण नीलादिः अर्थोऽनुमीयते; न तु नीलादेरर्थस्य प्रत्यक्षविषयता। अतो ज्ञानवैचित्र्यस्य अर्थवैचित्र्यकृतत्वात्, ज्ञानोत्पत्तिकाले असतोऽपि नीलाद्यर्थस्य 'इदं नीलं' इति ज्ञानोत्पत्तिहेतुतयैव ज्ञानविषयत्वोपपत्तिः' इति; तदयुक्तम् धर्मिणि विनष्टे तद्धर्मस्य अन्यत्र संक्रमणासंभवात्; नीलादावर्थे नष्टे, तद्गतनीलाद्याकारस्य ज्ञाने संक्रान्त्ययोगात्। न हि जपाकुसुमे नष्टे, तद्गतलौहित्यस्य स्फटिके संक्रमणं दृष्टम्। न वा बिम्बे नष्टे, तद्गततिलकादेः आदर्शे संक्रान्तिः दृष्टा॥

किञ्च सर्वेषां वस्तूनां क्षणिकत्वाभ्युपगमे, तत्तत्पुरुषार्थोपाये प्रथमं प्रवृत्तिः, ततश्च उपायानुष्ठानं, ततश्च पुरुषार्थसिद्धिः इत्येवं क्रमेण पुरुषार्थप्राप्तेः प्रयत्नसाध्यत्वं नोपपद्यते, प्रयतमानस्य प्रयत्नकाले एव नष्टत्वात्। ततश्च प्रयत्नं विनैव पुरुषार्थप्राप्तेरवश्यवक्तव्यतया भोगमोक्षोपायप्रवृत्तिरहितानामपि भोगमोक्षप्राप्तिः दुर्वारा स्यात्। तदेवं वैभाषिकसौत्रान्तिकयोः दर्शनस्य असमीचीनयुक्तिमूलकत्वेन असमञ्जसतया श्रीनिवासापरनामधेयस्य ब्रह्मणः श्रुतिसिद्धस्य जगत्कारणत्वपक्षस्य 'अयमेव पक्षः प्रामाणिकः' इति विस्रंभार्हत्वं सिद्धम्॥

४८॥ इति समुदायाधिकरणम्॥ ३॥

---

१४ ॥ उपलब्ध्यधिकरणम् ॥ ४ ॥

घटादीनां क्षणिकत्वे तेषां प्रत्यक्षानुपपत्तिः इति वैभाषिकपक्षे यत् दूषणमुक्तं, तत्र घटादीनां ज्ञानातिरिक्तानां अभावेन, ज्ञानादनतिरिक्तानां तेषां क्षणिकत्वेऽपि, स्वप्रकाशज्ञानेन प्रत्यक्षं नानुपपन्नं इति प्रत्यवतिष्ठमानस्य योगाचारस्य पक्षप्रतिक्षेपाय प्रवृत्तमिदमधिकरणम् ॥

बौद्धैकदेशिनो योगाचाराः पुनरित्थमाहुः—ज्ञानप्रकाशेन विना नीलपीतादेः अर्थस्य प्रकाशो न संभवतीति तावत् सर्वसम्मतम्। ज्ञानस्य निराकारस्य प्रकाशायोगात् केनचिदाकारेणैव प्रकाशो वाच्यः। इत्थं च 'नीलमहं जानामि' 'पीतमहं जानामि' इत्यादिरूपेण प्रकाशमानस्य ज्ञानस्य नीलपीतादिरेव आकार इत्यवश्यमभ्युपगन्तव्यम्; आकारान्तरानुपलंभात्। नीलपीतादिज्ञानानां नीलपीताद्यर्थसमानरूपत्वं विना तत्तदर्थासांकर्यानुपपत्त्या तन्निर्वाहायापि तेषां नीलपीतादिमत्त्वं अवश्यं आश्रयणीयम्। ज्ञानस्य नीलादेः अर्थस्य च सहैव उपलंभनियमादपि नीलतज्ज्ञानयोः अभेदः सिद्धः। इत्थं च नीलपीतादेः आन्तरज्ञानाकारत्वे सिद्धे, तस्य नीलपीतादेः बहिर्वदवभासस्य भ्रमत्वेनाप्युपपत्तेः आकारद्वयानुपलब्धेश्च नीलपीतादिः बाह्योऽर्थो नास्त्येव' इति ॥

उक्तपक्षप्रतिक्षेपाय प्रवृत्तमिदं सूत्रम्—

## नाभाव उपलब्धेः ॥ २-२-२७ ॥

[वैधर्म्याच्च न स्वप्नादिवत् ॥ २८ ॥
न भावोऽनुपलब्धेः ॥ २९ ॥]

घटादिबाह्यार्थानां अभावो न वक्तुं शक्यते। उपलब्धेः-'घटमहं जानामि' इत्युपलभ्यमानत्वात् इति सूत्रार्थः।

ज्ञानविषयाश्रयाणां उपलंभे सदृशि बाधविरहे च ।
विषयाश्रयौ निरस्य ज्ञानस्यैकस्य पारमार्थ्योक्त्या ॥ ५८ ॥
योगाचारमतस्याप्यतिदौःस्थ्येनाप्रमाणत्वात् ।
यद्धेतुत्वं सुदृढं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ५९ ॥

अर्थः । ज्ञानस्य, विषयाणां, ज्ञानाश्रयस्य च प्रत्यक्षे तुल्ये, बाधज्ञानाभावे च तुल्ये घटादिरूपं विषयं ज्ञातारं चापलप्य, ज्ञानमात्रस्य परमार्थत्वोक्त्या, योगाचारमतस्य निर्युक्तिकत्वेन क्षोदाक्षमतया अप्रमाणत्वात्, यद्धेतुत्वं-यस्य श्रीनिवासापरनामधेयब्रह्मणः कारणत्वं, सुदृढं, तद्ब्रह्म इति पूर्ववत् ॥

भावः । 'घटमहं जानामि' इति प्रत्यक्षे घटादौ विषये, अहमर्थे ज्ञातरि ज्ञाने च उपलभ्यमाने, घटतज्ज्ञात्रोरपि बाधज्ञाने असति, ज्ञानस्य एकस्य परमार्थतां, इतरयोः अपरमार्थतां च वदतो योगाचारस्य मतं निर्युक्तिकम् । येन प्रत्यक्षेण ज्ञानस्य पारमार्थ्यं अभ्युपगम्यते तस्य प्रत्यक्षस्य विषये ज्ञातरि च तुल्यतया प्रत्यक्षबलेन ज्ञानस्य पारमार्थ्याङ्गीकारे इतरयोरपि तद्बलेन पारमार्थ्यस्य अङ्गीकर्तव्यत्वात् ।

किञ्च घटचक्षुःसंयोगानन्तरं 'घटमहं जानामि' इति प्रत्यक्षं जायते, न तु घटचक्षुस्संयोगाभावे । अत. प्रथमं घटचक्षुस्संयोगः, अनन्तरं घटप्रत्यक्षमिति स्थिते प्रत्यक्षोत्पत्तेः पूर्वमेव स्थितस्य घटस्य कथं पश्चात् उत्पन्नज्ञानाकारत्वम् ? कथं वा घटचाक्षुषे घटचक्षुस्संयोगापेक्षानियमः ? अतो घटो न ज्ञानस्य आकार , अपि तु ज्ञानात् अर्थान्तरमेव ॥

न च निराकारस्य ज्ञानस्य प्रकाशायोगात् आकारान्तरस्य अनुपलंभात्, घटादि ज्ञानस्यैव आकार इति अवश्यं आश्रयणीयं इति वाच्यम्— घटादेः अर्थस्य व्यवहारानगण्यापादकत्वमेव ज्ञानस्य आकार इति तेनैव

आकारेण ज्ञानस्य प्रकाशोपपत्त्या, घटादेः ज्ञानाकारत्वस्य अनभ्युपगमेऽपि क्षतिविरहात् । घटाद्यसाधारण्यं तु, 'येन विषयेण यस्य ज्ञानस्य संबन्धः तज्ज्ञानं तद्विषयासाधारणं' इति व्यवस्थया उपपद्यते । ज्ञानस्य घटादेश्च संबन्धः संयोगः, ज्ञानस्यापि द्रव्यत्वात् । ज्ञानार्थयोः सहोपलंभनियमस्तु तयोर्भेदस्यैव साधकः, भिन्नयोरेव साहित्यसंभवात् ॥

न च 'जागरितप्रत्ययः अर्थशून्यः, प्रत्ययत्वात्; स्वाप्नप्रत्ययवत् इत्यनुमानेन घटपटादिबाह्यार्थज्ञानानां अर्थशून्यत्वसिद्ध्या बाह्यार्था न सन्त्येव' इति वाच्यम् । सुप्तोत्थितस्य पुरुषस्य स्वप्नदृष्टार्थबाधज्ञानोदयेन दोषमूलकत्वनिश्चयेन स्वाप्नप्रत्ययस्य अर्थशून्यत्वाभ्युपगमेऽपि, जाग्रत्प्रत्ययोत्तरं अर्थबाधज्ञानानुदयेन जाग्रत्प्रत्ययस्य अर्थशून्यत्वकल्पनायोगात्, अर्थशून्यस्य ज्ञानस्य क्वचिदप्यनुपलंभाच्च । स्वाप्नप्रत्ययस्यापि स्वप्नद्रष्टृपुरुषैकानुभाव्यस्वप्नकालमात्रावस्थायीश्वरविचित्रसृष्टिविषयवस्तुविषयकत्वस्य 'सन्ध्याधिकरणे[1] वक्ष्यमाणत्वाच्च । अतो निर्युक्तिकं इदं योगाचारदर्शनमिति ॥ ७९ ॥ इति उपलब्ध्यधिकरणम् ॥ ४ ॥

## १५ ॥ सर्वथाऽनुपपत्त्यधिकरणम् ॥ ५ ॥

प्रथम सौगतेषु बाह्यार्थान् अभ्युपगम्य तत्क्षणिकत्ववादिनां पक्षो निरस्तः; अनन्तरं बाह्यार्थशून्यत्ववादिना; इदानीं सर्वशून्यत्ववादिनां बौद्धैकदेशिनां पक्षो निरस्यते ॥

बौद्धैकदेशिनो माध्यमिकाः पुनः इत्यमाहुः–उत्पत्तेः निरूपयितुं शक्यत्वे हि, उत्पादकं प्रधानं, परमाणवो वा, ब्रह्म वा इति विचारस्य अवकाशः; उत्पत्तिरेव दुर्निरूपा । तथा हि–किं भावात् उत्पत्तिः अङ्गीक्रियते, किं अभावात्? न तावत् भावात्; घटादिकं हि मृत्पिण्डात् उत्पद्यमानं

[1] ब्र.सू. ३-२-१.

मृत्पिण्डाद्युपमर्देनैव उत्पद्यते। एवं सर्वमपि कार्यं कारणोपमर्दमन्तरा नोत्पद्यते। उपमर्दश्च कारणाकारविनाश एव। स च अभाव। अतो न भावात् उत्पत्ति। नाप्यभावात्, अभावात् भावोत्पत्तेरसंभवात्। अत उत्पत्ते दुर्निरूपतया उत्पत्त्यनन्तरभाविन सर्वेऽपि विकारा न सन्त्येव इति सर्वोऽप्ययं लोकव्यवहारो भ्रान्तिमूलक एव। अत शून्यमेव तत्त्वं इति ॥

तत्पक्षनिरासाय प्रवृत्तमिदमधिकरणम्—

## सर्वथाऽनुपपत्तेश्च ॥ २-२-३० ॥

प्रमेयाना प्रमाणाना सर्वेषा सत्त्वे असत्त्वे वा तदभिमततुच्छत्वा नुपपत्तेः असमञ्जसं माध्यमिकदर्शनं इति सूत्रार्थ ॥

> स्वस्मिन् प्रमाणसत्त्वेऽसत्त्वे वा शून्यवादस्य ॥
> उन्मज्जनविरहेण स्वासिद्ध्यापादकत्वेन ॥ ६० ॥
> अत्यन्तं दुःस्थतया माध्यमिकीयस्य पक्षस्य ।
> यद्धेतुत्वं सुदृढं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ६१ ॥

**अर्थः**। शून्यवादस्य 'सर्वं तुच्छं निःस्वभावं' इत्येवंविधपक्षस्य, स्वस्मिन् प्रमाणसत्त्वे—स्वसाधकप्रमाणसद्भावे, असद्भावे वा, उन्मज्जनविरहेण—स्वरूपसत्ताया अलाभेन, स्वासिद्ध्यापादकत्वेन—स्वस्यैव स्वव्याघातकत्वात् माध्यमिकीयस्य पक्षस्य—सर्वशून्यवादिपक्षस्य अत्यन्तं अनुपपन्नतया, यस्य श्रीनिवासापरनामधेयस्य ब्रह्मण हेतुत्वं सुदृढं इति पूर्ववत् ॥

भाव'। 'सर्वं शून्य' इति वदता पक्षे स्वाभिमतार्थसाधकप्रमाणसद्भावाभ्युपगमे प्रमाणसद्भावादेव सर्वशून्यत्वासिद्धि, प्रमाणानभ्युपगमे प्रमाणाभावादेव स्वाभिमतार्थस्य असिद्धि इति स्वव्याघातकत्वात्, तत्पक्षो

अत्यन्तमसमञ्जसः। किञ्च सर्वं शून्यं इत्यनेन यदि नास्तित्वं विवक्षितं, तर्हि रूपान्तरापत्तेरेव नास्तिपदार्थत्वात् रूपान्तरेण अस्तित्वं उक्तं भवति। मृत्पिण्डनाशदशायां मृत्पिण्डो नास्तीति व्यवहारे घटत्वावस्थाया एव विषयताया [1]आरम्भणाधिकरणे निरूपितत्वात् ॥

इदमत्रावधेयम्—'इदानीं मृत्पिण्डोऽस्ति,' 'इदानीं मृत्पिण्डो नास्ति,' 'इह मृत्पिण्डोऽस्ति,' 'इह मृत्पिण्डो नास्ति,' इत्येव प्रतीतिः व्यवहारश्च। देशकालावनन्तर्भाव्य, 'मृत्पिण्डो नास्ति' इति तु न कदाचिदपि प्रतीतिः व्यवहारश्च। ततश्च 'इदानीं मृत्पिण्डोऽस्ति' 'इह मृत्पिण्डोऽस्ति' इत्यादौ मृद्द्रव्यस्य पिण्डत्वावस्थाविषयः। 'इदानीं मृत्पिण्डो नास्ति' इत्यत्र तु पिण्डत्वावस्थानाशात्मकघटत्वावस्थाविषयः ॥

'इह मृत्पिण्डो नास्ति' इत्यत्र तु कालविशेषावच्छिन्नदेशविशेषरूपः मृत्पिण्डत्वावस्थापन्नद्रव्यात्यन्ताभावो विषयः। इत्थं च 'इदानीं मृत्पिण्डोऽस्ति' इति व्यवहार इव 'इदानीं मृत्पिण्डो नास्ति' इति व्यवहारेऽपि मृद्द्रव्यस्य केनचित् रूपेण सत्त्वमेव व्यवह्रियते, न तुच्छत्वम्। अतो न केनापि प्रमाणेन जगतः तुच्छत्वसिद्धिः। मृत्पिण्डोपमर्दश्च घटत्वावस्थोत्पत्तिरूपः पिण्डत्वावस्थानाशः। ततश्च मृद्द्रव्यं पिण्डत्वावस्थावत् उत्पादकं, घटत्वावस्थावत् तदेव उत्पाद्यं इति, न कदाऽपि अभावात् भावोत्पत्तिरिति ॥

९० ॥ इति सर्वथाऽनुपपत्त्यधिकरणम् ॥ ५ ॥

## ॥ १६ ॥ असंभवाधिकरणम् ॥ ६ ॥

एवं चतुर्विधसौगतमतं निरस्य, परमाणुकारणतावादसाम्यात् उपस्थितस्य आर्हतमतस्य प्रतिक्षेपाय प्रवृत्तमिदमधिकरणम् ॥

---

[1] शा. सू. २-१-६ (ग).

आर्हताः पुनः इत्थं वर्णयन्ति—जीव-धर्म अधर्म-पुद्गल-काल-आकाश-भेदेन षड्द्रव्यात्मकं इदं जगत्। ईश्वरो नाम न कश्चित् अस्ति। तत्र जीवः ज्ञानसुखवीर्यादिगुणको देहसमपरिमाणः। धर्मः प्रवृत्तिमतां प्रवृत्तिहेतुः प्रवृत्त्यनुमेयो जगद्व्यापी द्रव्यविशेषः। अधर्मः स्थावराणां अप्रवृत्तिहेतुभूतो जगद्व्यापी द्रव्यविशेषः। पुद्गलः रूपरसगन्धस्पर्शवत् द्रव्यम्। तच्च द्विविधं—परमाणुरूपं, तत्संघातरूपं चेति। तत्र संघातः पृथिव्यप्तेजोरूपः, तत्सङ्घातभूतशरीरादिरूपश्च। कालः—अतीतादिव्यवहारहेतुभूतो अणुरूपो द्रव्यविशेषः। आकाशः एकः अनन्तप्रदेशश्च। सर्वमिदं वस्तु, सदेव असदेव इत्यादिनियमरहितं, 'सदसदात्मकं, नित्यानित्यात्मकं, भिन्नाभिन्नात्मकं च' इत्येवमादिरूपेण अनैकान्तिकमिति ॥

तत्र सदसदात्मकत्वाद्यनैकान्तवाददूषणाय प्रवृत्तमिदं सूत्रम् ॥

## नैकस्मिन्नसंभवात् ॥ २-२-३१ ॥

[एवं चात्माकार्त्स्न्यम् ॥ ३२ ॥
न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३३ ॥
अन्त्यावस्थितेश्चोभयनित्यत्वादविशेष ॥ ३४ ॥]

आर्हतोक्तं न उपपद्यते। एकस्मिन् वस्तुनि विरुद्धस्य सदसदात्मकत्वादेः युगपत्, असम्भवात्—असमावेशात् इति सूत्रार्थ ॥

तेजोन्धकारयोरिव परस्परविरुद्धयोरुभयोः।
सर्वस्मिन्नपि वस्तुनि सत्त्वासत्त्वादिधर्मयोः कथनात् ॥६२॥

अत्यन्तं दुःस्थतया जैनाभिमतस्य पक्षस्य।
यद्धेतुत्वं सुदृढं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ६३ ॥

स्पष्टोऽर्थः।

भाव: । जैनमते सर्वस्यैव वस्तुन सत्त्वमसत्त्व च इत्यादिविरुद्धधर्मद्वय युगपदङ्गीक्रियते । तच्चानुपपन्नम्-सत्त्वासत्त्वयोरवस्थाविशेषरूपयो युगपत् एकस्मिन् वस्तुनि समावेशायोगात् । घटस्य सत्त्व नाम घटत्वावस्थायोग , तस्य असत्त्व नाम कपालत्वाद्यवस्था, तदतिरिक्तयो सत्त्वासत्त्वयो अनुपलम्भेन अप्रामाणिकत्वात् । तयोश्च युगपत् एकत्र समावेश नोपपद्यते । नित्यत्व-जन्मवृद्ध्यादिरहितत्वपर्यवसित सतनैकरूपत्वम् । अनित्यत्व तु परिणामिस्वभावत्वम् । इद धर्मद्वय एकत्र न सभवति । एव तद्व्यावृत्तधर्मवत्त्व ततो भिन्नत्वम्, तच्छून्यत्व च तसादभिन्नत्वम् इति तयो समावेशश्च अनुपपन्न ॥

एव आत्मनो देहसमपरिमाणत्वाङ्गीकारे, पिपीलिकाशरीरस्थस्य आत्मन मातङ्गशरीरप्रवेशे कृत्स्नतच्छरीरव्याप्ति नोपपद्यते । एव मातङ्गशरीरस्थस्य आत्मन पिपीलिकाशरीरप्रवेशे आत्मन कृत्स्नस्य तच्छरीरप्रवेशानुपपत्तिश्च । न च पिपीलिकाशरीरप्रवेशदशाया आत्मा सङ्कुचितो भवति, मातङ्गशरीरप्रवेशदशाया विकसितो भवति । अत सङ्कोचविकासवत्त्वात् आत्मन नोक्तानुपपत्ति इति वाच्यम् । तथा सति सङ्कोचविकासवत्तया आत्मनो दीपप्रभादिवत् उत्पत्तिविनाशप्रसङ्गात्, जडत्वादिप्रसङ्गाच्च । एवमात्मनो मोक्षदशाया यत्परिमाण तदेव स्वाभाविक परिमाण इत्यङ्गीकर्तव्यम् । ततश्च आत्मस्वरूपवत् मोक्षकालिकपरिमाणस्यापि नित्यत्वेन पूर्वमपि तदेव परिमाण इति वक्तव्यतया, आत्मन ससारदशाया देहसमपरिमाणवादस्य अनुपपन्नत्वादपि जैनमतमनुपपन्नमिति ॥

९१ ॥ इति असम्भवाधिकरणम् ॥ ६ ॥

## १७ ॥ पाशुपताधिकरणम् ॥ ७॥

कपिल कणाद-सुगत आर्हतमताना वेदबाह्यत्वात् अनादरणीयत्व मस्तु, पाशुपतमतस्य सर्वज्ञपशुपतिप्रवर्तितत्वात्, वेदानुरोधदर्शनाच्च आदरणीयत्वमस्तु इत्याशङ्का परिहर्तुं प्रवृत्तमिदमधिकरणम् ॥

पाशुपताः तावत ईश्वरस्य औपनिषदत्वमनभ्युपयन्त अनुमानेन सिद्धिमाश्रित्य, 'घटादिकार्याणा सकर्तृकत्वदर्शनात्, मृत्कुलालादिरूपयो उपादाननिमित्तकारणयो भेददर्शनाच्च, ईश्वर जगन्निमित्तकारणमात्रम् स च ईश्वर पशुपति । उपादानकारण तु प्रधानम् । यथा कुलालादि मृदाद्युपादानकारण अधिष्ठाय घटादिकार्यं निर्माति, एव पशुपति जगदु पादानभूत प्रधानमधिष्ठाय जगत् सृजति' इति वदन्ति ॥

तन्मतनिरासाय प्रवृत्तमिद सूत्रम्—

## पत्युरसामञ्जस्यात् ॥ २-२-३५ ॥

[अधिष्ठानानुपपत्तेश्च ॥ ३६ ॥
करणवच्चेन्न भोगादिभ्य ॥ ३७ ॥
अन्तवत्त्वमसर्वज्ञता वा ॥ ३८ ॥]

[1] "नैकस्मिन्नसभवात्" इत्यत्र 'न' इत्यनुवर्तते । 'मत, 'आदरणीय' इति च अध्याहार्यम् । ततश्च पत्यु' मत—पशुपते मत, पाशुपत मत इत्यर्थ , न आदरणीय निमित्तोपादानभेदकल्पन, निमित्तकारणविप र्यासकल्पन, वेदविरुद्धमोक्षोपायकल्पन, इत्यादिवेदविरुद्धार्थकल्पनेन अम मञ्जसत्वात् इति सूत्रार्थ ॥

[1] शा सू २ २ ३१

पशुपतिरशेषजगतः कर्तोपादानकारणं त्रिगुणं ।
अनुमानगम्य ईश्वर इति वेदविरुद्धकल्पनात् बहुधा ॥ ६४ ॥

करणं यथाऽधितिष्ठति जीवः प्रकृतिं तथैवेशः ।
अधितिष्ठतीत्युपगमे सुखदुःखादेः प्रसङ्गाच्च ॥ ६५ ॥

पाशुपतस्य मतस्याप्यतिदुःस्थत्वात् श्रुतिप्रमितं ।
यद्धेतुत्वं सुदृढं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ६६ ॥

अर्थः । अशेषजगतः, कर्ता-निमित्तकारणं, पशुपतिः ; जगदुपादानकारणं तु प्रधानाख्यं त्रिगुणं द्रव्यम् । अनेन निमित्तोपादानयोः भेद उक्तो भवति । ईश्वरः-जगत्कर्ता च, अनुमानगम्यः इत्यादिबहुविधवेदविरुद्धार्थकल्पनात्, जीवः यथा अशरीर एव सन्, करणं–देहादिकं, **अधितिष्ठति, तथैव ईशः** अशरीर एव प्रकृतिं अधितिष्ठति इत्यभ्युपगमे, जीवात्मवत् ईश्वरस्यापि सुखदुःखादेः प्रसङ्गात् । अत्र आदिपदेन सृष्टिसंहारविषयत्व असर्वज्ञत्वं च गृह्यते । शिष्टं स्पष्टम् ॥

यदुक्तं पाशुपतैः 'पशुपतिः जगन्निमित्तकारणं, उपादानकारणं तु त्रिगुणद्रव्यं' इत्यादि, तदयुक्त श्रुतिविरोधात् । श्रुतिषु हि [2]"एको ह वै नारायण आसीन्न ब्रह्मा नेशानः," [3]"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं" इत्यादिषु श्रीनिवासापरनामधेयनारायणाख्यमहापुरुषस्यैव जगन्निमित्तत्वं तदुपादानत्वं च प्रतिपाद्यते । अत्र 'कर्ता' इत्यनेन निमित्तकारणत्वस्य, 'योनिं' इत्यनेन उपादानकारणत्वस्य च प्रतिपादनात् । "तं त्वौपनिषदं पुरुषं पृच्छामि" इति ईश्वरस्य उपनिषदेकप्रमाणकत्वं प्रतिपादितम् । पाशुपतमते तु पशुपतेः निमित्तकारणत्वं, प्रकृतेः

[1] ब्र. सू. २-२-३१. [2] महोप १-१. [3]

जगदुपादानकारणत्वं चाश्रीयते। अतो निमित्तोपादानयोः भेदकल्पनं, निमित्तकारणव्यत्यासकल्पनं, ईश्वरस्य आनुमानिकत्वकल्पनं, इत्यादिवेदविरुद्धार्थकल्पनं स्पष्टम्॥

एवं आनुमानिकेश्वरवादे दृष्टान्ते कुलालादेः यथा हस्तादिदेहावयवचेष्टया मृदादिभिर्घटादिनिर्माणं, एवं जगत्कारणस्य पशुपतेरपि हस्तादिदेहावयवचेष्टया प्रधानाख्यद्रव्येण जगन्निर्माणं वक्तव्यम् , देहेन्द्रियादिरहितस्य कस्यापि कार्यनिर्माणादर्शनात्। इत्थं च तद्देहस्य सावयवस्य नित्यत्वे, सावयवत्वहेतोः कार्यत्वव्यभिचारित्वप्रसङ्गः; अनित्यत्वे, तस्यापि शरीरान्तरेण निर्माणं, तस्यापि शरीरान्तरेण इत्यनवस्था। उक्तानवस्थापरिहाराय यथा जीवस्य अशरीरस्यैव शरीरादिप्रवर्तनं, एवं ईश्वरस्यापि अशरीरस्यैव जगदुपादानभूतप्रकृतिप्रवर्तनं इत्यङ्गीकारे, जीवस्येव ईश्वरस्यापि सुखदुःखप्रसङ्गः। जीवस्य शरीराधिष्ठानं पुण्यापुण्यरूपकर्मफलभोगहेतुभूतादृष्टकारितं, तद्वदेव ईश्वरस्यापि प्रकृत्यधिष्ठानस्य पुण्यापुण्यरूपकर्मफलहेतुभूतादृष्टकारितत्वं प्रसज्यते। ततश्च सुखदुःखादिप्रसङ्गः। एवं कर्मवश्यस्येश्वरस्य सृष्टिसहाराविषयत्वं असर्वज्ञत्वं च प्रसज्यते। अत एवमादिदोषैः पाशुपतमतस्य अतिदुःस्थत्वेन, श्रुतिसिद्धस्य 'श्रीनिवासापरनामधेयं ब्रह्मैव जगत्कारणं' इति पक्षस्य 'अयमेव पक्षः प्रामाणिकः' इति विस्रंभार्हत्वं सिद्धम्॥

अत्रेदं बोद्धव्यम्—उपनिषदस्तावत् [1]"तं त्वौपनिषदं पुरुषं पृच्छामि" इत्याद्याः ईश्वरस्य श्रुत्येकसमधिगम्यतां, ब्रह्मज्ञानेन सर्वस्य ज्ञातताप्रतिज्ञा-मृत्पिण्डघटादिदृष्टान्त-ब्रह्मकर्तृकबहुभवनसङ्कल्पपूर्वकसृष्ट्यादिभिः ब्रह्मण एव निमित्ततां उपादानतां च ब्रुवन्त्यः, [2]"एको ह वै नारायण आसीन्न ब्रह्मा

[1]

[2] महो १-१.

नेशानो नेमे द्यावापृथिवी" इत्यादिषु चतुर्मुखपशुपत्यादिसर्वजीवात्मनिषेध-पूर्वकं प्रलयकाले नारायणस्य एकस्यैव अवस्थानप्रतिपादनेन तस्यैव जगन्-निमित्तोपादानतां उद्घोषयन्ति ॥

पाशुपताः पुनः ईश्वरसद्भावे श्रुतेः प्रामाण्याभ्युपगमे उक्तरीत्या नारायणस्यैव जगन्निमित्तोपादानतायाः अङ्गीकर्तव्यतापत्त्या महदनिष्टमालोच्य, ईश्वरस्य उपनिषदेकसमधिगम्यतां परित्यज्य, तस्मिन् अनुमानमेव प्रमाणमाश्रित्य, पशुपतिमीश्वरं आचक्षते। अनेन तेषां वेदबाह्यत्वं स्फुटम्। न केवलं एतावदेव; वृश्चिकभिया पलायितस्य ज्वलनमुखप्रवेशन्यायेन, नारायणकारणत्वाङ्गीकारभिया ईश्वरस्य आनुमानिकत्वाभ्युपगमे, तस्य जीवस्येव गर्भजन्मजरामरणाद्यनन्तदुःखानुभवस्य अवर्जनीयतया महतो अनिष्टस्य आपत्तिः इति अलं बहुना ॥

९२ ॥ इति पाशुपताधिकरणम् ॥ ७ ॥

---

१८ ॥ उत्पत्त्यसंभवाधिकरणम् ॥ ८ ॥

पाशुपतागमस्येव श्रीपाञ्चरात्रागमस्यापि वेदविरोधेन अप्रामाण्य-शङ्कापरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## उत्पत्त्यसंभवात् ॥ २-२-३९ ॥

न च कर्तुः करणम् ॥ ४० ॥

इदं सूत्रद्वयं पूर्वपक्षपरम् । अत्र 'पञ्चरात्रागमो न प्रमाणं' इति पाध्याहार्यम् । असंभवन्त्या जीवोत्पत्तेः अभिधानात्, पाञ्चरात्रागमो न प्रमाणं इति प्रथमसूत्रार्थः । अयं भावः—पाञ्चरात्रागमे [1]"वासुदेवात् सङ्कर्षणो नाम जीवो जायते" इति जीवस्य उत्पत्तिः प्रतिपाद्यते । [2]"न

[1] परमसं. [2] कठ. २-१८.

जायते म्रियते वा विपश्चित्" इत्यादिश्रुतिभिः उत्पत्तिविनाशादिभावविकारशून्यतया प्रतिपादितस्य जीवात्मनः असंभवत उत्पत्त्यास्यविकारस्य आगमेन प्रतिपादनात् पाञ्चरात्रागमो न प्रमाणमिति ।

कर्तुः–जीवात्मनः, करणं–मनः, न उत्पद्यते इति द्वितीयसूत्रार्थः ॥

भावः । [1]"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति श्रुतौ मनसः परमात्मनः सकाशात् उत्पत्तिः प्रतिपादिता । आगमे तु [2]"सङ्कर्षणात् प्रद्युम्नसंज्ञं मनः" इत्यत्र सङ्कर्षणसंज्ञात् जीवात् मनसः उत्पत्तिः प्रतिपादिता । अतः श्रुतिविरुद्धार्थप्रतिपादनात् उक्तागमो न प्रमाणमिति ॥

अत्र सिद्धान्तमाह सूत्रद्वयेन––

विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४१ ॥
विप्रतिषेधाच्च ॥ ४२ ॥

प्रथमसूत्रे वाशब्दः पक्षव्यावृत्त्यर्थः । पाञ्चरात्रागम अप्रमाणं न; प्रमाणमेव इति तदर्थ । तत्र हेतुमाह—विज्ञानादिभावे तदप्रतिषेधः । विज्ञानं च तत् आदि च विज्ञानादि इति कर्मधारयः । ज्ञानस्वरूपं परमकारणं च यद्ब्रह्म, तद्भावे तद्रूपत्वे, तदप्रतिषेधः—तस्य प्रामाण्यस्य प्रतिषेधो न संभवति । अथवा तस्य पाञ्चरात्रागमस्य प्रतिषेधो न संभवति इत्यर्थः । प्रथमकल्पे वाशब्देन अप्रामाण्यरूपपूर्वपक्षव्यावृत्तिद्योतनेन, व्यावृत्तेश्च प्रामाण्यरूपतया, तदुपस्थापितस्य प्रामाण्यस्य 'तदप्रतिषेध' इत्यत्र तच्छब्देन परामर्शः । द्वितीयकल्पे पाञ्चरात्रागम प्रमाणं न वा इति विचारस्य प्रस्तुततया, तदुपस्थापितस्य पाञ्चरात्रागमस्य तच्छब्देन परामर्शः ॥

भावः । [2]"वासुदेवात् सङ्कर्षणो नाम जीवो जायते, सङ्कर्षणात् प्रद्युम्नसंज्ञं मनः" इत्यादौ सङ्कर्षणप्रद्युम्नादिशब्दप्रतिपाद्यं परमकारणभूतं

[1] मु २-१-३. [2] परमसं.

वासुदेवाख्यं परं ब्रह्मैव । तस्य च [1]"अजायमानो बहुधा विजायते" इत्यादि-श्रुतिसिद्धावतारविशेषाः स्वेच्छाकृतशरीरविशेषपरिग्रहरूपाः, "वासुदेवात् सङ्कर्षणो नाम जीवो जायते" इत्यादिषु प्रतिपाद्यन्ते ; न तु श्रुतिविरुद्धः जीवात्मन उत्पत्त्याख्यो भावविकारः; न वा मनइन्द्रियस्य जीवात्मनः सकाशात् उत्पत्तिः। अत्र 'सङ्कर्षण'शब्देन सङ्कर्षणाख्यशरीरविशेषविशिष्टः परमात्मा अभिधीयते । तस्य जीवशब्दसामानाधिकरण्येन जीवशरीरकत्व-पर्यवसितं जीवतत्त्वाभिमानित्वमुच्यते । एवं [2]"प्रद्युम्नसंज्ञं मनः" इत्यत्र प्रद्युम्नशब्दोक्तस्य शरीरविशेषविशिष्टस्य तस्यैव मनःशरीरकत्वपर्यव-सितं मनस्तत्त्वाभिमानित्वमुच्यते ॥

सूत्रे 'ब्रह्मभावे वा' इति वक्तव्ये, 'विज्ञानादिभावे वा' इत्युक्तिस्तु तदागमोक्तार्थस्मारणार्था । तदागमे हि [2]"सर्वे ते चैतन्यस्वरूपिणः" इति सर्वेषां वासुदेवादीनां ज्ञानस्वरूपत्वमुक्तम् । [3]"वासुदेवः परा प्रकृतिः" इति च वासुदेवाख्यशरीरविशेषविशिष्टस्य परमात्मनः परमकारणत्वमुक्तम् । एवं तदागमोक्तयोः ज्ञानस्वरूपत्वपरमकारणत्वयोः ब्रह्मणि प्रत्यभिज्ञापनार्थं [4]"विज्ञानादिभावे वा" इत्युक्तम् ॥

अत्रेदं बोद्धव्यम्—[1]"अजायमानो बहुधा विजायते" इत्यादि-श्रुतिषु परमात्मनो विलक्षणाः प्रादुर्भावाः प्रतिपाद्यन्ते । तादृशश्रुत्यर्थोपबृंह-णाय प्रवृत्तोऽयं [3]"वासुदेवः परा प्रकृतिः" [2]"वासुदेवात् सङ्कर्षणो नाम जीवो जायते" इत्यादिः पाञ्चरात्रागमः। परमात्मा स्वोपासकेषु अनुग्रहेण स्वेच्छया वासुदेवाख्य मूर्तिविशेषं परिगृह्य, तेन मूर्तिविशेषेण मुक्तिं प्राप्ताना स्वभोगं प्रयच्छति । तस्मात् वासुदेवाख्यशरीरात् सङ्कर्ष-णाख्यं शरीरविशेषं उत्पाद्य, तद्विशिष्टः सन् रुद्रान्तर्यामी भूत्वा जगत्

[1]तै. आर. ३-१३-५०. [2]परमस. [3] [4]शा.सू. २-२-४१, ४२.

संहरति। तस्मात् सङ्कर्षणशरीरात् प्रद्युम्नसञ्ज्ञं शरीरविशेषमुत्पाद्य, तद्विशिष्टः सन् चतुर्मुखान्तर्यामी भूत्वा जगत् सृजति। तस्मात् प्रद्युम्नसञ्ज्ञात् अनिरुद्धसञ्ज्ञं शरीरविशेषमुत्पाद्य, तद्विशिष्टः सन् स्वयमेव रक्षति। एवं स्वशरीरं चतुर्धा विभज्य तद्विशिष्टः सन् पूर्वोक्तानि तत्तत्कार्याणि कुर्वन्, तत्तन्मूर्तिविशिष्टस्वोपासकानां अभिमतफलानि च प्रयच्छति इति [1]"अजायमानो बहुधा विजायते" इति श्रुत्यभिप्रायोऽनेन विवृतो भवति इति।

उक्तागमस्य अयमेवाभिप्रायः, न तु जीवोत्पत्तौ इति कथमवगम्यते इति चेत्, तत्र आह [2]"विप्रतिषेधाच्च" इति। विशिष्य तदागमे जीवोत्पत्तेः प्रतिषेधाच्च [3]"सङ्कर्षणो नाम जीवो जायते" इत्यागमवाक्यस्य जीवोत्पत्तिपरत्वाभावो गम्यते इति तदर्थः॥

अयं भावः—पाञ्चरात्रागमे जीवात्मानं प्रस्तुत्य, [4]"स ह्यनादिरनन्तश्च परमार्थेन निश्चितः" इत्यत्र जीवस्य उत्पत्तिविनाशयोः निषेधात्, [3]"सङ्कर्षणो नाम जीवो जायते" इत्यागमवाक्यं न जीवोत्पत्तिप्रतिपादनपरमिति निर्धार्यते इति॥

ननु कपिल कणाद सुगत आर्हत पाशुपतागमानां अप्रामाण्यप्रतिपादनेन स्वाभिमतब्रह्मकारणतावादस्य श्रद्धेयत्वसाधनाय प्रवृत्तेऽस्मिन् तर्कपादे तत्तदागमानां प्रामाण्यप्रतिषेधवत् पाञ्चरात्रागमस्यापि प्रामाण्यप्रतिषेधपरत्वमेव अस्य अधिकरणस्य युक्तम्, न तु तत्प्रामाण्यसमर्थनपरत्वं, पादासङ्गतिप्रसङ्गात्। सूत्रस्वारस्यमपि तत्रैव। [5]"विज्ञानादिभावे वा" इति सूत्रे 'वा'शब्दस्य पक्षव्यावृत्त्यर्थकत्वमस्वरसम्, [6]"विप्रतिषेधाच्च" इति सूत्रे विप्रतिषेधपदं च [7]"विप्रतिषेधाच्चासमञ्जसं" इति रचनानुपपत्त्यधिकरणस्थविप्रतिषेधपदमिव व्याहतौ स्वरसं, न तु प्रतिषेधमात्रे। अत

[1] तै आर ३ १३ १० [2] शा सू २ २ ४१ ४२ [3] परमस [4] पाञ्चरात्रे
[5] शा सू २ २ ४१ [6] शा सू. २ २ ४२ [7] शा सू २ २ ९

चत्वार्यपि सूत्राणि पाञ्चरात्रप्रामाण्यप्रतिषेधपराण्येव व्याख्येयानि। ततश्च [1]"विज्ञानादिभावे वा तदप्रतिषेधः" इति सूत्रस्य अयमर्थः—वासुदेव-सङ्कर्षणादीनां चतुर्णां ज्ञानबलैश्वर्यादिषाड्गुण्यसद्भावाभ्युपगमे वा तद्-प्रतिषेधः—उत्पत्त्यसंभवस्य प्रतिषेधो न संभवति इति॥

अयं भावः—वासुदेवादयः चत्वारोऽपि ज्ञानादिषाड्गुण्ययुक्ताः परमात्मान एव, न तु जीवादयः सङ्कर्षणशब्देन उच्यन्ते इत्यभ्युपगमेऽपि, उत्पत्त्यसंभवदोषः तदवस्थ एव। ईश्वरस्य चतुर्धाभावाभ्युपगमे अनेकेश्वर-प्रसङ्गात्। एकेनैव कार्यनिर्वाहे अनेकत्वस्य व्यर्थत्वात्। तच्छरीराणां पूर्वस्मात् पूर्वस्मात् उत्तरोत्तरोत्पत्तिपरत्वमपि न युक्तम्। उत्पद्यमानेन हि उत्पादकात् अतिशयवता भाव्यम्। न चात्र उत्पद्यमानेषु कश्चिदतिशयो वक्तुं शक्यः। अतः उत्पत्त्यसंभवदोषः तदवस्थ एवेति॥

दूषणान्तरमाह [2]"विप्रतिषेधाच्च" इति। परस्परव्याहतत्वात् वेद-विरुद्धत्वाच्च पाञ्चरात्रागमो न प्रमाणमिति सूत्रार्थः। अयं भावः-पाञ्चरात्रागमे ज्ञानबलादीनां क्वचित् वासुदेवगुणत्वं, क्वचित् वासुदेवस्वरूपत्वं चाभि-धीयते। इदं च व्याहतम्—गुणगुणिभावस्य अभेदस्य च विरुद्धत्वात्। एवं शाण्डिल्यस्य वेदैः निःश्रेयसालाभस्य, पाञ्चरात्रागमेन तल्लाभस्य च प्रतिपादनेन वेदनिन्दया च पाञ्चरात्रागमो न प्रमाणमिति॥

एवं चतुर्णामपि सूत्राणां पञ्चरात्रागमस्य अप्रामाण्यसमर्थनपरत्वमेव युक्तं इति चेत्, अत्र ब्रूमः—

पाञ्चरात्रशास्त्रवक्तुः आप्तत्वातिशयं, शास्त्रतात्पर्यं, सूत्रकारसरणिं न यथावदालोच्य, पाञ्चरात्राधिकरणस्य तर्कपादसङ्गत्युपपत्तिमात्रकृते तदागमाप्रामाण्यस्य सिद्धान्तीकरणं महत्साहसकृत्यम्। तथा हि—पञ्चरात्र-शास्त्रस्य वक्ता खलु अनाघ्रातभ्रमप्रमादादिदोषगन्धः स भगवान् नारायणः;

[1] शा. सू. २-२-४१. [2] शा. सू. २-२-४२.

यथाऽऽह सूत्रकारो भगवान् बादरायणो महाभारते मोक्षधर्मपर्वणि नारायणीयोपाख्याने, "पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयं" इति। अत्र हि प्रकरणे सांख्याद्यागमानां कपिलादितत्तत्पुरुषोक्तत्वमभिधाय, 'पञ्चरात्रशास्त्रस्य कृत्स्नस्य नारायणः स्वयं वक्ता' इत्यभिधानेन, पाञ्चरात्रवक्तुः आप्ततमत्वं, तदागमस्य कार्त्स्न्येन प्रामाण्यं च 'स्वयं'पद'कृत्स्न' पदाभ्यां प्रदर्शितम्। एवं पाञ्चरात्रागमे [1]"स ह्यनादिरनन्तश्च परमार्थेन निश्चितः" इति जीवात्मन उत्पत्तौ तच्छास्त्रतात्पर्याभावः प्रदर्शितः। उक्तरीत्या पाञ्चरात्रागम एव जीवोत्पत्तौ प्रतिषिद्धायामपि, कथं भगवान् सूत्रकारः जीवोत्पत्तिप्रतिषेधं अनादृत्य, जीवोत्पत्त्यभिधायित्वेन तदागमस्य अप्रामाण्यं सूत्रयेत्? यः खलु [2]आत्माधिकरणे 'जीवात्मा उत्पद्यते, न वा' इति संशये [3]"यतो वा इमानि भूतानि जायन्ते" इत्यादिषु 'जीवानां उत्पत्तिप्रलयश्रवणेन तेषां उत्पत्तिरस्ति' इति पूर्वपक्षं प्रापय्य, [4]"न जायते म्रियते वा विपश्चित्" इति श्रुत्यन्तरेण जीवात्मनां उत्पत्तिविनाशयोः प्रतिषेधेन 'जीवात्मनामुत्पत्तिः नास्ति' इति सिद्धान्तितवान्, स सूत्रकारः कथं इह परं उत्पत्तिप्रतिषेधकपाञ्चरात्रागमवाक्यान्तरं अनालोच्य वा, अनादृत्य वा, जीवोत्पत्त्यभिधायित्वेन तच्छास्त्रस्य अप्रामाण्यं सिद्धान्तयेत्? को वा ब्रूयात् पूर्वोत्तरपरामर्शेन तत्तच्छास्त्रतात्पर्यनिर्धारणप्रवीणः सूत्रकारः भगवत्प्रणीतस्य पाञ्चरात्रशास्त्रस्य जीवोत्पत्त्यभिधानेन अप्रामाण्यं सिद्धान्तितवान् इति साहसिकादन्य.?

कथं तर्हि पञ्चरात्रागमप्रामाण्यसमर्थनपरत्वे, अस्य अधिकरणस्य तत्तदागमप्रामाण्यप्रतिक्षेपपरपादसङ्गतिः इति चेत्; इत्थं—परपक्षप्रतिक्षेप एव प्रकृतपादानुगतार्थः। पञ्चरात्रागमस्य आगमत्वसाम्येन अप्रामाण्यवादिनां पक्षस्यापि तदप्रामाण्यानभ्युपगन्तुः सूत्रकारस्य परपक्षतया, तत्पक्षनिराकरणं सुसङ्गतमेव ॥

[1] पञ्चरात्रे. [2] शा. सू. २-३-३ (अ). [3] तै. भृगु. १. [4] कठ. १-१८.

इत्थं पादसङ्गतौ उपपद्यमानायामपि, तच्छास्त्रानभिमतमप्यर्थं तस्मिन् आरोप्य, तस्य अप्रामाण्यसाधनेन तत्पादसङ्गत्युपपादनं असङ्गतमेव । न ह्यप्रामाण्यसाधनेनैव तत्पादसङ्गतिः उपपादनीया इति काचित् राजाज्ञा ॥

[1]"विज्ञानादिभावे वा तदप्रतिषेधः" इति सूत्रे 'वा'शब्दस्य पक्षव्यावृत्तिपरत्वमस्वरसं इति यदुक्तं, तन्न; 'वा'शब्दो हि पक्षान्तर एव स्वरसः । ततश्च पूर्वं [2]"उत्पत्त्यसंभवात्" इति सूत्रद्वयोक्तपक्षात् पक्षान्तरपरत्वे पूर्वसूत्रद्वयोक्तपक्षस्य पूर्वपक्षत्वं, उत्तरसूत्रद्वयोक्तपक्षस्य सिद्धान्तपक्षत्वं च स्वरसलभ्यमेव । यथा पूर्वमीमांसायां, [3]"एकं वा संयोगरूपचोदनाख्याऽविशेषात्" "नाना वा देवता पृथक्त्वात्" इत्यादिषु 'वा'शब्दस्य पूर्वपक्षव्यावृत्तिपरत्वं; तद्वत् इहापि 'वा'शब्दस्य पूर्वपक्षव्यावृत्तिपरत्वं स्वारसिकमेव इति ॥

यदप्युक्तं [4]"विप्रतिषेधाच्च" इति 'विप्रतिषेध'पदं अस्वरसं इति, तदपि न; अर्थानौचित्ये निश्चिते पदस्वारस्यस्य अकिञ्चित्करत्वात् । अर्थानौचित्यं च अनुपदमेव प्रदर्शयिष्यते ॥

यदपि 'वासुदेवादीनां चतुर्णामीश्वरत्वे, अनेकेश्वरकल्पनाप्रसङ्गः' इति, तदपि ईश्वरानेकत्वानभ्युपगमादेव परिहृतम् । वासुदेवादीश्वरशरीरानेकत्वं ह्यङ्गीकृतम् ॥

यदप्युत्पद्यमानस्य उत्पादकादतिशयेन भाव्यमिति, तदपि तत्तदवताराणां कार्यविशेषरूपातिशयप्रदर्शनेनैव परिहृतम् ॥

यदपि ज्ञानादीनां क्वचित् ईश्वरगुणत्वकीर्तनं, क्वचित् ईश्वरत्वकीर्तनं इति व्याहतार्थकथनमिति, तदपि न, ज्ञानस्वरूपस्य सतो भगवतः परमात्मनः ज्ञानादिगुणाश्रयत्वपरत्वात्, वाक्यस्य व्याहतार्थताविरहात् ॥

[1] शा सू २-२-४१. [2] शा सू २-२-३९. [3] [4] शा. सू. २-२-४२.

यद्यपि वेदनिन्दाकरणेन वेदविरोध इति, तदप्यनुपपन्नम्; वेदतात्पर्यस्य दुर्ग्रहताया पञ्चरात्रागमेन तत्तात्पर्यविशदीकरणेन वेदतात्पर्यस्य निर्णीततया च तात्पर्यात् तद्वाक्यस्य इति—तस्मात् नेदमधिकरणं पञ्चरात्राप्रामाण्यसाधनपर इति सिद्धम् ॥

व्यूहविशेषपरत्वात् जीवोत्पत्त्यादिवादिवचनस्य ।
वेदविरोधाभावात् कुत्रापि च पाञ्चरात्रतन्त्रस्य ॥ ६७ ॥
अप्रामाण्याभावात् प्रमाणमूर्धन्यतन्त्रसिद्धतया ।
यद्धेतुत्वं सुदृढं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ६८ ॥

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य कलाप्रपूर्णस्य
श्रीदेशिकाचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालायां
द्वितीयाध्यायस्य द्वितीयः पादः ॥

अर्थः । [1]"वासुदेवात् सङ्कर्षणो जायते" इत्यादिपाञ्चरात्रागमवाक्यानां जीवाद्यभिमानिभगवदवतारविशेषप्रतिपादनपरत्वेन जीवोत्पत्तिप्रतिपादनपरत्वाभावात्, वेदविरोधाभावाच्च, पञ्चरात्रागमस्य वेदतुल्यप्रमाणतया श्रीनिवासापरनामधेयस्य ब्रह्मणो जगत्कारणतायाः तदागमसिद्धत्वात्, तस्य कारणत्वं सुप्रतिष्ठितं इति दिक् ॥

९३ ॥ इति उत्पत्त्यसम्भवाधिकरणम् ॥ ८ ॥

---

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य कलाप्रपूर्णस्य
श्रीदेशिकाचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालाप्रकाशे
द्वितीयाध्यायस्य द्वितीयः पादः ॥

---

[1] परमअ

## द्वितीयाध्यायस्य तृतीयः पादः ।

### १९ ॥ वियदधिकरणम् ॥ १ ॥

प्रथमाध्याये कारणवाक्यानां श्रीनिवासापरनामधेये ब्रह्मणि समन्वयप्रदर्शनेन चिदचिद्विलक्षणस्य ब्रह्मणो जगत्कारणत्वं निर्धारितम् ॥

द्वितीयेऽध्याये प्रथमपादेन ब्रह्मणो जगत्कारणत्वपक्षस्य निर्दोषतायाः, द्वितीयपादेन ब्रह्मेतरप्रधानादिकारणतावादिपक्षाणां तर्काभासमूलकत्वेन दुष्टतायाश्च प्रदर्शनेन ब्रह्मणो जगत्कारणत्वं स्थिरीकृतम् ॥

इदानीं उत्तरेण पादद्वयेन ब्रह्मणो जगत्कारणतायाः जगदन्तर्गतानां वियदादीनां ब्रह्मकार्यतानिर्वाह्यतया श्रुतिषु कासुचित् वियदादीनां उत्पत्तेः, कासुचित् तदभावस्य च प्रतिपादनेन परस्परव्याहतिदर्शनेन वियदादीनां ब्रह्मकार्यताया निर्धारयितुं अशक्यतया, ब्रह्मणो जगत्कारणत्वं दुरुपपादं इत्याक्षेपपरिहारपूर्वकं वियदाद्यचेतनानां चेतनानां च तत्तदनुगुणब्रह्मकार्यत्वनिर्वाहप्रकारप्रदर्शनेन ब्रह्मणो जगत्कारणत्वं उपपाद्यते । तत्र वियत् उत्पत्त्याक्षेपपरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## न वियदश्रुतेः ॥ २-३-१ ॥

इदं पूर्वपक्षसूत्रम् । 'उत्पद्यते' इत्यध्याहार्यम् । ततश्च, वियत्-आकाशः, न उत्पद्यते ; तदुत्पत्तिप्रतिपादनसमर्थश्रुत्यभावात् इति सूत्रार्थः ॥

अथ भावः—यद्यपि [1]"तस्माद्वा एतस्मादात्मन आकाशः संभूतः। आकाशात् वायुः वायोरग्निः" इति तैत्तिरीयश्रुतौ, [1]"आत्मन आकाशः संभूतः" इत्यत्र आकाशस्य ब्रह्मणः सकाशादुत्पत्तिः प्रतीयते, तथाऽपि

[1] तै. आन. १.

तत्र "संभूतः" इति श्रुतिः आकाशस्य उत्पत्तिप्रतिपादने न समर्था, आकाशस्य निरवयवद्रव्यत्वेन उत्पत्त्यसंभवात्। असंभवतोऽर्थस्य श्रुत्याऽपि प्रतिपादनायोगात्। निरवयवद्रव्यत्वादेव ह्यात्मन उत्पत्त्यभावः इति॥

अत्र सिद्धान्तमाह—

अस्ति तु ॥ २-३-२ ॥

[गौण्यसंभवाच्छब्दाच्च ॥ ३ ॥

स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ४ ॥

प्रतिज्ञाऽहानिरव्यतिरेकात् ॥ ५ ॥

शब्देभ्यः ॥ ६ ॥

यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥]

तुशब्दः पक्षव्यावृत्त्यर्थः। आकाशस्य उत्पत्तिः अस्ति एव इति सूत्रार्थः॥

अयं भावः—निरवयवद्रव्यत्वस्य उत्पत्त्यभावं प्रति अप्रयोजकत्वेन आकाशस्य उत्पत्तिसंभवेन अयोग्यताविरहात् [1]"आत्मन आकाशः संभूतः" इति संभूतश्रुतिः आकाशस्योत्पत्तिं प्रतिपादयितुं समर्थैव। आत्मन उत्पत्त्यभावस्तु न निरवयवद्रव्यत्वप्रयुक्तः; अपि तु "न जायते म्रियते वा विपश्चित्" इत्यादितदुत्पत्तिप्रतिषेधकश्रुतिसिद्धः। इह तु उक्तश्रुत्या आकाशस्य उत्पत्तिप्रतिपादनेन तस्योत्पत्तिः अस्त्येव, अतीन्द्रियेऽर्थे श्रुतेरेव प्रमाणत्वेन तस्य यथाश्रुति प्रतिपत्तव्यत्वात् इति॥

ननु [1]"आत्मन आकाशः संभूतः" इत्यत्र संभूतश्रुतेः गौणत्वमवश्यमाश्रयणीयम्। अन्यथा छान्दोग्ये [2]"तत्तेजोऽसृजत" इति सिसृक्षुणा

[1] तै. आन. १. [2] छा. ६-२-३.

ब्रह्मणा तेजसः प्रथमसृष्टिप्रतिपादनेन तद्विरोधप्रसङ्गात्। अत्र हि तेजसः पूर्वमेव ब्रह्मणः सकाशात् आकाशोत्पत्तिः प्रतीयते। [1]"वायुश्चान्तरिक्षं च, एतदमृतं" इति श्रुत्यन्तरे आकाशस्य नित्यत्वपर्यवसितामृतत्वप्रतिपादनेन तद्विरोधप्रसङ्गादपि संभूतश्रुतेः गौणत्वमाश्रयणीयम्। न च [2]"आत्मन आकाशः संभूतः" इत्यत्र संभूतश्रुतेः गौणत्वे, [2]"वायोरग्निः" इत्यत्र अनुपक्तायाः संभूतश्रुतेरपि गौणत्वं स्यादिति शंक्यम्। [2]"आत्मन आकाशः संभूतः" इत्यत्र श्रुतस्य संभूतशब्दस्य गौणत्वेऽपि [2]"वायोरग्निः" इत्यत्र अनुषक्तस्य तस्य मुख्यत्वे बाधकाभावात्। यथा मुण्डकोपनिषदि एकस्मिन्नेव प्रकरणे [3]"तपसा चीयते ब्रह्म ततोऽन्नमभिजायते" इत्यत्र ब्रह्मणि मुख्यस्यापि ब्रह्मशब्दस्य [4]"तस्मादेतत् ब्रह्म नामरूपमन्नं च जायते" इत्यत्र प्रधाने गौणत्वं तद्वत्। इयांस्तु विशेषः–तत्र ब्रह्मशब्दस्य द्विः श्रुतिः; इह त्वनुषङ्ग इति। अतः सकृदुच्चरितस्य शब्दस्य युगपत् वृत्तिद्वयासंभवेऽपि श्रुतस्य अनुषक्तस्य च पदस्य वृत्तिद्वयविरोधाभावात् "[2]आत्मन आकाशः संभूतः" इति श्रुतेः गौणत्वात्, आकाशस्योत्पत्तिः अप्रामाणिकी इति चेत्।

उच्यते–छान्दोग्य एव यथा मृत्पिण्डज्ञानेन तत्कार्यभूतघटादीनां ज्ञातता, एवमेकस्य ब्रह्मणो ज्ञानेन सर्वं जगत् ज्ञातं भवति इति प्रतिज्ञया जगद्ब्रह्मणोः कार्यकारणभावसिद्ध्या, जगदन्तर्गतस्य आकाशस्यापि ब्रह्मणः सकाशात् उत्पत्तिः सिद्धैव। एवं तत्रैव [5]"सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयं" इत्यत्र सृष्टेः प्राक् ब्रह्मण एकत्वावधारणेन तदानीं आकाशाद्यभावलाभेन, आकाशस्याप्युत्पत्तिः तत्र अङ्गीकृतैव। तत्र [2]"तत् तेजोऽसृजत" इत्यत्र ब्रह्मणा तेजःसृष्टिमात्रं प्रतिपादितं, न तु प्रथमसृष्टत्वम्।

---

[1] बृ. ४-३-३. [2] तै. आन. १. [3] मु. १-१-८. [4] मु. १-१-९.
[5] छा. ६-२-१.

अतः तद्विरोधाभावात्, [1]"वायुश्चान्तरिक्षं चैतदमृतं" इत्यत्र 'अमृत'शब्दस्य चिरकालावस्थायित्वाभिप्रायेणाप्युपपत्त्या तद्विरोधाभावाच, [2]"आत्मन आकाशः संभूतः" इत्यत्र संभूतशब्दस्य न गौणत्वं न्याय्यम्। [1]"वायुश्चान्तरिक्षं च" इत्यत्र 'अमृत'शब्दस्य नित्यत्वपरत्वे, वायोरप्यनुत्पत्तिप्रसङ्गात्, तस्य चिरकालावस्थायित्वपरताया अवश्यवक्तव्यत्वात्॥

एवं छान्दोग्ये [3]"ऐतदात्म्यमिदं सर्वं" इत्यनेन सर्वस्य जगतो ब्रह्मकार्यतया ब्रह्मात्मकत्वप्रतिपादनादपि आकाशस्योत्पत्तिः सिद्धा। यथा लोके, 'एते सर्वे देवदत्तपुत्राः' इत्युक्त्वा तेषु केषाञ्चित् विशिष्य देवदत्तपुत्रत्वाभिधानेऽपि, अन्येषां देवदत्तपुत्रत्वमुक्तप्रायं; एवमिहापि "ऐतदात्म्यमिदं सर्वं" इत्यादिना आकाशादेः सर्वस्य ब्रह्मकार्यतया ब्रह्मत उत्पत्तिमभिधाय, तेजोजलपृथिवीनां ब्रह्मत उत्पत्त्यभिधानेऽपि, अन्येषामपि ततः उत्पत्तिः उक्तप्रायैव। वायोरप्यत एव उत्पत्तिः सिद्धा॥

किं बहुना—परमकारणस्य ब्रह्मण एकस्यैव उत्पत्त्यभावः; तद्व्यतिरिक्तस्य सर्वस्य अव्यक्तमहदहङ्कारतन्मात्रेन्द्रियाकाशवाय्वादेः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञादिविरोधप्रसङ्गेन उत्पत्त्यभावो दुर्वच इति॥

ज्ञाते ब्रह्मणि सर्वं ज्ञातं भवतीति या प्रतिज्ञोक्ता।
उत्पत्त्यनभ्युपगमे तदनिर्वाहान्निषेधविरहाच्च ॥ ६९ ॥
स्वीकर्तव्योत्पत्तिः ब्रह्मत एवेति निश्चयात् वियतः।
यत्कार्यत्वमभग्नं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ७० ॥

भावः। [4]"उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति" इति ब्रह्मज्ञानेन सर्वं ज्ञातं भवतीति सद्विद्याप्रकरणे प्रतिज्ञाय, मृत्पिण्डघटादिदृष्टान्तेन

[1] वृ. ४-३-३. [2] तै. आन. १. [3] छा. ६-८-७. [4] छा. ६-१-३.

तदुपपादितम् । अतो घटमृत्पिण्डयोरिव जगद्ब्रह्मणोः कार्यकारणभावलाभात् ब्रह्मकार्यत्वं कृत्स्नस्य जगतोऽभ्युपगन्तव्यम् । अतो जगदन्तर्गतस्य आकाशस्यापि ब्रह्मकार्यत्वमवश्यमाश्रयणीयम् । अन्यथा ब्रह्मज्ञानेन सर्वस्य ज्ञाततायाः अनिर्वाहात् । छान्दोग्यश्रुतौ तेजसः प्रथमसृष्टिवचनं, तैत्तिरीयके, [1]"तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति श्रुतिसिद्धां तेजसः प्रागाकाशस्य उत्पत्तिं न निरोद्धुमलम् 'प्रथमं तेजोऽसृजत' इत्यनुक्तेः । अतः उक्तप्रतिज्ञासिद्धस्य जगद्ब्रह्मणोः कार्यकारणभावस्य उपपत्तये आकाशस्य वायोश्च ब्रह्मणः सकाशादुत्पत्तिः अङ्गीकर्तव्या । सा चोत्पत्तिः [1]"तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यत्र श्रुतात् आदित्यमण्डलस्थपुण्डरीकाक्षश्रीनिवासापरनामधेयानन्दमयात्मन एवेति निर्धार्यत इति ॥

९४ ॥ इति वियदधिकरणम् ॥ १ ॥

---

२० ॥ तेजोधिकरणम् ॥ २ ॥

पूर्वस्मिन्नधिकरणे ब्रह्मव्यतिरिक्तस्य सर्वस्य ब्रह्मकार्यत्वसमर्थनेन ब्रह्मणः सर्वकारणत्वमुपपादितम् । तच्च कारणत्वं, न साक्षात्; अपि तु परंपरया इत्याक्षेपपरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## तेजोऽतस्तथा ह्याह ॥ २-३-१० ॥

आपः ॥ ११ ॥

पृथिवी ॥ १२ ॥

अधिकाररूपशब्दान्तरेभ्यः ॥ १३ ॥

---

[1] तै. आन. १.

इमानि पूर्वपक्षसूत्राणि। एतेषामयमभिप्रायः—[1]"वायोरग्निः, अग्नेराप अद्भ्यः पृथिवी" इति तैत्तिरीयश्रुतौ तेजःप्रभृतीनां वाय्वादिभ्यः पूर्वपूर्वेभ्य उत्पत्तिः श्रूयते। तथा छान्दोग्ये, [2]"तत्तेज ऐक्षत; तदपोऽसृजत।" [3]"ता आप ऐक्षन्त; ता अन्नमसृजन्त" इति तेजसः अप्स्रष्टृत्वं, अपां पृथिवीस्रष्टृत्वं चाभिहितम्। [3]"ता अन्नमसृजन्त" इत्यत्र महाभूतसृष्टियुक्ति-प्रकरणस्थेन अन्नशब्देन मुख्यार्थस्य ओदनादेः उक्त्ययोगात्, उत्तरत्र महाभूतानां त्रिवृत्कृतत्वप्रदर्शनप्रकरणे पृथिवीरूपस्योक्त्यवसरे [4]"यत्कृष्णं तदन्नस्य" इति अन्नशब्देन पृथिव्यभिधानदर्शनात्, तैत्तिरीयश्रुतौ [1]"अद्भ्यः पृथिवी" इति अन्नशब्दस्थाने पृथिवीशब्दप्रयोगाच्च प्रकृतान्नशब्देन पृथिवी-कार्यवाचिना कारणभूतपृथिवी उपचर्यते इति निश्चीयते॥

ततश्च उदाहृततैत्तिरीयछान्दोग्यश्रुत्योः तेजःप्रभृतेरेव अबाद्युत्पत्ति-प्रतिपादनेन, पृथिव्याः जलं साक्षात्कारणं; जलस्य तेजः; तेजसो वायुः इति लाभात्, परमात्मा पृथिव्यादिकं प्रति परंपरयैव कारणमिति॥

अत्र सिद्धान्तमाह—

**तदभिध्यानादेव तु तल्लिङ्गात् सः॥१४॥** इत्यादिना।

[विपर्ययेण तु क्रमोऽत उपपद्यते च॥१५॥

अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्॥१६॥

चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात्॥१७॥]

**तदभिध्यानात्**, तस्य—बहुभवनस्य, अभिध्यानात्; [2]"बहु स्यां" इति सङ्कल्पादित्यर्थः। तद्रूपात् **तल्लिङ्गात्**—परमात्मलिङ्गात्, **सः**—परमा-त्मैव सर्वेषां अव्यवहितकारणं इति सूत्रार्थः॥

---

1 तै ––– १ 2 ६ २ ३ 3 ... ६ - ४ 4 ... ६ ५ १

स्वस्य बहुत्वोत्पत्ती संकल्प्य समस्तमसृजदिति सिद्ध्या ।
ब्रह्मैव वायुरूपात्तस्मादजनिष्ट वह्निरूपमिति ॥ ७१ ॥
अर्थावगतेः सिद्धा श्रुत्यन्तरतश्च सर्वस्य ।
यत उत्पत्तिः साक्षात् तद्ब्रह्म श्रीनिवासनाम भजे ॥ ७२ ॥

अर्थः । स्वस्य—ब्रह्मणः, बहुत्वं, तदर्थं उत्पत्तिं च संकल्प्य, समस्तं अव्यक्तादिपृथिव्यन्तं, असृजत् इति अर्थस्य सिद्ध्या, ब्रह्मैव, वायुरूपात् तस्मात्—ब्रह्मणः, वह्निरूपं अजनिष्ट—उत्पन्नं इति [1]"वायोरग्निः" 'संभूतः' इति श्रुतेः अर्थस्य अवगमात्, [2]"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुः ज्योतिरापः पृथिवी विश्वस्य धारिणी" इति श्रुत्यन्तराच्च, सर्वस्य जगतः यतः श्रीनिवासापरनामधेयात् ब्रह्मणः साक्षात् उत्पत्तिः सिद्धा, तद्ब्रह्मेति पूर्ववत् ॥

भावः । छान्दोग्ये सद्विद्याप्रकरणे, [3]"सदेव सोम्येदमग्र आसीत्" इति प्रस्तुत्य, [3]"तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त" इति स्वात्मनो बहुत्वस्य तदर्थमुत्पत्तेश्च संकल्पपूर्वकं तेजःप्रभृतिसृष्ट्युक्त्या सकल्पयोग्यं ब्रह्मैव उक्तसकल्पपूर्वकं तेजःप्रभृतेः सृष्टिकर्तृ इति, सृष्टिरपि ब्रह्मण एव तेजःप्रभृतिरूपेण उत्पत्तिरिति, सर्वेशत्वासामत्यन्यायेन अव्यक्तमहदहङ्कारादीनां पृथिव्यन्तानां सर्वेषां उक्तसंकल्पपूर्वकमेव सृष्टिरिति चावगम्यते । अत्र तैत्तिरीयके [1]"तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यादिजगदुत्पत्तिप्रतिपादकवाक्ये [1]"वायोरग्निः संभूतः" इत्यनेन वाक्येन वायुरूपात् ब्रह्मणः अग्निरूपं ब्रह्म उत्पन्नं; अग्निरूपात् ब्रह्मणः अन्नरूपं ब्रह्म; अन्नरूपात् ब्रह्मणः पृथिवीरूपं ब्रह्म इत्यर्थोऽवगम्यते । [1]"आकाशाद्वायुः" इत्यत्रापि उक्तन्यायेन

[1] तै. आन. १. [2] मु. २-१-३. [3] छा. ६-२-१.

आकाशरूपात् ब्रह्मणो वायुरूपं ब्रह्म उत्पन्नं इत्यवगम्यते । एवं तमोरूपा ब्रह्मणः अक्षररूपं ब्रह्म उत्पन्नमित्यादि च उक्तन्यायादेवावगम्यते ॥

एवं छान्दोग्ये [1]"तत्तेजोऽसृजत" इत्यादेरपि, वायुरूपं ब्रह्म तेजोरूपमुत्पन्नं इत्यादिरर्थः इत्यवगम्यते । अत्र सर्वत्र तमआदेः अचेतनस्य ब्रह्मणश्च स्वरूपैक्यासंभवात्, अन्तर्यामिब्राह्मणे सुबालोपनिषदि च [2]"यस्य पृथिवी शरीरं" इत्यारभ्य, [2]"यस्य तमःशरीरं" इत्यन्तेन आम्नातं पृथिव्यादितत्तच्छरीरकत्वमेव ब्रह्मणः तत्तद्रूपत्वं इति, अजत्वेन श्रुतस्य ब्रह्मणः उत्पत्तिरपि शरीरभूतपृथिव्यादितत्तद्द्वारा इति च निश्चीयते । अतः पूर्वपूर्वतत्त्वशरीरकात् ब्रह्मण एव उत्तरोत्तरतत्त्वशरीरकस्य ब्रह्मण उत्पत्तिः इति तैत्तिरीयच्छान्दोग्ययोः प्रतीयते । अत एव मुण्डकोपनिषदि पूर्वोदाहृते [3]"एतस्माज्जायते प्राणः" इति मन्त्रे प्राणमनःप्रभृतीनां पृथिव्यन्तानां ब्रह्मणः साक्षादुत्पत्तिवचनमुपपद्यते ॥

ननु अस्मिन् मन्त्रे, [3]"खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" इत्यत्र, [4]"आकाशाद्वायु, वायोरग्निः" इति तैत्तिरीयश्रुत्युक्तः आकाशादीनामुत्पत्तिक्रमः प्रतीयते । तत्साहचर्यात् मनसः इन्द्रियाणां च उत्पत्तिक्रमो अत्र अभिधीयते इति निश्चीयते । अतः नेयं श्रुतिः सर्वेषां आकाशादीनां साक्षात् ब्रह्मणः सकाशात् उत्पत्तिप्रतिपादनपरा इति चेत् । मैवं— [3]"एतस्माज्जायते" इत्यस्मिन् मन्त्रे [3]"एतस्माज्जायत" इत्यस्य प्राण इव मनःप्रभृतिषु पृथिव्यन्तेषु सर्वेषु अन्वयेन प्राणस्येव मनःप्रभृतीनां पृथिव्यन्तानां परमात्मनः साक्षात् उत्पत्तेरविशेषेण प्रतीयमानत्वात्, प्राणस्य वायुकार्यस्य आकाशादिभूतोत्पत्तेः पूर्वं उत्पत्त्यसंभवेन अस्य मन्त्रस्य उत्पत्तिक्रमपरताया असंभवाच्च ॥

[1] छा. ६-२-३. [2] सुबाल. ७. [3] मु. २-१-३. [4] तै. आन. १.

ननु [1]"आकाशाद्वायुः वायोरग्निः" इत्यादौ [2]"तत्तेज ऐक्षत" इत्यादौ च आकाशतेजःप्रभृतिशब्दानां परमात्मवाचकत्वे, तेषां तत्र तत्र परमात्मनः उत्पत्तिप्रतिपादकता स्यात्। आकाशतेजःप्रभृतिशब्दानां परमात्मवाचकत्वं न संभवति, व्युत्पत्तिविरोधात् इति चेत्, न; [3]"सेयं देवता इमास्तिस्रो देवता अनेन जीवेनाऽऽत्मना अनुप्रविश्य नामरूपे व्याकरोत्" इति श्रुत्या आकाशवायुतेजःप्रभृतीनां नाम्नां सृज्यमानवस्तुषु स्वानुप्रवेशपूर्वकं परमात्मना सृष्टत्वप्रतिपादनेन, सर्वेषामेव नाम्नां परमात्मपर्यन्तवाचकतायाः उक्तनामरूपव्याकरणश्रुतिसिद्धत्वात्। सृज्यमानवस्तुषु अनुप्रवेशमन्तराऽपि नामरूपव्याकरणसंभवेन, अनुप्रवेशपूर्वकं तत्सृष्टेः प्रयोजनान्तरासंभवात्, सृज्यमाननाम्नां स्वपर्यन्ततासिद्धेरेव तत्प्रयोजनत्वस्य अवश्यवक्तव्यत्वात्। लोके गवादीनां नाम्नां तत्तद्वस्तुमात्रपरतया व्यवहारस्तु वेदान्तश्रवणात् प्राक् परमात्मपर्यन्ततया व्युत्पत्तेरपूर्णत्वात्। अतो न कश्चित् दोषः इति ॥

[3]"सदेव सोम्य इदमग्र आसीत्" इत्यत्र सच्छब्देन [1]"तस्माद्वा एतस्मादात्मनः" इत्यादौ तच्छब्देन, [4]"एतस्माज्जायते प्राण." इत्यादौ एतच्छब्देन च निर्दिष्टस्य परमकारणस्य श्रीनिवासापरनामधेयनारायणरूपतायाः ईक्षत्यधिकरण-आनन्दमयाधिकरण-अदृश्यत्वादिगुणकाधिकरणादिषु निर्णीतत्वात्, तदभिप्रायेण अत्र "तद्ब्रह्म श्रीनिवासनाम भजे" इत्युक्तम् ॥

५५ ॥ इति तेजोऽधिकरणम् ॥ २ ॥

---

[1] तै. आन. १. [2] छा. ६-२-३. [3] छा. ६-२-१. [4] मु. २-१-३.

## २१ ॥ आत्माधिकरणम् ॥ ३ ॥

एवं [1] "गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्" इति सूत्रे प्रस्तुतयो जीवपरमात्मनो अन्यतरस्य परमात्मन एकस्य विज्ञानेन सर्वस्य ज्ञातताप्रतिज्ञाऽन्यथाऽनुपपत्त्या सिद्धाया वियदादेः अचित्प्रपञ्चस्य ब्रह्मकार्यताया स्वरूपान्यथाभावरूपविकारवत्त्वेन निर्वाह पूर्वाधिकरणयो प्रदर्शित । इदानीं तयोरन्यतरस्य जीवात्मन उक्तप्रतिज्ञान्यथाऽनुपपत्तिसिद्धब्रह्मकार्यतानिर्वाहकतया वियदादेरिव प्रसक्ता उत्पत्तिं श्रुतिविरोधेन प्रतिषिद्ध्य प्रकारान्तरेण ब्रह्मकार्यतामुपपादयितु प्रवृत्तमिदमधिकरणम् ॥

## नात्मा श्रुतेः नित्यत्वाच्च ताभ्यः॥ २-३-१८ ॥

आत्मा न उत्पद्यते, [2] "न जायते म्रियते वा विपश्चित्" इत्यादिश्रुतिषु तस्य उत्पत्त्यभावश्रवणात् [3] "नित्यो नित्याना चेतनश्चेतनाना एको बहूना यो विदधाति कामान्" इत्यादिभि श्रुतिभिः तस्य नित्यत्वावगमाच्च इति सूत्रार्थ । अत्र सूत्रे 'आत्मा' इति जातावेकवचनम् । सूत्रोदाहृताया "नित्यो नित्याना" इत्यादिश्रुतौ "एको बहूना" इति जीवात्म बहुत्वोक्ते ॥

उत्पत्तिप्रतिषेधात् नित्यत्वोक्तेश्च जीवस्य ।
नास्त्युत्पत्तिरथापि प्रतिज्ञया प्रागुदाहृतया ॥ ७३ ॥
संकोचादिविकारिज्ञानाश्रयगुणप्रणाडिकया ।
यत्कार्यत्वमभग्नं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ७४ ॥

अर्थः । [2] "न जायते म्रियते वा विपश्चित्" इत्यादिषु जीवस्य उत्पत्ति नास्ति इत्युक्तम् । [3] "नित्यो नित्याना चेतनश्चेतनाना एको बहूना यो विदधाति कामान्" इत्यादिषु जीवात्मना नित्यत्व चोक्तम् । तद्य

[1] शा सू १ २ ४१ [2] कठ २ १८ [3] श्वे ६ १३

जन्ममरणशून्यत्वम् । अतो जीवस्य आकाशादिवत् उत्पत्तिः यद्यपि नास्ति, तथाऽपि जीवस्य ब्रह्मकार्यत्वानभ्युपगमे पूर्वोक्ताया ब्रह्मज्ञानेन सर्वज्ञातताप्रतिज्ञाया अनिर्वाहप्रसङ्गात्, तस्यापि ब्रह्मकार्यत्वमङ्गीकार्यम् । ततश्च जीवात्माऽपृथक्सिद्धविशेषणभूतज्ञानाख्यद्रव्यस्य संकोचविकासरूपावस्थाविशेषात्मकोत्पत्तिमत्त्वेन तस्य ब्रह्मकार्यतया तादृशावस्थावज्ज्ञानद्वारा जीवात्मनोऽपि परब्रह्मभूतश्रीनिवासकार्यत्वमक्षतमिति ॥

अत्रैवं पूर्वपक्षः—प्रागुदाहृताया एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः जीवस्योत्पत्तिं विना अनिर्वाहात् [1] "यतो वा इमानि भूतानि जायन्ते" इत्यत्र भूतशब्दनिर्दिष्टस्य अचित्संसृष्टचेतनस्य उत्पत्तिश्रवणात्, [2] "तोयेन जीवान् विससर्ज भूम्या" इति जीवस्य तोयोपलक्षितपृथिव्यादिभिः समं सृष्टत्वश्रवणाच्च तस्य उत्पत्तिरस्त्येवेति ॥

सिद्धान्तः ।

[3] "न जायते म्रियते वा विपश्चित्," [3] "अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे" इत्यादिश्रुतिषु जीवात्मनः उत्पत्तिप्रतिषेधात्, उत्पत्तिनाशरहितत्वरूपनित्यत्वश्रवणाच्च नास्त्युत्पत्तिः । [4] "यतो वा इमानि भूतानि जायन्ते" इत्यादिषु जीवात्मनो जातत्वोक्तिस्तु देवमनुष्यादिदेहविशेषसंयोगाभिप्राया इति ॥

यद्यपि सूत्रे जीवात्मनः श्रुतिषु उत्पत्तिनिषेधात् तन्नित्यत्वाभिधानाच्च, उत्पत्तिर्नास्तीति सिद्धान्तितं, न तु जीवात्मनो ब्रह्मकार्यत्वप्रकारो निरूपितः ; न चैतावता जीवस्य ब्रह्मकार्यत्वाभावे सूत्रकाराणां तात्पर्यं वक्तुं

[1] तै. भृगु. १.　[2] तै. अभ. १-१.　[3] कठ. १-१८.
[4] तै. भृगु. १.

शक्यम्; ब्रह्मज्ञानेन सर्वस्य ज्ञातताप्रतिज्ञया ब्रह्मव्यतिरिक्तस्य सर्वस्य ब्रह्मकार्यत्वमवश्यमभ्युपगन्तव्यमिति पूर्वाधिकरणे [1]"प्रतिज्ञाऽहानिरव्यतिरेकात्" इति सूत्रे सिद्धान्तितत्वात्। अतः सूत्रस्य जीवोत्पत्तिनिषेध एव तात्पर्यं, न तु कार्यत्वाभावे। अतः तस्य ब्रह्मकार्यत्वनिर्वाहेऽपि तात्पर्यमस्त्येव। अनन्तराधिकरणे [2]"ज्ञोऽत एव" इत्यत्र जीवात्मनः ज्ञानाश्रयत्वस्य व्यवस्थापनात्, [3]"पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्" इति सूत्रे जीवात्मधर्मभूतज्ञानस्य सुषुप्तौ संकोचावस्थाया जाग्रद्दशायां विकासावस्थायाश्च व्यवस्थापितत्वात्, [4]"यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्" इति सूत्रे तन्नित्यताया व्यवस्थापितत्वाच्च सङ्कोचविकासरूपविकारवद्धर्मभूतज्ञानद्वारा जीवात्मनो विकारवत्त्वेन ब्रह्मकार्यत्वमुपपादनीयमित्यत्र सूत्रकाराणां तात्पर्यं गम्यते। ततश्च यथा ब्रह्मणः स्वरूपतो निर्विकारत्वेऽपि शरीरभूताचेतनद्वारा विकाराश्रयत्वमादाय कारणत्वं, [5]"न तु दृष्टान्तभावात्" इति सूत्रे समर्थितम्; तथा जीवात्मनः स्वरूपतो निर्विकारत्वेऽपि तद्धर्मभूतज्ञानद्वारा विकारवत्त्वमादाय कार्यत्वं निर्वहणीयमिति सूत्रकाराणामभिप्रायः। अत एव अनन्तराधिकरणे जीवात्मनो ज्ञानधर्मकत्वव्यवस्थापनं सङ्गच्छते इति दिक्॥

नामरूपव्याकरणश्रुते, प्रलयदशाया अत्यन्तसङ्कुचितस्य जीवात्मधर्मभूतज्ञानस्य देवमनुष्यादिशरीरसम्बन्धेन विकासावस्थापादनार्थतायाः अनन्तराधिकरणे वक्ष्यमाणतया नामरूपस्रष्टुः श्रीनिवासापरनामधेयमहापुरुषताया ईक्षत्यधिकरणादिषु निर्णीतत्वात्, तदभिप्रायेण अत्र यत्कार्यत्नमभग्नं इत्युक्तम्॥

५६ ॥ इति आत्माधिकरणम् ॥ ३ ॥

---

[1] शा. सू. २-३-५.  [2] शा. सू. २-३-१९.  [3] शा.सू. २-३-३१.
[4] शा. सू. २-३-३०.  [5] शा. सू. २-१-९.

## २२ ॥ ज्ञाधिकरणम् ॥ ४ ॥

पूर्वस्मिन्नधिकरणे जीवात्मन उत्पत्त्यभावेऽपि, धर्मभूतज्ञानद्वारा तस्य ब्रह्मकार्यत्वं निर्वहणीयमित्यभिप्रेत्य, जीवात्मस्वरूपनिरूपणपरश्रुतिपर्यालोचनया जीवात्मन उत्पत्तिरूपविकारः प्रतिषिद्धः । तत्र जीवात्मनः ज्ञानधर्मकत्वे धर्मभूतज्ञानद्वारा ब्रह्मकार्यत्वं सम्भवदुक्तिकम् । तस्य ज्ञानधर्मकत्वमेव न सम्भवति इत्याशङ्कापरिहाराय प्रवृत्तमिदमधिकरणम् ॥

# ज्ञोऽतएव ॥२-३-१९॥

[उत्क्रान्तिगत्यागतीनाम् ॥ २० ॥
स्वात्मना चोत्तरयोः ॥ २१ ॥
नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २२ ॥
स्वशब्दोन्मानाभ्यां च ॥ २३ ॥
अविरोधश्चन्दनवत् ॥ २४ ॥
अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २५ ॥
गुणाद्वाऽऽलोकवत् ॥ २६ ॥
व्यतिरेको गन्धवत्तथा च दर्शयति ॥ २७ ॥
पृथगुपदेशात् ॥ २८ ॥
तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥
यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥
पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥
नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ ३२ ॥]

'आत्मा' इति पूर्वसूत्रात् अनुषज्यते । अत एव—श्रुतेरेव, आत्मा, ज्ञः ज्ञाता, न ज्ञानमात्रस्वरूप इति सूत्रार्थः ॥

न ज्ञानमात्रमात्मा नापि च विज्ञातृतैकरूपो वा ।
ज्ञानस्वरूपतायाः श्रुतिभिर्विज्ञातृतायाश्च ॥ ७५ ॥
तस्य तद्दृशोऽभिधानादुक्तज्ञानप्रणाडिकया ।
यत्कार्यत्वमभग्नं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ७६ ॥

**अर्थः** । **तस्य**—जीवात्मन । **उक्तज्ञानप्रणाडिकया**—पूर्वोक्तधर्मभूत ज्ञानद्वारेण । शिष्ट स्पष्टम् ॥

**भावः** । प्रश्नोपनिषदि, [1]"एप हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुष " इति श्रुतौ जीवात्मन चक्षुरादि-तत्तदिन्द्रियजन्यज्ञानवत्ताया 'द्रष्टा' इत्यादिना अभिधानात्, 'विज्ञानात्मा' इति ज्ञानस्वरूपतायाश्च पृथगभिधानात्, आत्मनो ज्ञानस्वरूपत्वमिव ज्ञातृत्वमपि स्वाभाविक इत्यवगम्यते । तथा [2]"न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते अविनाशित्वादात्मन " इत्यादिश्रुतिपु आत्मनो ज्ञानस्य च धर्मधर्मि-भाव षष्ठ्या अभिधाय, आत्मनो नित्यत्वेन तद्धर्मस्य ज्ञानस्याविनाशित्व-प्रतिपादनात्, आत्मधर्मभूतज्ञानस्य नित्यत्व च अवगम्यते । अत आत्मा ज्ञानस्वरूप , नित्यज्ञानवाश्च इति निश्चीयते । एव नित्यस्यापि तदीयज्ञानस्य सुपुप्तिदशायामनुपलम्भात्, जाग्रद्दशायामुपलम्भाच्च, नित्यस्यैव सत तस्य ज्ञानस्य सुपुप्तिदशाया सकोचस्य जाग्रद्दशाया विकासस्य च अङ्गीकार्य त्वात् सङ्कोचविकासरूपविकाराश्रयधर्मभूतज्ञानद्वारा जीवात्मन कार्यत्वमुप-पादनीयमिति ॥

पूर्वपक्षः ।

जीवात्मा ज्ञानस्वरूप एव, न ज्ञानगुणकोऽपि, अन्तर्यामिब्राह्मणे [3]"य आत्मनि तिष्ठन्" इति माध्यन्दिनशाखाया श्रुतस्य आत्मशब्दस्य स्थाने काण्वशाखाया [3]"यो विज्ञाने तिष्ठन्" इति विज्ञानशब्दप्रयोगेण

[1] प्रश्न ४ ९ [2] बृ ६ ३-३० [3] बृ ५ ७ २२

आत्मनो ज्ञानस्वरूपत्वावगमात् [1] "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इति यज्ञादिकर्मकर्तुः आत्मनः विज्ञानशब्देन व्यपदेशादपि ज्ञानस्वरूपत्वावगमाच्च तस्य ज्ञानस्वरूपस्य ज्ञानाश्रयत्वायोगात् इत्येकः पूर्वपक्षः ॥

अपरस्तु, आत्मा न ज्ञानस्वरूपः; नापि स्वाभाविकज्ञानाश्रयः; अपि तु घटादिवत् जडस्वरूपः विषयेन्द्रियसन्निकर्षादिजन्यज्ञानवान्; सर्वगतस्य तस्य ज्ञानरूपताया नित्यज्ञानवत्तायाश्च अभ्युपगमे ज्ञानस्य विषयावगाहित्वनियमात् सर्वत्र सर्वदा विषयोपलब्धिप्रसङ्गात्। भोक्तुर्जीवस्य अदृष्टेन दूरदेशे तद्भोग्यवस्तुरूपकार्योत्पत्त्या तस्याणुत्वे कार्योत्पत्तिदेशे कारणस्य तददृष्टस्य असन्निहितत्वप्रसङ्गेन तस्य सर्वगतताया अवश्याश्रयणीयत्वात्। नित्यज्ञानवत्त्वे सुषुप्त्याद्यावपि विषयोपलम्भप्रसङ्गात्, चक्षुरादिकरणवैयर्थ्यप्रसङ्गाच्च इति ॥

## सिद्धान्तः।

[2] "एष हि द्रष्टा स्प्रष्टा" इत्यादिपूर्वोदाहृतश्रुतिषु ज्ञानस्वरूपत्वस्य नित्यज्ञानाश्रयत्वस्य चाभिधानात्, जीवात्मा ज्ञानस्वरूपः स्वाभाविकज्ञानाश्रयश्च। न चैवं सर्वगतस्य तस्य सर्वदा विषयोपलब्धिप्रसङ्गः इति वाच्यम्; तस्य अणुत्वेन सर्वगतताया अप्रामाणिकत्वात्, अदृष्टस्य ईश्वरीयफलदित्सारूपत्वेन दूरदेशेऽपि तया कार्योत्पत्तिनिर्वाहात् ॥

जीवस्याणुत्वं तु [3] "तेन प्रद्योतेनैष आत्मा निष्क्रामति, ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति। तस्माल्लोकात् पुनरेति अस्मै लोकाय कर्मणे" इत्यादिषु श्रुतिषु उत्क्रान्तिगमनागमनानां श्रवणात् अवसीयते। यद्यपि जीवस्य विभुत्वेऽपि देहवियोगाभिप्रायकतया उत्क्रान्तिश्रुतिः कथञ्चिदुपपादयितुं शक्या, तथाऽपि विभोः गमनागमनासंभवेन तस्याणुत्वमवश्यमभ्युपगन्तव्यम् ॥

---

[1] तै आन ५-१ [2] प्रश्न ४ ९ [3] बृ ६-४-२.

ननु बृहदारण्यके षष्ठाध्याये चतुर्थब्राह्मणे जीवात्मप्रकरणे, [1]"स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु" इत्यत्र विज्ञानमयशब्दनिर्दिष्टस्य जीवात्मनः 'महान्' इति विभुत्वश्रवणेन तस्याणुत्वं उक्तश्रुतिविरुद्धं इति चेन्न । [2]"यस्यानुवित्तः प्रतिबुद्ध आत्मा" इत्यादिना जीवप्रकरणस्य विच्छिन्नत्वेन उक्तश्रुतेः परमात्मविषयत्वेन तदविरोधात् । मुण्डके [3]"एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश" इति श्रुतौ पञ्चवृत्तिप्राणाश्रयस्य जीवात्मनोऽणुशब्देन अणुपरिमाणोक्तेः, श्वेताश्वतरीये [4]*"वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः"* इति तस्य अत्यन्ताणुपरिमाणोक्तेश्च तस्य अणुत्वसिद्धिः ।

हृदयादौ देहैकदेशे स्थितेन चन्दनबिन्दुना सकलदेहव्यापिसुखानुभवजननवत् अणोरपि जीवस्य हृदयदेशे स्थितस्य सकलशरीरव्यापिसुखदुःखानुभवे न विरोधः । वस्तुतस्तु यथा एकदेशे स्थितोऽपि दीपः स्वप्रभया देशान्तरं व्याप्नोति, तद्वत् अणुरपि जीवः स्वगुणभूतेन ज्ञानेन स्वदेहावयवान् सर्वान् व्याप्नोति । अतः सर्वावयवेषु सुखदुःखोपलब्धौ नानुपपत्तिः । एतेन सौभर्यादेरेकस्मिन् देहे स्थितस्यापि बहुषु देहान्तरेषु सुखदुःखोपलब्धौ अनुपपत्तिरपि निरस्ता ; तदीयधर्मभूतज्ञानस्य तदीयसर्वदेहेषु व्याप्तया कार्यकरत्वोपपत्तेः ॥

यथा पृथिव्या गुणत्वेन उपलभ्यमानस्य गन्धस्य पृथिवीतो भेदः, तथा 'अहं जानामि' इति आत्मनो गुणत्वेन अनुभवसिद्धस्य ज्ञानस्य ततो भेदावश्यम्भावात्, [5]"जानात्येवायं पुरुषः" इति श्रुत्या आत्मनो ज्ञानस्य च धर्मधर्मिभावोक्तेः, [6]"न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इति श्रुतौ विज्ञातिशब्दोक्तस्य ज्ञानस्य विज्ञातृशब्दनिर्दिष्टादात्मनः षष्ठ्या व्यतिरेकनिर्देशाच्च प्रभाया दीपधर्मत्ववत्, ज्ञानस्य ज्ञानस्वरूपात्मगुणत्वमुपपन्नम् ॥

[1] बृ. ६-४-२५ [2] बृ. ६-४-१३ [3] मु. ३-१-७. [4] श्वे. ५-९ [5] ... [6] बृ. ६-३-३०

ज्ञातुरपि जीवात्मनः [1]"विज्ञानं यज्ञं तनुते," [2]"यो विज्ञाने तिष्ठन्" इत्यादिश्रुतिषु ज्ञानशब्देन व्यपदेशस्तु, यथा परमात्मनो गुणेषु आनन्दस्य प्रधानत्वेन [3]"आनन्दो ब्रह्मेति व्यजानात्" इत्यादिषु तद्वाचिना आनन्दशब्देन व्यपदेशः, तद्वत् जीवात्मनो गुणेषु ज्ञानगुणस्य प्रधानत्वेन प्रधानभूतज्ञानरूपगुणवाचिना विज्ञानशब्देन व्यपदेशसंभवात् उपपद्यते। प्राधान्यं चोभयत्र स्वरूपनिरूपकत्वं; इतरव्यावर्तकत्वमिति यावत्। परमात्मा हि निरुपाधिकेन आनन्देन जीवात्मनो व्यावर्त्यते। जीवात्मा तु ज्ञानवत्त्वेन अचेतनेभ्यः व्यावर्त्यते। यथा गवादीनां स्वरूपनिरूपकगोत्वादिवाचकैः गवादिशब्दैः विनाऽपि लक्षणां गौरित्यादिव्यपदेशः, तद्वत् आत्मनः स्वरूपनिरूपकज्ञानरूपधर्मवाचिना विज्ञानशब्देन लक्षणां विनैव व्यपदेशोपपत्तिः। आत्मनो ज्ञानस्वरूपत्वेनापि ज्ञानशब्देन व्यपदेशोपपत्तिः॥

सुषुप्त्यादौ विद्यमानस्यापि ज्ञानगुणस्य सङ्कोचावस्थाप्राप्त्या विषयानुपलंभस्य, जाग्रद्दशायां विकासावस्थाप्राप्त्या विषयोपलंभस्य च नानुपपत्तिः। यथा पुरुषस्य पुंस्त्वधातोः बाल्यावस्थायामनभिव्यक्तस्य युवत्वावस्थायामभिव्यक्तिः, तद्वत् सुषुप्त्यवस्थायामनभिव्यक्तस्य ज्ञानस्य जाग्रद्दशायां अभिव्यक्तिरुपपन्नैव। अतो जीवात्मनोऽणुस्वरूपत्वेन ज्ञानस्वरूपतायाः नित्यज्ञानवत्तायाश्च अभ्युपगमे, न कश्चित् दोषः। प्रत्युत तस्य ज्ञानस्वरूपतायाः सर्वगततायाश्च अभ्युपगन्तृसांख्यमत एव दोषः प्रसज्यते। ज्ञानस्वरूपस्य जीवात्मनः सर्वगतत्वे देह इव सर्वत्र अहमित्युपलब्धिप्रसङ्गः। यदि अयमात्मा अनुपलब्धिस्वभावोऽङ्गीक्रियते, तर्हि देहेऽपि अहमित्युपलंभो न स्यात्। उपलब्ध्यनुपलब्ध्युभयस्वभावाङ्गीकारे युगपदुपलब्ध्यनुपलब्धिप्रसङ्ग इति। जीवात्मनः स्वाभाविकज्ञानवत्त्वेऽपि जाग्रद्दशायां विकासावस्थापन्नस्य

[1] तै. आन. १. [2] बृ. ५-७-२२. [3] तै. भृगु. ६-१.

ज्ञानस्य इन्द्रियद्वारा प्रसृतस्य विषयैः समं सम्बन्धादेव तत्तद्विषयोपलब्धेः न चक्षुरादीन्द्रियवैयर्थ्यमपि ॥

इदमत्रावधेयम् — छान्दोग्ये, [1]"येनाश्रुतं श्रुतं" इत्यादिना जगद्ब्रह्मणो मृद्घटयोरिव कार्यकारणभावं प्रतिज्ञाय, तदुपपादनाय प्रवृत्ते [1]"सदेव सोम्येदमग्र आसीत्" इत्यादिजगत्सृष्टयभिधानप्रकरणे [2]"सेयं देवतैक्षत हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेन आत्मना अनुप्रविश्य नामरूपे व्याकरवाणि" इति, "अनेन जीवेन आत्मना अनुप्रविश्य नामरूपं व्याकरोत्" इति च नामरूपव्याकरणसङ्कल्पप्रकारः, तद्व्याकरणप्रकारश्च श्रूयते। अत्र 'अनेन जीवेन' इति जीवात्मनः प्रलयदशायां दयनीयावस्थाविशेष, तस्य परदेवतया साक्षात्करण, 'हन्त' इत्यनेन तस्य तद्विषये दया च सूच्यते। [3]"हन्त हर्षेऽनुकम्पायां" इत्यनुशासने दयायामनुशिष्टेन 'हन्त' इत्यनेन दयाद्योतनात्। स चावस्थाविशेषः [4]"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः" इति प्रलयावस्थानिरूपणप्रकरणे 'प्रसुप्तमिव सर्वतः' इति मनुना वर्णितः। अत्र हि 'अविज्ञेयं' इत्यनेन अचेतनस्यावस्थाविशेषमभिधाय, 'प्रसुप्तमिव सर्वतः' इत्यनेन चेतनस्य सुषुप्तिदशायामिव अत्यन्तज्ञानसङ्कोचेन अचिद्विशिष्टतारूपावस्थाविशेषः प्रदर्शितः। अनेन प्रलयदशायां परदेवता जीवात्मनो ज्ञानस्य अत्यन्तसङ्कुचिततां तेन प्रवृत्त्यक्षमतां चावलोक्य, दयया नामरूपव्याकरणं सङ्कल्प्य, 'नामरूपे व्याकरोत्' इति, तदीयज्ञानविकासार्थमेव देवमनुष्यादिशरीरात्मकरूपव्याकरणमिति च प्रतीयते। अत्र पूर्वप्रतिज्ञाताया चिदचिदात्मकप्रपञ्चस्य ब्रह्मकार्यताया उपपादनाय प्रवृत्ते सृष्टिप्रकरणे अचिद्वस्तुनः तेजःप्रभृतिरूपेण देवमनुष्यादिशरीररूपेण च परदेवतया परिणामकरणाभिधानात् अचिद्वस्तुनः

[1] छा. ६-२-१ [2] छा. ६-२-३. [3] [4] मनु.

स्वरूपान्यथाभावेन ब्रह्मकार्यत्वमिति, जीवात्मनः सङ्कुचितज्ञानस्य ज्ञानविकासापादनाय देवमनुष्यादिशरीरसृष्टिः इति प्रतिपादनेन ज्ञानरूपस्वभावान्यथाभावेन तस्य ब्रह्मकार्यत्वं इति च स्फुटं प्रतीयते इति ॥

अत्र नामरूपव्याकर्त्र्या देवतायाः [1]"सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाऽभिवदन् यदास्ते" इति पुरुषसूक्तोक्तमहापुरुषत्वप्रत्यभिज्ञानात्, तस्य च श्रीनिवासापरनामधेयलक्ष्मीपतिरूपत्वेन अत्र 'यत्कार्यत्वं' इत्युक्तम् ॥

५७ ॥ इति ज्ञाधिकरणम् ॥ ४ ॥

## २२ ॥ कर्त्रधिकरणम् ॥ ५ ॥

पूर्वाधिकरणे जीवात्मनो ज्ञातृत्वं व्यवस्थापितं; तस्य कर्तृत्वदृष्टान्तेन अध्यस्तत्ववादनिरासाय प्रवृत्तमिदमधिकरणम् ॥

# कर्ता शास्त्रार्थवत्त्वात् ॥ २-३-३३ ॥

[उपादानात् विहारोपदेशाच्च ॥ ३४ ॥
व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३५ ॥
उपलब्धिवदनियमः ॥ ३६ ॥
शक्तिविपर्ययात् ॥ ३७ ॥
समाध्यभावाच्च ॥ ३८ ॥
यथा च तक्षोभयथा ॥ ३९ ॥]

'आत्मा' इत्यनुषज्यते। आत्मैव कर्ता इत्यर्थः। तत्र हेतुः शास्त्रार्थवत्त्वात् इति। शास्त्रार्थः–शास्त्रफलं, शास्त्रविहितक्रियाजन्यफलमिति

[1] तै. आर. ३-१२. पुरुष्.

यावत्, तद्वत्त्वात्–तद्वास्त्वात् इत्यर्थ । आवृत्त्या अन्योऽप्यर्थ शास्त्रस्य 'यजेत,' 'उपासीत' इत्यादिविधिरूपशास्त्रस्य, अर्थवत्त्वात्–तथा सत्येव साफल्योपपत्ते इति ॥

यच्चोदितेषु कर्मस्वात्मा कर्ता तदाऽस्य च विधेश्च ।
फलवत्ताया. सिद्धेः तद्ब्रह्म श्रीनिवासनाम भजे ॥ ७७ ॥

**अर्थः** । यच्चोदितेषु—यदाज्ञया प्रवृत्तेषु, कर्मसु—यागदानादिषु, आत्मा चेतन, कर्ता, तत्रहेतु, तदा आत्मन कर्तृत्वपक्ष एव, अस्य आत्मन विधेश्च 'यजेत' इत्यादिशास्त्रस्य च, फलवत्ताया स्वर्गादिक्रियाफलभोक्तृताया प्रवर्तनरूपफलवत्तायाश्च सिद्धे इति ॥

बृहदारण्यके,[1] "एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्या प्रशसन्ति, यजमान देवा दर्वीं पितरोऽन्वयत्ता" इति स्वशासनेन यागदान होमादिश्रौतस्मार्तक्रियाणा प्रवर्तकतया श्रुतस्याक्षरस्य श्रीनिवासापरनामधेय परब्रह्मस्वरूपताया अक्षराधिकरणे निरूपितत्वाभिप्रायेण अत्र यच्चोदितेषु कर्मसु इत्युक्तम् ॥

**भावः** । स्वर्गादिफलकामनावत पुरुषस्य तत्फलप्राप्तये कर्तव्यतया यजेत स्वर्गकाम' इत्यादिशास्त्रेण यागादिक कर्म विधीयते । पुरुषस्य तत्फल-प्राप्तिश्च तत्कर्मकर्तृत्व एव स्यात् 'शास्त्रफल प्रयोक्तरि' इति न्यायात् । प्रकृते तत्परिणामस्य अन्त करणस्य वा कर्मकर्तृत्वे, पुरुषस्य तत्फलभोक्तृत्व नोपपद्यते । न ह्यन्य कर्ता, अन्य फलभोक्ता इत्युपपद्यते । अत स्वर्गादि फलभोक्ता आत्मैव कर्ता इति युक्तम् । एव यागदानादिकर्मविधायक शास्त्र पुरुषस्य तत्कर्मणि प्रवर्तनाय प्रवर्तते । तत्प्रवर्तन च न वायूल्कादि वत् नोदनेन, अपि तु कर्मण फलसाधनत्वबोधनेन । अतो बोधनार्हस्य चेतनस्य कर्तृत्व एव तद्बोधनेन प्रवृत्तिजनकतया शास्त्र सफल स्यात्, न

[1] बृ

त्वचेतनस्य अन्तःकरणादेः कर्तृत्वे, तस्य बोधनानर्हत्वात्। अतः फलभोक्तुः चेतनस्य कर्तृत्व एव तस्य फलभोक्तृतायाः, शास्त्रस्य प्रवृत्तिजननेन सफलतायाश्च उपपत्तेः बोद्धा आत्मैव कर्ता इति॥

## पूर्वपक्षः।

प्रकृतिः तत्परिणामभूतमन्तःकरणं वा क्रियासु कर्तृ, न त्वात्मा; निर्विकारस्यात्मनः कृतिरूपविकारवत्त्वायोगात्, अध्यात्मशास्त्रे तस्य कर्तृत्वनिषेधाच्च। यथा कठवल्ल्यां, [1]"हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतं। उभौ तौ न विजानीतो नायं हन्ति न हन्यते" इति। अस्यार्थः—हन्ता-हननकर्तृत्वाभिमानवान्, आत्मानं हन्तुं मन्यते, हन्तारं मन्यते चेत्, हतः-हननकर्मत्वाभिमानवान्, आत्मानं, हतं हननकर्मभूतं मन्यते चेत्, तावुभौ न विजानीतः। अयमात्मा न हन्ति-हननक्रियाया न कर्ता; न हन्यते हननक्रियाया न कर्म इति। अत्र हननग्रहणं क्रियान्तरस्याप्युपलक्षणं। श्रीगीतासु, [2]"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते" इति स्मरणात्; सर्वाणि कर्माणि प्रकृतेर्गुणैः सत्त्वादिभिः क्रियमाणानि भवन्ति। पुरुषस्तु अहङ्कारविमूढात्मा अहं कर्ता इति मन्यते इति अत्र हि प्रकृतिरेव कर्त्री, पुरुषस्य अहं कर्ता इति प्रतीतिस्तु भ्रान्तिरिति स्पष्टमुक्तम्। अतो लौकिको वैदिकश्च सर्वोप्यात्मनः कर्तृत्वव्यवहारः अन्तःकरणगतस्य कर्तृत्वस्य पुरुषेण स्वस्मिन्नध्यस्तताविषय इति॥

## सिद्धान्तः।

प्रकृतेः अन्तःकरणस्य वा कर्तृत्वे प्रागुक्तरीत्या पुरुषस्य फलभोक्तृतायाः शास्त्रस्य प्रवर्तकतायाश्च असिद्धिप्रसङ्गात्, 'आत्मैव कर्ता' इत्यास्थेयम्। यदुक्तं निर्विकारस्य आत्मनः कृतिरूपविकारवत्त्वं नोपपद्यते लौकिको वैदिकश्च कर्तृत्वव्यवहारः पुरुषस्य कर्तृत्वाध्यासविषय इति, तन्न।

[1] कठ. २-१९. [2] गीता ३-२७.

अध्यासस्यापि विकाररूपत्वेन तस्यापि निर्विकारे आत्मनि असंभवेन, लौकिकस्य वैदिकस्य च सर्वस्याप्यात्मन· कर्तृत्वव्यवहारस्य निर्विषयत्वप्रसङ्गात्। अत प्रागुक्तफलभोक्तृत्वसिद्ध्यादिप्रसङ्गरूपतर्कानुगृहीताग्रिमसूत्रोदाहरिष्यमाणश्रुतिबलात् आत्मन कर्तृत्व पारमार्थिकमेवाभ्युपगन्तव्यम्। कृतिजनक ज्ञानमपि पारमार्थिकमिति, तच्च ज्ञानं आत्मस्वरूपविकारानात्मकं द्रव्यान्तर प्रभाप्रभावन्न्यायेन आत्मनो धर्मभूतमिति च श्रुतिबलादङ्गीकार्यम् ॥

[1]"हन्ता चेन्मन्यते हन्तु" इति श्रुतिस्तु आत्मनो नित्यत्वेन तं प्रति हननक्रियाकर्तृत्वं आत्मनो नास्ति इत्येतदर्थपरा, न तु क्रियाकर्तृत्वनिषेधपरा ; श्रुतिष्वेव आत्मन तत्तत्क्रियाकर्तृत्वव्यपदेशस्य वक्ष्यमाणत्वात्।

[2]"प्रकृते क्रियमाणानि" इत्युदाहृतगीतावचनं तु ससारदशायां आत्मना यद्यत् कर्म क्रियते, तत्सर्वं सत्त्वरजस्तमोरूपप्राकृतगुणसंसर्गकृतं इति सासारिकक्रियाकर्तृत्वस्य औपाधिकत्वप्रदर्शनपर, न तु कर्तृत्वसामान्यनिषेधपरम्। [3]"शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नर·। न्याय्य वा विपरीत वा पञ्चैते तस्य हेतव ॥ अधिष्ठान तथा कर्ता करण च पृथग्विधं। विविधा च पृथक्चेष्टा दैव चैवात्र पञ्चमम् ॥ तत्रैव सति कर्तारमात्मानं केवलं तु य। पश्यत्यकृतबुद्धित्वात् न स पश्यति दुर्मति" इति पञ्चाना देहात्मादीना कर्तृत्व साधारण इत्युपदिश्य, स्वात्ममात्रस्य कर्तृत्वज्ञान भ्रान्ति इति तत्रैवोपदेशात् ॥

बृहदारण्यके, [4]"एवमेवैष एतान् प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते" इति श्रुतौ आत्मन प्राणशब्दोक्ताना इन्द्रियाणा शरीरस्य च प्रेरणे कर्तृत्वव्यपदेशात् ॥

---

[1] कठ. २-१९ [2] गीता ३-२७. [3] गीता. १८-१४-१६ [4] बृ ४-१-१८.

[1]" विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च " इति श्रुतौ आत्मनः वैदिकलौकिकक्रियाकर्तृत्वस्य उपदेशाच्च आत्मैव कर्ता । न चात्र विज्ञानशब्देन अन्तःकरणमुच्यते, न त्वात्मा इति वाच्यं—अन्तःकरणस्य क्रियासु करणत्वेन, तत्परत्वे 'विज्ञानेन' इति तृतीयया निर्देशप्रसङ्गात् ।

किञ्च प्रकृतेः कर्तृत्वाभ्युपगमे केनचित् कर्मणा कस्यचिदेव पुरुषस्य सुखदुःखोपभोगो नान्यस्य इति नियमासिद्धिप्रसङ्गः । तस्याः सर्वपुरुषसाधारणतया, तया क्रियमाणकर्मणां सर्वपुरुषसाधारणत्वात् । तत्कर्मणां पुरुषभोगजनकत्वानभ्युपगमे, कस्यापि पुरुषस्य भोगाभावप्रसङ्गः । तत्तत्पुरुषनियतेन प्रकृतिपरिणामविशेषेण अन्तःकरणेन क्रियमाणकर्मभिः तत्तत्पुरुषभोग इति व्यवस्था न वक्तुं शक्या । अन्तःकरणानामपि सर्वपुरुषसाधारणप्रकृतिपरिणामत्वेन प्रतिपुरुषव्यवस्थितत्वासिद्धेः ॥

किञ्च प्रकृतिपरिणामस्यान्तःकरणस्य कर्तृत्वाभ्युपगमे, अकर्तुः पुरुषस्य कर्मफलभोगानुपपत्त्या, तस्य भोक्तृत्वमपि न स्यात् । ततश्च पुरुषसद्भावे प्रमाणाभावप्रसङ्गः, कर्मफलभोक्तृत्वस्यैव पुरुषसद्भावे प्रमाणतया सांख्यैरभ्युपगमात् ॥

किञ्च प्रकृतेः सर्वक्रियाकर्तृत्वाभ्युपगमे 'प्रकृतेरन्योऽस्मि' इति समाधिकर्तृत्वं तस्या न सम्भवति, स्वस्य स्वान्यत्वानुसन्धानायोगात् । ततश्च समाधेः तत्साध्याया मुक्तेश्च अभावप्रसङ्गः ॥

ननु आत्मनः कर्तृत्वाभ्युपगमपक्षेऽपि कदाचित् कर्मकरणं, कदाचिन्न इत्यत्र नियामकाभावेन सर्वदा कर्मकरणं स्यात्, वागाद्युपकरणानां सर्वदा सत्त्वात् इति चेन्न—कर्मकरणे इच्छाया नियामकत्वेन, सत्यामिच्छायां कर्म करोति, असत्यां न इति नियमोपपत्तेः । यथा तक्षादेः वास्याद्युपकरणसत्त्वेऽपि सत्यामिच्छायां तक्षणादिकर्मकरणं, नान्यदा इति नियमः,

[1] तै. आन. १.

तद्वदिति । प्रत्युत प्रकृते कर्तृत्वाभ्युपगन्तृसाख्यपक्ष एव कदाचित् कर्मकरण, कदाचिन्नेत्यत्र इच्छादिनियामकाभावात् सर्वदा कर्मकरणप्रसङ्गो दुर्वार इति । अस्मिन् पद्ये 'यच्चोदितेषु कर्मसु' इति कर्मविशेषण न लौकिकक्रियाव्यवच्छेदाय, अपि तु यागादिविधीना भगवदाज्ञारूपत्वलाभाय इति मन्तव्यम् ॥

५८ ॥ इति कर्त्रधिकरणम् ॥ ५ ॥

---

२४ ॥ परायत्ताधिकरणम् ॥ ६ ॥

पूर्वाधिकरणे गुहासूत्रे प्रस्तुतयोर्जीवपरमात्मनो एकस्य जीवात्मन कर्तृत्व पारमार्थिक इति व्यवस्थापितम् । तस्य कर्तृत्वस्य परमात्मायत्तत्व व्यवस्थापनेन नियाम्यनियामकभावेन तयोर्भेदस्य निरुपाधिकताया दृढीकरणाय प्रवृत्तमिदमधिकरणम् ॥

## परात्तु तच्छ्रुतेः ॥ २-३-४० ॥

[कृतप्रयत्नापेक्षस्तु निहितप्रतिषिद्धावैयर्थ्यादिभ्य ॥ ४१ ॥]

तुशब्द पूर्वपक्षव्यावृत्त्यथ । तत्—गुहासूत्रे प्रस्तुतयोरात्मनो एकस्य जीवस्य कर्तृत्व, परात्—तदन्यपरमात्मायत्त, तच्छ्रुतेः परमात्मायत्तत्व श्रवणात् इति सूत्राथ ॥

लौकिकवैदिककर्मसु कर्तृत्वं प्रत्यगात्मनो यत्तत् ।
यदधीनमाह निगमः तद्ब्रह्म श्रीनिवासनाम भजे ॥ ७८ ॥

अर्थः । पूर्वाधिकरणे व्यवस्थापित जीवात्मनः यत् कर्तृत्वं, तत् यदधीनं—श्रीनिवासापरनामधेयब्रह्माधीन आह निगमः । शिष्टं स्पष्टम् ॥

भावः । [1] "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः," [2] "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इत्यादिश्रुतिषु परमात्मनः तत्तत्कर्मसु जीवात्मप्रेरकत्वश्रवणात्, जीवात्मनः कर्तृत्वं परमात्मप्रेरणाधीनम्। अयं च परमात्मा सुबालोपनिषदैकार्थ्यात्, श्रीनिवासापरनामधेय एवेति निर्धार्यते इति ॥

## पूर्वपक्षः ।

परमात्मनो जीवकर्तृककर्मसु तत्प्रेरकत्वाभ्युपगमे विधिनिषेधशास्त्रयोः वैयर्थ्यापत्तिः । विधिनिषेधशास्त्राणि हि इष्टानिष्टफलसाधनताबोधमुत्पाद्य, प्रवृत्तिं निवृत्तिं वा कुर्वन्ति । प्रवृत्तिनिवृत्त्योरन्याधीनत्वे तद्बोधस्य अकिञ्चित्करत्वेन, वैयर्थ्यापत्तिः दुर्वारैव । अतो जीवस्य कर्तृत्वं नान्यायत्तमिति ॥

## सिद्धान्तः ।

[1] "य आत्मनि तिष्ठन्" इत्यादिप्रागुदाहृतश्रुतिषु परमात्मनः तत्तत्कर्मसु जीवात्मप्रेरकत्वश्रवणात्, जीवात्मनः कर्तृत्वं परमात्मायत्तमेव ॥

यदुक्तं जीवात्मनः कर्तृत्वस्य परमात्मायत्तत्वे, विधिनिषेधशास्त्रवैयर्थ्यप्रसङ्गः इति, तन्न । जीवः स्वबुद्ध्या सत्कर्मणि प्रवर्तते, परमात्मा स्वानुमतिदानेन तत्कर्म कारयतीति प्रथमप्रवृत्तौ जीवस्य स्वातन्त्र्यस्य, द्वितीयादिप्रवृत्तिष्वेव परमात्मपारतन्त्र्यस्य चाभ्युपगमात्, न विधिनिषेधशास्त्रवैयर्थ्यप्रसङ्गः ॥

अत्रेदं बोद्धव्यम्—ईश्वरस्य उदासीनत्वं, अनुमन्तृत्वं प्रेरकत्वं इत्याकारत्रयमस्ति । तत्र जीवस्य प्रथमप्रवृत्तौ ईश्वरस्य औदासीन्यमेव । द्वितीयादिप्रवृत्तौ तु अनुमन्तृत्वं; तदभावे जीवस्य प्रवृत्त्यनिर्वाहात् । यस्तु परमात्मन आनुकूल्ये प्रातिकूल्ये वा अत्यन्तव्यवसायवान्, तद्विषये प्रेरकत्वमिति ॥ ५९ ॥ इति परायत्ताधिकरणम् ॥ ६ ॥

---

[1] बृ. ५-७-२२. [2] तै. आर. ३-११-१०.

२५ ॥ अंशाधिकरणम् ॥ ७ ॥

एवं जीवात्मनः परमात्मायत्तकर्तृत्वं निरूपितम् । तेन राजभृत्ययोरिव जीवब्रह्मणोः अत्यन्तभेदस्य प्रतीत्या, श्रुतिषु तदभेदव्यवहारस्यामुख्यत्वप्रसङ्गमाशंक्य, तत्परिहाराय प्रवृत्तमिदमधिकरणम् ॥

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ २-३-४२ ॥

[मन्त्रवर्णात् ॥ ४३ ॥
अपि स्मर्यते ॥ ४४ ॥
प्रकाशादिवत्त नैवं परः ॥ ४५ ॥
स्मरन्ति च ॥ ४६ ॥
अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ ४७ ॥
असन्ततेश्चाव्यतिकरः ॥ ४८ ॥
आभास एव च ॥ ४९ ॥
अदृष्टानियमात् ॥ ५० ॥
अभिसन्ध्यादिष्वपि चैवम् ॥ ५१ ॥
प्रदेशभेदादिति चेन्नान्तर्भावात् ॥ ५२ ॥]

अत्रापि 'आत्मा' इति, 'परात्' इति सूत्रात् विभक्तिविपरिणामेन 'परस्य' इति चानुषज्यते । इत्थं च, प्रत्यगात्मा परस्य अंशः-अपृथक्सिद्धविशेषणं इत्यर्थः । अत्र हेतुमाह नानाव्यपदेशात्-भेदव्यपदेशात् इत्यर्थः । अन्यथा च-अभेदव्यपदेशात् इत्यर्थः । एके शाखिनः, परस्य दाशकितवादित्वमपि, दाशाः-कैवर्ताः, कितवाः धूर्ताः, तत्प्रभृतिरूपत्वमपि, अधीयते-आमनन्ति इति सूत्रार्थः ।

भावः। श्रुतिषु [1] "ज्ञाज्ञौ द्वावजावीशनीशौ" इत्यादिषु जीवात्मपरमात्मनोः ईशत्वानीशत्वादिना भेदो व्यपदिश्यते; [2] "तत्त्वमसि" इत्यादिषु अभेदोऽपि। अतः तयोरत्यन्तभेदाङ्गीकारे अभेदश्रुतीनां, स्वरूपैक्याङ्गीकारे भेदश्रुतीनाममुख्यत्वप्रसङ्गः। अभेदश्रुतीनां अभेदोपचारेण स्तुतिपरतया निर्वाहोऽप्यनुपपन्नः; निकृष्टैः दाशादिभिः समं अभेदोक्तेः स्तुतिरूपत्वासंभवात्। अतः उभयविधव्यवहारमुख्यत्वोपपत्तये जीवो ब्रह्मांश इत्यङ्गीकार्यम्। अंशत्वं च अपृथक्सिद्धविशेषणत्वपर्यवसितम् विशिष्टवस्त्वेकदेशत्वम्। यथा गोत्वविशिष्टस्य गोः अपृथक्सिद्धविशेषणत्वेन गोत्वं अंशः, तद्वत् चिदचिद्विशिष्टस्य ब्रह्मणः अपृथक्सिद्धविशेषणत्वेन जीवोंऽशभूतः। ततश्च अपृथक्सिद्धविशेषणभूतगोत्वादिवाचिनां शब्दानां गवादिव्यक्तिपर्यन्तवाचित्ववत्, परमात्मापृथक्सिद्धविशेषणभूतजीवात्मवाचिनां त्वमादिशब्दानां विशेष्यभूतपरमात्मपर्यन्तवाचकताया आकृत्यधिकरणन्यायसिद्धतया [2] "तत्त्वमसि" इत्याद्यभेदश्रुतीनां मुख्यत्वनिर्वाहः, विशेषणविशेष्यभूतयोः जीवपरमात्मनोः स्वरूपभेदात् भेदश्रुतीनां मुख्यत्वनिर्वाहश्च उपपद्यत इति ॥

गोत्वादिरिव गवादेरादित्यादेः प्रभादिरिव।
यस्यांशोऽसौ जीवस्तद्ब्रह्म श्रीनिवासनाम भजे ॥ ७९ ॥

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य कलाप्रपूर्णस्य
श्रीदेशिकाचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालायां
द्वितीयाध्यायस्य तृतीयः पादः।

---

[1] श्वे. १-९. [2] छा. ६-१०-३.

**अर्थः ।** यथा गोत्वादिविशिष्टस्य वस्तुनोऽपृथक्सिद्धविशेषणतया **गोत्वादिरंशः**, यथा वा प्रभाविशिष्टस्य सूर्यादेः प्रभा अपृथक्सिद्धविशेषणत्वेन तदंशः, तथा [1]"पादोऽस्य विश्वा भूतानि" इत्यादिभिः चेतनाचेतनविशिष्टस्य **यस्य श्रीनिवासापरनामधेयस्य** ब्रह्मणोऽपृथक्सिद्धविशेषणत्वेन **जीवोंऽशभूत** इत्युच्यते, तद्ब्रह्मेति पूर्ववत् ॥

अत्र द्वितीयदृष्टान्तोपादानं द्रव्यस्य द्रव्यान्तरं प्रति अपृथक्सिद्धविशेषणत्वे दृष्टान्तप्रदर्शनाय । अत्र [1]"पादोऽस्य विश्वा भूतानि" इति पुरुषसूक्तमन्त्रे श्रुतस्य पुरुषस्य श्रीनिवासापरनामधेयलक्ष्मीपतिमहापुरुषरूपत्वात् तदभिप्रायेणात्र यस्यांशोऽसौ जीव इत्युक्तम् ॥

पूर्वपक्षः ।

जीवः परमात्मतोऽत्यन्तभिन्नः, [2]"ज्ञाज्ञौ द्वावजावीशनीशौ" इत्यादिश्रुतिषु ईशत्वानीशत्वाभ्यां राजभृत्ययोरिव तयोः स्वरूपभेदोक्तेः । 'तत्त्वमसि' इत्याद्यभेदश्रुतयस्तु औपचारिक्यः । अथवा अज्ञत्वावस्थापन्नं ब्रह्मैव जीवः, [3]"तत्त्वमसि" इत्यादिश्रुतिषु अभेदोक्तेः । भेदश्रुतयस्तु लोकसिद्धभेदानुवादरूपाः । उपाध्यवच्छिन्नं ब्रह्मैव वा जीवः, उदाहृतश्रुतेरेव । भेदश्रुतय औपाधिकभेदपराः । न तु ब्रह्मणोंऽशो जीवः, अंशत्वस्य दुरुपपादत्वात् । एकवस्त्वेकदेशो हि अंश । स च वस्तुनः छेदनभेदनादिना संभवति । ब्रह्मणः छेदनभेदनानर्हत्वात् तदंशत्वं दुरुपपादमिति ॥

सिद्धान्तः ।

तत्त्वमस्यादिश्रुतीनां मुख्यत्वानिर्वाहात्, संभवति मुख्यत्वे, तत्परित्यागस्यान्याय्यत्वात्, प्रथमपक्षस्तावन्न युक्तः । नापि द्वितीय.–नित्यनिर्दोषत्वेन सर्वदा सर्वज्ञत्वेन च श्रुतस्य ब्रह्मणः अज्ञत्वावस्थाया एवासंभवात्। [4]"यस्सर्वज्ञः सर्ववित्" इत्यादिश्रुतिषु कालविशेषानुक्त्या, सर्वज्ञत्वस्य दि

[1] तै. आर. ३-१२-१० पुरुष. [2] श्वे. १-९. [3] छा. ६-१०-३. [4] मु. १-१-९.

सार्वकालिकत्वं सिद्धम् । नापि तृतीयः—ब्रह्मण एव सांसारिकसुखदुःखाद्यनन्तापुरुषार्थाश्रयत्वप्रसङ्गात् । अतो ब्रह्मणोऽंशो जीव इत्येव युक्तम् ।

अंशत्वं च विशिष्टवस्त्वेकदेशत्वम् । विशिष्टे वस्तुनि, 'विशेषणांशोऽयं,' 'विशेष्यांशोऽयं' इति प्रामाणिकव्यवहारात् । प्रकृते चिदचिद्विशिष्टे ब्रह्मणि जीवात्मनो विशेषणांशत्वात् तदंशत्वमुपपन्नम् । अंशत्वं च प्रकृते अपृथक्सिद्धविशेषणत्वम् । तच्च [1]"य आत्मनि तिष्ठन् यस्यात्मा शरीरं" इत्यादिश्रुतिसिद्धम् । शरीरत्वं हि चेतनं प्रति अपृथक्सिद्धविशेषणभूतद्रव्यत्वम् । अतो जीवात्मनः परमात्मशरीरत्वोक्त्या तदपृथक्सिद्धविशेषणत्वं सिद्धम् । इत्थं च अपृथक्सिद्धविशेषणवाचिनां शब्दानां विशेष्यपर्यन्तवाचितायाः आकृत्यधिकरणन्यायसिद्धत्वात् गवाद्यपृथक्सिद्धविशेषणगोत्वादिवाचकगवादिशब्दानां गवादिव्यक्तिपर्यन्तवाचकतायाः अनुभवसिद्धत्वाच्च ब्रह्मापृथक्सिद्धविशेषणभूतजीवात्मवाचिनां त्वमादिशब्दानां विशेष्यभूतपरमात्मवाचकतायाः लक्षणां विनैव निर्वाहात्, भेदश्रुतीनां स्वरूपभेदविषयकत्वेनोपपत्तेश्च सिद्धान्ते सर्वश्रुतीनां मुख्यत्वोपपत्तिः । [2]"पादोऽस्य विश्वा भूतानि" इति पुरुषसूक्तमन्त्रे भूतशब्दोक्तस्य चेतनस्य परमात्मानं प्रति पादत्वोक्त्या पादशब्दस्यांशवाचित्वात्, [3]"ममैवांशो जीवलोके जीवभूतः सनातनः" इति श्रीगीतावचनाच्च अंशत्वं सिद्धम् । 'एकवस्त्वेकदेशस्यैव अंशपदार्थत्वात् जीवस्य ब्रह्मांशत्वपक्षेऽपि जीवगता दोषा ब्रह्मण्येव स्युः' इति तु न शङ्कनीयम् । यथा प्रभादिविशिष्टस्य आदित्यादेः प्रभादिः अपृथक्सिद्धविशेषणतया अंशः, यथा वा देहविशिष्टस्य जीवात्मनो देहोंऽशभूतः, एवं चिदचिद्विशिष्टस्य ब्रह्मणो विशेषणतया अंशत्वस्यैव जीवात्मनि विवक्षितत्वात्, विशेषणभूतदेहगतानां दोषाणां जीवात्मनीव, विशेषणभूतजीवगतानां दोषाणां विशेष्ये ब्रह्मणि अप्रसक्तेः ॥

[1] बृ. ५-७-२२. [2] तै. आर. ३-११-१०. [3] गीता १५-७.

शरीरात्मभावेन जगद्ब्रह्मणो अंशांशित्व, [1]"यत्किञ्चित् सृज्यते येन सत्त्वजातेन वै द्विज। यस्य सृज्यस्य सम्भूतो तत्सर्वं वै हरेस्तनु" इति श्रीविष्णुपुराणवचनादपि सिद्धम् ॥

एव सर्वेषा जीवात्मना ब्रह्माशताया तुल्यत्वेऽपि ब्राह्मणक्षत्रियवैश्यादिषु केषाचित् शास्त्रेषु वेदाध्ययनाभ्यनुज्ञा, केषाचिन्निषेधश्च तत्तज्जातीयशुच्यशुचिदेहसबन्धनिबन्धनतया उपपद्यते। यथा अग्न्यादे श्रोत्रियागारादिसबन्धे उपादेयता, श्मशानादिसबन्धे परिहार्यता तद्वत् ॥

किञ्च 'अज्ञत्वावस्थापन्न ब्रह्म जीव, उपाध्युपहित ब्रह्म जीव' इति पक्षद्वयेऽपि सुखदु खप्रतिसन्धानतदप्रतिसन्धानव्यवस्थाया असिद्धिप्रसङ्गात् ब्रह्मापृथक्सिद्धविशेषणतया तदशत्वपक्ष एव युक्त। एकस्मिन् शरीरे बाल्ये अनुभूतस्य सुखादे यौवने प्रतिसन्धान तावत् अनुभवसिद्धम्। तत्र च आत्मैक्यमेव नियामकमाश्रेयम्। ततश्च पक्षद्वयेऽपि आत्मन एकत्वात् नानाशरीरावच्छेदेन उत्पन्नाना सुखदु खादीना सर्वस्मिन् शरीरे प्रतिसन्धान स्यात्। तत्प्रतिसन्धानाभावात् प्रतिशरीर जीवात्मना स्वरूपभेद तेषामणुत्व च अवश्याश्रयणीयम्। तथा सति, कस्यचित् जीवात्मन पूर्वं तदनुभूतसुखदु खप्रतिसन्धान, कस्यचिन्नेति व्यवस्थोपपत्ते ॥

ननु अज्ञत्वावस्थापन्न ब्रह्म जीव इति पक्षे अविद्यातिरोहितस्य ब्रह्मण अविद्यापरिकल्पिते अपरमार्थे परस्परभिन्नैरन्त करणरूपोपाधिभि सबन्धाभ्युपगमात् उपाधिभेदात् प्रतिसन्धानव्यवस्था उपपद्यत इति चेत्, मैवम्–प्रकाशस्वरूपस्य ब्रह्मण स्वरूपतिरोधानतत्पूर्वकोपाधिसबन्धसाधकहेतूना आभासत्वेन अभिमतासाधकत्वात्, अननुभवितॄणा उपाधीना भेदेऽपि अनुभवितुरात्मन ऐक्यात् प्रतिसन्धानापत्ते दुर्वारत्वाच्च। पारमार्थ

[1] वि पु १ २२ ३८

कोपाध्युपहितं ब्रह्म जीव इति पक्षेऽप्ययं दोषः समानः । तत्पक्षे पारमार्थिकोपाधिभेदहेतुभूतादृष्टनियमात् प्रतिसन्धानव्यवस्था उपपद्यते इति तु न युक्तम्; तत्तदुपाधिहेतुभूतादृष्टानामाश्रयस्य आत्मनः एकत्वेन, अदृष्टानामपि नियमासिद्धेः । एतेन 'तत्तदुपाधिहेतुभूतादृष्टजनकसङ्कल्पनियमात् व्यवस्था' इत्यपि निरस्तम्; सङ्कल्पाद्याश्रयस्य आत्मन एकत्वेन अदृष्टानामपि नियमासिद्धेः ॥

ननु आत्मन एकत्वेऽपि तत्तदुपाध्यवच्छिन्नानां आत्मप्रदेशानां भेदात् सङ्कल्पादृष्टादिव्यवस्थया प्रतिसन्धानव्यवस्था उपपद्यत इति चेन्न — अन्तःकरणरूपाणामुपाधीनां सञ्चरणस्वभावत्वेन तत्र तत्र गमनदशायां सर्वैः ब्रह्मप्रदेशैस्संबन्धेन अन्तःकरणरूपावच्छेदकभेदेन जीवभेदस्यैवासिद्धेः, उपाधिभेदेऽप्युपहितस्य आत्मन एकत्वेन जीवगतानामपुरुषार्थानां ब्रह्मणि प्रसङ्गस्य दुर्वारत्वाच्च । अतः चिदचिद्विशिष्टे ब्रह्मणि विशेषणतया अंशो जीव इत्येव युक्तं इति सिद्धम् ॥

तदेवं तृतीयपादे वियदादेरचेतनस्य ब्रह्मणः सकाशात् साक्षादुत्पत्तिमत्तया ब्रह्मकार्यत्वं, चेतनस्य तु तदीयधर्मभूतज्ञानस्य सङ्कोचविकासरूपविकारवत्तया तद्द्वारा ब्रह्मकार्यत्वं चोपपादितम् । चेतनस्य ज्ञातृत्वं, कर्तृत्वं, भोक्तृत्वं च पारमार्थिकमिति व्यवस्थापितम् । अणुत्वमहत्त्वरूपस्वाभाविकपरिमाणभेदेन, नियन्तृनियाम्यभावेन, अपृथक्सिद्धविशेषणविशेष्यभावेन च गुहासूत्रोक्तं जीवात्मपरमात्मनोर्भेदस्य निरुपाधिकत्वं दृढीकृतं इति ॥

६० ॥ इति अंशाधिकरणम् ॥ ७ ॥

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य कलाप्रपूर्णस्य
श्रीदेशिकाचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालाप्रकाशे
द्वितीयाध्यायस्य तृतीयः पादः ॥

## द्वितीयाध्यायस्य चतुर्थः पादः ॥

### २६ ॥ प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

तृतीयपादे आकाशाद्यचेतनवर्गस्य चेतनवर्गस्य च ब्रह्मकार्यत्वप्रकारो निरूपितः । इदानीं इन्द्रियादीनां जीवोपकरणानां कार्यत्वप्रकारो निरूप्यते ॥

## तथा प्राणाः ॥ २-४-१ ॥

इदं पूर्वपक्षसूत्रम् । यथा जीवो नोत्पद्यते, तथा इन्द्रियाण्यपि नोत्पद्यन्ते इति सूत्रार्थः । [1]"असद्वा इदमग्र आसीत् । तदाहुः किं तदासीत् इति । ऋषयो वाव ते अग्रे आसन् । तदाहुः—के ते ऋषयः इति । प्राणा वाव ऋषयः" इति शतपथब्राह्मणे प्रलयकाले प्राणशब्दवाच्यानां इन्द्रियाणां सद्भावश्रवणेन तेषामुत्पत्त्यभावावगमात् इन्द्रियाणि नोत्पद्यन्ते इति भावः ॥

आवृत्त्या इदमेव सिद्धान्तसूत्रम्—

तथा प्राणाः ॥ २-४-१ ॥

[गौण्यसंभवात् तत्प्राक्श्रुतेश्च ॥ २ ॥

तत्पूर्वकत्वाद्वाचः ॥ ३ ॥]

तथा प्राणाः—इन्द्रियाणि वियदादिवत् उत्पद्यन्ते इति सूत्रार्थः ॥

भावः । [2]"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" इत्यादिश्रुतिषु वियदादीनामिव इन्द्रियाणामप्युत्पत्तिश्रवणेन तेषामुत्पत्तिः अस्त्येव । उदाहृतशतपथब्राह्मणे,

[1] शतपथ. ६-१-१. [2] मु २-१-३.

[1]"प्राणा वाव ऋषयः" इत्यत्र प्राणशब्दवाच्यः परमात्मा, न इन्द्रियाणि; ऋषिशब्दसामानाधिकरण्येन प्राणशब्दवाच्यस्य सर्वज्ञत्वावगमात्। ऋषिशब्दो हि सर्वज्ञत्ववाची। किञ्च इन्द्रियाणि स्वकार्यकल्प्यानि। सृष्टेः प्राक् वियदादीनां अभावेन व्यवहर्तव्याभावात्, वागादिकार्यं व्यवहारादि, श्रोत्रादिकार्यं शब्दग्रहणादि च तदानीं न संभवति। अतः सृष्टेः प्राक् इन्द्रियकार्याभावात्, इन्द्रियसद्भावकल्पने प्रमाणाभावेन इन्द्रियाणामभावः सिद्धः॥

इत्थं च परमात्मनो बहुत्वासंभवात्, तस्यैकस्यैव प्रलयदशायामवस्थानश्रवणात्, प्रलयदशायामिन्द्रियसद्भावकल्पने प्रमाणाभावाच्च, बहुवचनश्रुतिः [2]"अदितिः पाशान्" इति बहुवचनश्रुतिवत् नेया इति॥

६१॥ इति प्राणोत्पत्त्यधिकरणम्॥ १॥

---

२७॥ सप्तगत्यधिकरणम्॥ २॥

## सप्त गतेर्विशेषितत्वाच्च॥ २-४-४॥

इदं पूर्वपक्षसूत्रम्। सप्तानामेव इन्द्रियाणां जीवेन सह गमनश्रवणात्, योगदशायां सप्तानामेव विशिष्य उक्तत्वाच्च, इन्द्रियाणि सप्त एव इति सूत्रार्थः॥

भावः। श्रोत्रादिज्ञानेन्द्रियाणि पञ्च, मनः, बुद्धिश्च इति इन्द्रियाणि सप्तैव। तैत्तिरीयोपनिषदि अभ्यनुवाके, [1]"सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त" इति श्रुतौ जीवस्य इहामुत्र च गमनदशायां सप्तानामेवेन्द्रियाणां तेन सह गमनश्रवणात्; कठवल्ल्यां योगस्वरूपनिरूपणपरे [2]"यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।

---

[1] शतपथब्रा. ६-१-१. [2] [3] मु. २-१-८. [4] कठ. २-६-१०.

बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम्" इति मन्त्रे मनःसहपाठेन इन्द्रियत्वेनावगतानां पञ्चानां ज्ञानसाधनवाचिना ज्ञानानि इति विशेषणेन ज्ञानेन्द्रियत्वावगमाच्च। [1]"सप्त इमे लोकाः" इति मन्त्रे 'सप्त सप्त' इति वीप्सा एकैकस्य पुरुषस्य इन्द्रियाणि सप्त इत्येतत्परा ॥

हस्तादयस्तु स्थितेऽतो नैवम् ॥ २-४-५ ॥

इदं सिद्धान्तसूत्रम्। तु शब्दः पक्षव्यावृत्त्यर्थः। जीवस्य शरीरे स्थितिदशायां, हस्तादयः-पाण्यादीन्द्रियाणि, तस्योपकरणानि भवन्ति। अतः सप्तैवेन्द्रियाणीति न मन्तव्यं इति सूत्रार्थः ॥

भावः। यथा चक्षुरादीन्द्रियाणि दर्शनादिक्रियाकरणत्वेन जीवस्य उपकारकाणि, तथा हस्तादीनि कर्मेन्द्रियाण्यप्यादानादिक्रियाकरणत्वेन जीवस्य शरीरे स्थितिदशाया उपकारकाणि। अत न प्रागुक्तेन्द्रिय-संख्यानियमो युक्तः। अतः पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, मन एकं इत्येकादशेन्द्रियाणि इति ॥

६२ ॥ इति सप्तगत्यधिकरणम् ॥ २ ॥

---

२८ ॥ प्राणाणुत्वाधिकरणम् ॥ ३ ॥

## अणवश्च ॥ २-४-६ ॥

पूर्वोक्तान्येकादशेन्द्रियाणि अणुपरिमाणवन्ति। अत्र इन्द्रियाणा उच्यमानमणुत्वं न जीवस्येव अत्यन्ताणुत्वरूपम्, अपि तु परिच्छिन्नत्व-मात्रम्। [2]"प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति इन्द्रियाणां उत्क्रान्तिश्रवणात्, विभुत्वे उत्क्रान्त्ययोगात्। इन्द्रियाणा [3]"त एते सर्व एव समाः सर्वेऽनन्ताः" इत्यानन्त्यश्रुतिस्तु कार्यमहत्त्वाभिप्रायेति भावः ॥

---

[1] मु २-१-८. [2] बृ. ६-४-२. [3] बृ ३-५-१३.

श्रेष्ठश्च ॥ २-४-७ ॥

मुख्यप्राणसंवादे श्रेष्ठत्वगुणकतयोक्तः मुख्यप्राणोऽप्युत्पद्यते, [1] "एतस्माज्जायते प्राण." इति तस्योत्पत्तिश्रवणात् । [2] "आनीदवातं स्वधया तदेकं" इति श्रुतिस्तु न जीवसंबन्धिनो मुख्यप्राणस्य प्रलयदशायां प्राणनरूपकार्यसद्भावप्रतिपादनपरा; 'अवातं' इत्यनेन तत्रैव वायवभावप्रतिपादनात् । अपि तु परमात्मन एकस्यैव तदानीं सद्भावप्रतिपादनपरा इति भावः ॥

६३ ॥ इति प्राणाणुत्वाधिकरणम् ॥ ३ ॥

२९ ॥ वायुक्रियाधिकरणम् ॥ ४ ॥

## न वायुक्रिये पृथगुपदेशात् ॥ २-४-८ ॥

[चक्षुरादिवत्तु तत्सहशिष्टयादिभ्यः ॥ ९ ॥
अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ १० ॥
पञ्चवृत्तिर्मनोवत् व्यपदिश्यते ॥ ११ ॥]

मुख्यप्राणः, वायोः उच्छ्वासनिश्श्वासादिरूपक्रियायाश्च भिन्नः, [1] "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायु" इति वायोरुत्पत्तिवत् मुख्यप्राणस्यापि पृथगुत्पत्तिश्रवणात् । नाप्युच्छ्वासनिश्श्वासक्रिया प्राणः, क्रियायाः पृथङ्निर्देशाभावात्; अपि त्ववस्थान्तरापन्नो वायुरेव प्राण इत्युच्यते । प्राणस्य वायुविकारत्वे अग्निवत् भूतान्तरत्वं स्यात् इति [illegible] न शंक्यम् । प्राणसंवादप्रकरणे प्राणस्य इन्द्रियैः सह पाठात्, चक्षुरादीन्द्रियवत् जीवोपकरणविशेषत्वावगमात् । प्राणस्य शरीरधारणादिना जीवोपकारकत्वात् तदुपकरणत्वाक्षतेः । यथा इच्छादिज्ञानावस्थाविशेषात्मककार्यभेदेन तद्धेतोर्मनसः [3] "कामस्सङ्कल्पो विचिकित्सा श्रद्धा"

[1] मु. २-१-३ [2] [3] बृ. ३-५-३.

इत्यादिसञ्ज्ञाभेदेऽपि मनस्तत्त्वमेकमेव, एवं कार्यभेदेन प्राणापानादिसञ्ज्ञाभेदेऽपि अपानादयो न प्राणात् तत्त्वान्तराणि, अपि तु प्राण एक एव पञ्चधा अवस्थित ॥

६४ ॥ इति वायुक्रियाधिकरणम् ॥ ४ ॥

३० ॥ श्रेष्ठाणुत्वाधिकरणम् ॥ ५ ॥

## अणुश्च ॥ २-४-१२ ॥

मुख्यप्राणोऽपि अणुरेव; [1]"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इत्युत्क्रान्तिश्रवणात् इति सूत्रार्थ । [2]"सर्वं हीदं प्राणेनाऽऽवृत" इत्यादिश्रुतिस्तु सर्वस्य प्राणाधीनस्थितिकत्वप्रदर्शनपरा, न तु मुख्यप्राणस्य महापरिमाणप्रतिपादनपरा इति भाव ॥

पञ्चानामधिकरणानामर्थविवरणाय प्रवृत्तमिदं पद्यद्वयम्—

जीवोपकारकतया तत्करणानामणूनां च ।
एकादशेन्द्रियाणां प्राणस्य च वायुतोऽन्यस्य ॥ ८० ॥

करणस्याणोर्यस्मादुत्पत्तेः श्रूयमाणतया ।
यत्कार्यत्वमभग्नं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ८१ ॥

अर्थः । दर्शनादानादिक्रियाकरणभूताना अणुपरिमाणानामेकादशेन्द्रियाणां वायुतो भिन्नस्य शरीरेन्द्रियादिधारकत्वेनोपकारकस्याणुपरिमाणस्य मुख्यप्राणस्य च [2]"एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च" इति श्रीनिवासादुत्पत्तेः श्रूयमाणतया श्रीनिवासापरनामधेयब्रह्मकार्यत्वमभग्नमिति । अत्र यस्मादुत्पत्तेः श्रूयमाणतया इत्यनेन [3]"तथा प्राणा," [4]"श्रेष्ठश्च" इति सूत्रयो , अणूनां इत्यनेन [5]"अणवश्च" इति सूत्रस्य,

---

[1] बृ ६ ४-२ [2] म २ १ ३ [3] शाम् २ ४ १ [4] २-४-७ [5] २ ४-६

एकादश इत्यनेन [1]"हस्तादयस्तु स्थितेऽतो नैवं" इति सूत्रस्य, वायुतोऽन्यस्य इत्यनेन [2]"न वायुक्रिये" इति सूत्रस्य, करणस्य इत्यनेन [3]"अकरणत्वाच्च न दोष" इति सूत्रस्य, अणोः इत्यनेन [4]"अणुश्च" इति सूत्रस्य च अर्थः सङ्गृहीत इति बोद्धव्यम्। "एतस्माज्जायते प्राण" इत्यादिश्रुतौ प्राणाद्युत्पत्तिहेतुत्वेन श्रुतस्य 'एतस्मात्' इति एतच्छब्दपरामृष्टस्य अक्षरपुरुषस्य श्रीनिवासापरनामधेयनारायणरूपताया अदृश्यत्वादिगुणकाधिकरणादिषु निरूपितत्वात्, अत्र यत्कार्यत्वमभग्नं इत्युक्तम् ॥

८९ ॥ इति श्रेष्ठाणुत्वाधिकरणम् ॥ ९ ॥

३१ ॥ ज्योतिराद्यधिष्ठानाधिकरणम् ॥ ६ ॥

एवमिन्द्रियाणां प्राणानां च उत्पत्त्यादिकं निरूपितम्। इदानीमग्न्यादिदेवतानामिन्द्रियाधिष्ठाने परमात्मनिरपेक्षत्वशङ्कापरिहारार्थं प्रवृत्तमिदमधिकरणम् ॥

## ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात् ॥ २४-१३ ॥

[तस्य च नित्यत्वात् ॥ १४ ॥]

प्राणवता जीवेन सह, ज्योतिरादीनाम्-अग्न्यादिदेवतानां, अधिष्ठानं-इन्द्रियादिप्रवर्तनं, तदामननात्-परमात्मसङ्कल्पात् भवति। "योऽग्नौ तिष्ठन् योऽग्निमन्तरो यमयति, य आत्मनि तिष्ठन् य आत्मानमन्तरो यमयति" इत्यादिश्रुतेः इति सूत्रार्थः ॥

अग्न्यादिदेवतानां जीवानां चेन्द्रियाद्यधिष्ठानं।
यत्सङ्कल्पायत्तं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ८२ ॥ स्पष्टोऽर्थः।

[1] ब्र. सू. २-४-५, [2] २-४-८; [3] २-४-१०, [4] २-४-१२.

भावः । [1]"य आत्मानमन्तरो यमयति" इत्यादिषु जीवात्मनः सत्तास्थितिप्रवृत्तीनां परमात्मायत्तत्ववत् [1]"योऽग्निमन्तरो यमयति" इत्यादिषु अग्न्यादेः सत्तास्थितिप्रवृत्तीनामपि परमात्मायत्तत्वश्रवणात्, यदा तेषां सत्ता परमात्मसङ्कल्पायत्ता, तदा तत्प्रवृत्तीनां परमात्मसङ्कल्पायत्ततायाः कैमुत्यन्यायसिद्धत्वात्, अग्न्यादिदेवताकर्तृकमिन्द्रियादिप्रवर्तनं परमात्मसङ्कल्पायत्तमिति । जीवग्रहणं दृष्टान्तार्थमिति बोद्धव्यम् । [1]"योऽग्नौ तिष्ठन्" इत्यादिश्रुतौ अग्न्यादीनां नियन्तृत्वेन श्रुतस्य सुबालोपनिषदैकार्थ्येन श्रीनिवासापरनामधेयनारायणत्वावगमात् अत्र यत्सङ्कल्पायत्तं इत्युक्तम् ॥

६६ ॥ इति ज्योतिराद्यधिष्ठानाधिकरणम् ॥ ६ ॥

---

३२ ॥ इन्द्रियाधिकरणम् ॥ ७ ॥

चक्षुरादीनां मुख्यप्राणस्य च जीवोपकरणत्वेन तेषां सर्वेषां इन्द्रियत्वशङ्कापरिहारार्थं प्रवृत्तमिदमधिकरणम् ॥

## त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥

॥ २-४-१५ ॥

[भेदश्रुतेर्वैलक्षण्याच्च ॥ १६ ॥]

श्रेष्ठादन्यत्र–मुख्यप्राणव्यतिरिक्ताः, ते–प्राणाः, इन्द्रियाणि; तेषामेव इन्द्रियत्वव्यपदेशात् इति सूत्रार्थः ॥

मनसा महेन्द्रियत्वं वागादीनां च चक्षुरादीनां ।
गीतासु येन गीतं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ८३ ॥

---

[1] बृ. ५-७-५.

भावः । श्रीगीतासु, [1]"इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः" इत्यादिषु ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां मनसश्चैकादशानामेव इन्द्रियत्वव्यवहारात् मुख्यप्राणव्यतिरिक्तानामेवेन्द्रियत्वम् । [2]"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति श्रुतौ प्राणस्य इन्द्रियाणां च पृथङ्निर्देशादपि प्रागुक्तानामेकादशानामेव इन्द्रियत्वमवगम्यते । उक्तश्रुतौ मनसः पृथग्ग्रहणेऽपि [3]"मनष्षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति" इति श्रीगीतावचने मनस इन्द्रियान्तर्भावस्योक्तत्वात् इन्द्रियत्वमाश्रीयते । एवं मुख्यप्राणस्य शरीरेन्द्रियधारणादि, चक्षुरादिज्ञानेन्द्रियाणां दर्शनादि, वागादिकर्मेन्द्रियाणां व्यवहारादि, कार्यमिति इन्द्रियाणां प्राणस्य च कार्यवैलक्षण्यादपि प्राणव्यतिरिक्तानामेवेन्द्रियत्वमिति निश्चीयते । [1]"इन्द्रियाणि दशैकं च," [3]"मनष्षष्ठानीन्द्रियाणि" इति वक्तुः श्रीनिवासापरनामधेयभगवद्रूपत्वात्, अत्र येन गीतं इत्युक्तम् ॥

१७ ॥ इति इन्द्रियाधिकरणम् ॥ ७ ॥

---

## २३ ॥ संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ८ ॥

तृतीयपादमारभ्य एतावता श्रीनिवासापरनामधेयब्रह्मकर्तृकसमष्टिसृष्टिनिरूपणेन वियदादीनां ब्रह्मकार्यत्वं निर्धारितम् । इदानीं देवमनुष्यादिव्यष्टिसृष्टेश्चतुर्मुखकर्तृकत्वशङ्कापरिहारेण देवमनुष्यादीनां ब्रह्मकार्यत्वनिर्धारणाय प्रवृत्तमिदमधिकरणम् । अण्डसृष्टिपूर्वभाविनी सृष्टिः समष्टिसृष्टिः, तदनन्तरभाविनी व्यष्टिसृष्टिरिति बोद्धव्यम् ॥

# संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥

२-४-१७ ॥

---

[1] गी. १३-५ [2] मु. २-१-३. [3] गी. १५-७.

[मांसादि भौमं यथाशब्दमितरयोश्च ॥ १८ ॥
वैशेष्यात्तु तद्वादस्तद्वादः ॥ १९ ॥]

तुशब्दः पक्षव्यावृत्त्यर्थः । संज्ञामूर्तिक्लृप्तिः-देवमनुष्यादिनामरूपव्याकरणं, त्रिवृत्कुर्वतः त्रिवृत्करणकर्तुरेव । यस्त्रिवृत्करणकर्ता स एव नामरूपव्याकरणकर्तेत्यर्थः । तत्र हेतुमाह उपदेशात्-त्रिवृत्करणकर्तृनामरूपव्याकरणकर्त्रोरैक्योपदेशात् इति सूत्रार्थः ॥

तेजोजलपृथिवीनामण्डादिव्यष्टिसृष्ट्यर्थे ।
अन्योन्यं यन्मिश्रीकरणं तत्कर्तृकर्तृकत्वेन ॥ ८४ ॥

देवादिनामरूपव्याकरणं व्याहरन्निगमः ।
यत्कार्यं तत् कथयति तद्ब्रह्म श्रीनिवासनाम भजे ॥ ८५ ॥

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य फलाग्रपूर्णस्य
श्रीदेशिकाचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालायां
द्वितीयाध्यायस्य चतुर्थः पादः ।

---

अर्थः । अण्डसृष्ट्यर्थे-ब्रह्माण्डोत्पादनार्थं, तेजोजलपृथिवीनां-तेजःप्रभृतिमहाभूतानां, परस्परं यन्मिश्रीकरणं-श्रुतौ त्रिवृत्करणशब्देन विवक्षितं, तत्कर्तृकर्तृकत्वेन-त्रिवृत्करणसमानकर्तृकत्वेन इत्यर्थः, देवमनुष्यादिनामरूपव्याकरणं वदन् निगमः-[1]"अनुप्रविश्य नामरूपे व्याकरोत्; तासां त्रिवृतं त्रिवृतमेकैकामकरोत्" इति श्रुतिरित्यर्थः, तत्-देवादिनामरूपव्याकरणं, यस्य श्रीनिवासस्य कार्यं कथयति, तद्ब्रह्म इति पूर्ववत् ॥

भावः । छान्दोग्ये सद्विद्याप्रकरणे तेजोजलपृथिवीनां त्रयाणां महाभूतानां सृष्ट्यभिधानानन्तरं, [1]"सेयं देवतैक्षत हन्ताहमिमास्तिस्रो

[1] छा. ६-३-२.

देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इति, [1]"सेयं देवतेमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत्; तासां त्रिवृतं त्रिवृतमेकैकामकरोत्" इति च श्रूयते। अत्र तेजोजलपृथिवीरूपाणां त्रयाणां महाभूतानां त्रिवृत्करणनामरूपव्याकरणयोरेककर्तृकत्वमभिधीयते। तेषां अन्योन्यमिश्रीकरणरूपं त्रिवृत्करणं ब्रह्माण्डोत्पादनार्थमिति, [2]"नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना। नाशक्नुवन् प्रजाः स्रष्टुं असमागम्य कृत्स्नशः॥ समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः। महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते" इति श्रीविष्णुपुराणवचनेनावगम्यते। [3]"तस्मिन्नण्डेऽभवद्ब्रह्मा सर्वलोकपितामहः" इति तत्रत्यवचनेन अण्डान्तर्जातत्वेनाभिहितस्य चतुर्मुखस्य अण्डसृष्ट्यर्थत्रिवृत्करणकर्तृत्वासंभवात् प्रागुक्तत्रिवृत्करणं परमात्मकर्तृकमेवेति निश्चीयते। अतस्तत्समानकर्तृकं देवमनुष्यादिनामरूपव्याकरणमपि श्रीनिवासापरनामधेयब्रह्मण एव कृत्यं इति निर्धार्यते इति। [4]"सेयं देवता" इति नामरूपव्याकर्तृत्वेनाभिहिताया देवतायाः [5]"सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाऽभिवदन् यदास्ते" इति पुरुषसूक्तोक्तलक्ष्मीपतिमहापुरुषरूपतया अत्र यत्कार्यं तत् कथयति इत्युक्तम्॥

## पूर्वपक्षः।

छान्दोग्ये सद्विद्याप्रकरणे, [1]"सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि," इति "सेयं देवतेमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत्" इति च श्रूयते। अत्र 'अनेन जीवेनात्मनाऽनुप्रविश्य' इत्यत्र, 'जीवेन,' 'आत्मना' इति तृतीयया प्रवेशक्रियाया जीवात्मनः कर्तृत्वबोधनात् प्रवेशक्रियायां

[1] छा. ६-३-२. [2] वि.पु. १-२-५२, ५३. [3] [4] पु. सू.

जीवात्मा कर्तेत्यवगम्यते। अत. 'अनुप्रविश्य' इति क्त्वाप्रत्ययेन प्रवेशक्रियासमानकर्तृकत्वेन श्रुते नामरूपव्याकरणेऽपि जीवात्मैव कर्ता। जीवात्मन परदेवताशतया तत्कर्तृक नामरूपव्याकरण परदेवताकर्तृकमेवेति [1]"नामरूपे व्याकरवाणि" इति परदेवताया नामरूपव्याकरणकर्तृत्वश्रुत्युपपत्ति.। अत परब्रह्माशभूतचतुर्मुखाख्यजीवकर्तृकमेव नामरूपव्याकरणम्। अत एव स्मृतिषु [2]"नाम रूप च भूताना कृत्याना च प्रपञ्चन। वेदशब्देभ्य एवादौ देवादीना चकार स" इत्यादिषु चतुर्मुखस्यैव नामरूपव्याकर्तृत्व स्मर्यते इति॥

## सिद्धान्तः।

[1]"सेय देवतक्षत, तासा त्रिवृत त्रिवृतमेकैका करवाणि" इति, [1]"तासा त्रिवृत त्रिवृतमेकैकामकरोत्" इति च श्रुतस्य त्रिवृत्करणस्य अण्डसृष्ट्यर्थत्वेन अण्डसृष्टित पूर्वभावित्वमवश्याश्रयणीयम्। ततश्च [3]"तस्मिन्नण्डेऽभवद्ब्रह्मा सर्वलोकपितामह" इत्यादिषु अण्डसृष्ट्युत्तर अण्डान्तरुत्पन्नत्वेन प्रतिपादितस्य चतुर्मुखस्य अण्डसृष्टिपूर्वभावित्रिवृत्करण कर्तृत्वानुपपत्त्या परदेवताया एव त्रिवृत्करणकर्तृत्व वाच्यम्। ततश्च [1]"नामरूपे व्याकरवाणि," [1]"त्रिवृत त्रिवृतमेकैका करवाणि" इति त्रिवृत्करणसमानकर्तृकतया श्रुत नामरूपव्याकरणमपि परदेवताकर्तृकमेवेति अवश्यमभ्युपगन्तव्यम्। ततश्च [1]"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इत्यत्र, 'आत्मना' इत्यस्य स्वेन इति, 'जीवेन' इत्यस्य जीवशरीरकेण इति च अर्थ। इत्थ च परदेवता जीवशरीरकेण स्वेनानुप्रविश्य नामरूपव्याकरणसङ्कल्पमकरोत् इत्येव श्रुत्यर्थ। इत्थ च प्रवेशे नामरूपव्याकरणे च परदेवताया एव कर्तृत्व श्रुतिसिद्धम्॥

---

[1] छा ६ ३ २ [2] वि पु १ ५ ६३ [3]

न च [1]" नामरूपे व्याकरवाणि" इत्यत्र लकारेण व्याकरणक्रियाकर्तुरभिधानेन तद्गुणसर्जनभूतप्रवेशक्रियाकर्तुरप्यभिहिततया 'अनेन जीवेन आत्मना' इति कर्त्रर्थतृतीयाया अनुपपत्तिः; [2]" अनभिहिते कर्तरि तृतीया" इत्यनुशासनेन कर्तुरनभिधान एव तृतीयाविधानादिति वाच्यम्। 'आत्मना' इत्यत्र तृतीयायाः करणार्थत्वाश्रयणेन, करणत्वस्यानभिधानात् करणे तृतीयाया उपपत्तेः। 'विवक्षातः कारकाणि भवन्ति' इति न्यायेन कर्त्र्याः परदेवतायाः साधकतमत्वरूपकरणत्वविवक्षया तृतीयोपपत्तेः॥

ननु त्रिवृत्करणस्य अण्डसृष्ट्यर्थत्वमसंभवदुक्तिकम्। अण्डसृष्ट्यनन्तरं चतुर्मुखसृष्टेषु पुरुषेषु त्रिवृत्करणस्य श्रुत्यैव प्रतिपादनात्। [3]" यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति, तन्मे विजानीहीति" इत्युपक्रम्य [4]" अन्नमशितं त्रेधा विधीयते" इत्यादिना पृथिव्यादिभूतत्रयस्य त्रिवृत्करणप्रकारप्रदर्शनं हि श्रूयते। ततश्च अण्डसृष्ट्यनन्तरभाविलित्रिवृत्करणकर्तृत्वं चतुर्मुखस्य संभवत्येव। [3]" यदग्ने रोहितं रूपं" इत्यादिना अण्डान्तर्गतेषु अग्न्यादिषु त्रिवृत्करणप्रकारप्रदर्शनादपि त्रिवृत्करणमण्डसृष्ट्यनन्तरभावीति निश्चीयते। एवं [5]" नामरूपे व्याकरोत् त्रिवृतं त्रिवृतमेकैकामकरोत्" इति पाठक्रमादपि पूर्वं नामरूपव्याकरणं, पश्चात् त्रिवृत्करणमिति क्रमो निर्धार्यते। अतस्त्रिवृत्करणे चतुर्मुखस्य कर्तृत्वोपपत्त्या तत्समानकर्तृकनामरूपव्याकरणमपि चतुर्मुखकर्तृकमेवेति चेत्। मैवम्—

[4]" अन्नमशितं त्रेधा विधीयते" इत्यादिर्न पृथिव्यादिभूतत्रयस्य त्रिवृत्करणप्रदर्शनपरः। तथा सति [4]" अन्नमशितं त्रेधा विधीयते। तस्य यः स्थविष्ठो धातुस्तत्पुरीषं, यो मध्यमस्तन्मांसं, योऽणिष्ठस्तन्मनः" इत्यस्य

[1] छा. ६-३-२. [2] [3] छा. ६-४-७. [4] छा. ६-५-१. [5] छा. ६-३-३.

पृथिव्यास्त्रिवृत्करणप्रकारप्रदर्शनपरता स्यात् । ततश्च त्रिवृत्कृतपृथिवीस्थूलांशस्य पुरीषस्य पृथिवीरूपतायाः, तन्मध्यमांशस्य मांसस्य जलीयतायाः, तदणिष्ठांशस्य मनसस्तैजसतायाश्च प्रसङ्गः; अत्रिवृत्कृतानां पृथिव्यप्तेजसां क्रमेण स्थूलत्वाणुत्वाणीयस्त्वस्वभावतया, त्रिवृत्कृतपृथिव्यां स्थूलांशस्य पृथिवीरूपतायाः मध्यमांशस्य अणोः अप्रूपतायाः अणिष्ठांशस्य तेजोरूपतायाश्च आवश्यकत्वात् । मांसमनसोः आप्यत्वतैजसत्वापत्तौ नेष्टापत्तिः सुवचा । [1]" अन्नमशितं त्रेधा विधीयते " इत्युपक्रमेण मांसमनसोः पार्थिवत्वावगमात् । अतो नेयं श्रुतिस्त्रिवृत्करणप्रदर्शनपरा । अपि तु पुरुषेणोपभुक्तस्य अन्नपानीयादिरूपस्य त्रिवृत्कृतभूतत्रयस्य त्रेधा परिणामप्रदर्शनपरा । [1]" अन्नमशितं त्रेधा विधीयते " इत्यादिश्रुतिषु ' अन्नं, ' ' आपः, ' ' तेजः ' इति पदत्रयस्य त्रिवृत्कृतपृथिव्यादिपरत्वेऽप्येकैकस्मिन् पृथिव्यादेर्बाहुल्यात् अन्नमित्यादिनिर्देशः । अतो न तद्विरोधः । अण्डान्तर्गताग्न्यादौ त्रिवृत्करणप्रकारप्रदर्शनं तु श्वेतकेतुं प्रति अण्डबहिर्भूते पृथिव्यादौ त्रिवृत्करणप्रकारप्रदर्शनासंभवात् अण्डान्तर्गताग्न्यादौ कृतमिति न तावता त्रिवृत्करणस्य अण्डसृष्ट्यनन्तरभावितासिद्धिः । [2]" नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना । नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥ समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः । महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते " इति श्रीविष्णुपुराणवचनेन त्रिवृत्करणस्य अण्डसृष्ट्यर्थतावगमेन पूर्वं त्रिवृत्करणं पश्चात् त्रिवृत्कृतभूतैर्देवमनुष्यादिनामरूपव्याकरणं इत्यर्थक्रमावगमात्, बलीयसा अर्थक्रमेण [3]"नामरूपे व्याकरोत् त्रिवृतं त्रिवृतमेकैकामकरोत् " इति पाठक्रमो बाध्यते । यथा ' अग्निहोत्रं जुहोति ' ' यवागूं पचति ' इत्यत्र यवागूपाकस्य अग्निहोत्रहोमार्थत्वेन पूर्वभावित्वात् अर्थक्रमेण पाठक्रमो बाध्यते, तद्वत् ।

---

[1] छा. ६-५-१. [2] वि. पु १-२-५२,५३. [3] छा. ६-३-४.

इत्थं च त्रिवृत्करणसमानकर्तृकं नामरूपव्याकरणं न चतुर्मुखकर्तृकं, अपि तु श्रीनिवासापरनामधेयपरदेवताकर्तृकमेव। [1]"नामरूपं च भूतानां" इत्युदाहृतस्मृतिवचनं तु चतुर्मुखशरीरकपरमात्मनो नामरूपव्याकरणप्रदर्शनपरमिति ॥

६७ ॥ इति संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ८ ॥

---

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य

श्रीरामानुजसिद्धान्तविजयध्वजस्य कलाप्रपूर्णस्य

श्रीदेशिकाचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालाप्रकाशे

द्वितीयाध्यायस्य चतुर्थः पादः ॥

---

द्वितीयाध्यायः संपूर्णः ॥

---

[1] वि पु. १-५-६३

श्रीश्रीनिवासपरब्रह्मणे नमः ।

## श्रीशारीरकाधिकरणरत्नमालायां सप्रकाशायां

## तृतीयाध्यायस्य प्रथमः पादः ।

---

### १ ॥ तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

अतीते अध्यायद्वये प्रथमेन तत्तत्परविद्यानिरूपणेन श्रीनिवास एव जगज्जन्मादिकारणं सर्वशेषि परं ब्रह्म, चतुर्मुखरुद्रेन्द्रादित्यादयस्तेनैव श्रीनिवासेन सलीलार्थं सृज्यन्ते, संह्रियन्ते च । स श्रीनिवासस्तमश्शब्दित-प्रकृतिमण्डलादूर्ध्ववर्तिनि नित्यसूरिभिस्सदा दृश्यमाने स्थानविशेषे निरतिशयज्योतिर्मयातिरमणीयस्वेच्छापरिगृहीतदिव्यमङ्गलविग्रहविशिष्टः वाङ्मनसापरिच्छेद्यानन्दवान् स्वाश्रितानां निरतिशयानन्दं जनयन् संसारबन्धान्मुक्तैरनुभूयमानस्सन्नास्त इति संसरता जन्तुना तदनुभूपाजननाय परमपुरुषार्थभूतं तत्स्वरूपस्वभावादिकं निर्धारितम् । द्वितीयेन एवं निर्धारितस्यार्थस्य स्मृतितर्कविरोधपरिहारेण अविचाल्यत्वं, परपक्षप्रतिक्षेपेणाबाधितत्वं, श्रीपाञ्चरात्राख्यभगवत्प्रणीतागमरूपप्रमाणमूर्धन्यसिद्धत्वेन श्रद्धेयतमत्वं, वियदादीनामचेतनानां चेतनानां च ब्रह्मकार्यत्वप्रकारशोधनेन कार्यसामान्यस्य श्रीनिवासाख्यब्रह्मकार्यत्वं च प्रतिष्ठापितम् ॥

एवं पुरुषार्थस्वरूपे निश्चितेऽप्यनादिवासनावशेन त्रिवर्गमेव परमपुरुषार्थं मन्यमानानां, तत्र अल्पास्थिरत्वादिदोषनिरूपणं विना तत्र दृढतरवैराग्यानुत्पादं, तदनुत्पादे च पूर्वोदाहृतपरमपुरुषार्थप्राप्तौ त्वरातिशयासिद्धिं च पर्यालोचयन्, पुनरावृत्तिप्रतिपादनेन कर्मफलानामनित्यत्वं, अपुनरावृत्तिप्रतिपादनेन ब्रह्मोपासनफलस्यापवर्गस्य नित्यत्वं च प्रतिपाद्य, तन्मुखेन परमपुरुषार्थप्राप्तौ त्वरातिशयमुत्पादयितुमुपक्रमतेऽनन्तरेणाध्यायद्वयेन ॥

यद्यपि कर्मविचारेण तत्फलेषु वैराग्यस्य एव ब्रह्ममीमांसायामधिकार इति जिज्ञासासूत्रे व्यवस्थापितत्वेन पुनरपि वैराग्योत्पादनाय प्रयत्नोऽयं व्यर्थ इति शङ्कितुं शक्यं, तथाऽपि पञ्चाग्निविद्यानिरूपणेन यादृशं वैराग्यं विषयेषूत्पद्येत, न तादृशं वैराग्यं कर्मविचारेणोत्पद्येत इति तदर्थं प्रयत्नस्सफल एवेति मन्यमानस्तृतीयाध्यायप्रथमपादे पञ्चाग्निविद्यानिरूपणेन कर्मफलानां सर्वेषामपि नश्वरत्वं निरयतुल्यत्वं च ग्यापयितुमारभते तदन्तरप्रतिपत्तौ इत्यादिना ॥

## तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ ३-१-१ ॥

[त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥
प्राणगतेश्च ॥ ३ ॥
अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥
प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥
अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥
भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॥ ७ ॥]

अत्र "अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः" इत्युत्तरसूत्रात् 'इष्टादिकारी' इति पदं प्रथमैकवचनान्तमुपतिष्ठते । [1]"वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति प्रश्नवाक्यस्थं त्रिवृत्करणभूतसूक्ष्मपरं 'आपः' इति पदं तृतीयान्ततया विपरिणतं बुद्धिस्थतयाऽन्वेति । "संज्ञामूर्तिक्लृप्तिस्तु" इति पूर्वाधिकरणसूत्रे मूर्तिशब्देन प्रस्तुतो देहः

[1] छा ५-३-३

तदन्तरेत्यत्र तच्छब्देन परामृश्यते । ततश्च इष्टादिकारी जीव, तदन्तरप्रतिपत्तौ देहान्तरप्राप्तौ, भूतसूक्ष्मै संपरिष्वक्तः सन्नद्ध एव, रहति गच्छति, प्रश्ननिरूपणाभ्यां-प्रश्नोत्तराभ्या तथाऽवगतेरिति सूत्रार्थ ॥

पञ्चाग्निविषयविद्या संसृतिबन्धोत्थखेदविहृतिपरा ।
इष्टापूर्तादिकृतो देहाद्देहान्तरप्राप्तौ ॥ ८६ ॥
गतिमाह भूतसूक्ष्मैस्संपरिरब्धस्य सेन्द्रियप्राणैः ।
यत्सङ्कल्पायत्तां तद्ब्रह्म श्रीनिवासनाम भजे ॥ ८७ ॥

अर्थः । संसृतिबन्धेनोत्थितो य खेदः—पितृयाणमार्गपरिभ्रमणादिक्लेश, तद्विहरणपरा पञ्चाग्निविद्या पूर्वदेह विहाय देहान्तरप्राप्तिदशाया इन्द्रियैः प्राणैश्च सहितैर्भूतसूक्ष्मैर्दृढ सश्लिष्टस्य इष्टापूर्तादिकृतो यत्सङ्कल्पायत्तां, यस्य ससारबन्धकृत्न श्रीनिवासस्य सङ्कल्पकृता गतिमाह, तद्ब्रह्म इति पूर्ववत् ॥

भावः । यागदानादिसुकृतकर्मकृत् जीव देहान्तरप्राप्तिदशाया पुन. शरीरान्तरारम्भकतयाऽतिभीषणैर्भूतसूक्ष्मैराशीविषैरिवानुद्रुतस्सन् गच्छति । अहो दुस्सहोऽय ससारबन्धक्लेश इति पञ्चाग्निविद्यया प्रतिपाद्यते । सोऽयं सर्वोऽपि क्लेशः श्रीनिवासापरनामधेयस्य परस्य ब्रह्मणस्तत्तत्कर्मफलदित्सारूपसङ्कल्पाद्भवतीति श्वेताश्वतरोपनिषदाऽवगम्यते ॥

तत्र हि [1] "प्रधानक्षेत्रज्ञपतिर्गुणेशस्ससारमोक्षस्थितिबन्धहेतु " इति मन्त्रेण जगदीश्वरस्य क्षेत्रज्ञससारबन्धहेतुत्व तज्जनकसकल्पवत्त्वरूप प्रतिपादितम् । ततश्च ससारबन्धस्य ईश्वरसंकल्पकृतत्वात् बन्धान्तर्गतस्य भूतसूक्ष्मैस्सह जीवस्य लोकान्तरगमनादेरीश्वरसकल्पकृतत्व सिद्धम् । अत एव हि सूत्रकारै तृतीयाध्यायद्वितीयपादे सन्ध्याधिकरणे [2] "पराभिध्यानात्तु

1 श्वे ६ १६ 2 शा सू ३ २ ४

तिरोहितं ततो ह्यस्य बन्धविपर्ययौ'' इति सूत्रे जीवात्मनस्संसारबन्धस्य परमात्मसंकल्पकृतत्वेन तदन्तर्गतं तत्स्वरूपतिरोधानमपि तत्संकल्पकृतमिति सूचितम् ॥

अयं च जगदीश्वरः श्रीनिवासापरनामधेयो नारायण एवेति [1] ''वेदाहमेतं पुरुषं महान्तं आदित्यवर्णं तमसः परस्तात्'' इति श्वेताश्वतरोपनिषदि तृतीयाध्याये पठ्यमानमन्त्रादवगम्यते । अयं हि मन्त्रः [2] ''अद्भ्यस्संभूतः पृथिव्यै रसाच्च'' इत्यनुवाके श्रूयते । ततश्च तदनुवाके श्रुतेन नारायणादन्यत्र असंभवता लक्ष्मीपतित्वलिङ्गेन उक्तमन्त्रश्रुतो महापुरुषः नारायण एवेति, तदुपनिषदि श्रुताः ईशान-शिव शंभु-रुद्रादयः शब्दा योगादिना नारायणेऽपि संभवन्तस्तत्परा एवेति, कृत्स्नापीयमुपनिषन्नारायणपरैवेति च निर्धार्यते । अतः [3] ''प्रधानक्षेत्रज्ञपतिर्गुणेशः'' इति पूर्वोदाहृतमन्त्रश्रुत ईश्वरोऽपि स एवेति निर्धार्यते इति । सर्वमिदमभिसन्धाय अस्मिन् पद्ये यत्सङ्कल्पायत्तां इत्युक्तम् ॥

पूर्वपक्षः ।

देहान्तरमाप्तवे गच्छन् इष्टादिकारी जीव देहान्तरारंभकभूतसूक्ष्मैरसंसृष्ट एव गच्छति, देहान्तरारंभकाणां भूतसूक्ष्माणां तत्र तत्र सुलभत्वेन भूतसूक्ष्मैस्सह गमनकल्पनस्य निष्प्रयोजनत्वादिति ॥

सिद्धान्तः ।

देहाद्देहान्तरं गच्छन् इष्टापूर्तादिकृत् भूतसूक्ष्मैस्संसृष्ट एव गच्छति ; पञ्चाग्निविद्याप्रकरणे श्रूयमाणेन [4] ''वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति'' इति प्रश्नेन, [5] ''इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति'' इति प्रतिवचनेन च भूतसूक्ष्मैस्संसृष्ट एव गच्छतीत्यवगमात्

[1] पुरुषसूक्त. [2] पुरुषसूक्त २. [3] श्वे. ६-१६. [4] छा. ५-३-३. [5] छा. ५-९-१.

श्रुत्येकसमधिगम्यस्यार्थस्य यथाश्रुति प्रतिपत्तव्यत्वात्। तत्र हि, 'भूतसूक्ष्मविशिष्टस्य जीवस्य पञ्चस्वाग्निषु होमप्रकार पञ्चमाहुत्यनन्तर देहविशिष्टरूपेण भवनप्रकार च जानासि कि' इति प्रश्नप्रकार, भूतसूक्ष्मविशिष्टो जीव द्युलोक पर्जन्य पृथिवी पुरुष-योषिद्रूपेषु पञ्चस्वाग्निषु क्रमेण सम्बन्ध प्राप्य, योषिद्रूपाग्निसम्बन्धप्राप्त्यनन्तर देहविशिष्टो भवतीति प्रतिवचनप्रकारश्च श्रूयते। अतो भूतसूक्ष्माणा जीवेन सह गमनाभावे पञ्चाग्निसम्बन्धपूर्वक तदीयदेहात्मना परिणामस्यासभवात्, जीवेन सह गच्छन्तीति प्रतीयते ॥

ननु उक्तप्रश्नप्रतिवचनयोरपामेव देहात्मना परिणामप्रकारप्रश्न, तत्प्रतिवचन च श्रूयते, न तु पञ्चाना भूतसूक्ष्माणाम्। अत कथ भूत सूक्ष्मपञ्चकस्य जीवेन सह गमनलाभ इति चेत्। उच्यते—देहान्तरारम्भिकाणामपा तदारम्भप्रकारप्रश्नप्रतिवचनयो श्रवणात् भूतान्तरासंसृष्टानामपा देहारम्भकत्वासम्भवेन, अर्थसामर्थ्यादेव भूतान्तरसंसृष्टानामपा गमन लाभ। श्रुतावब्ग्रहण तु देहारम्भकेषु भूतेषु लोहितादिरूपाणामपा बाहुल्याभिप्रायम्। एव [1]"तमुत्क्रामन्त प्राणोऽनूत्क्रामति, प्राणमनूत्क्रामन्त सर्वे प्राणा अनूत्क्रामन्ति" इति जीवेन सम मुख्यप्राणस्य इन्द्रियाणा च गमनश्रवणात्, निराश्रयाणा तेषा गमनासम्भवेन भूतसूक्ष्माश्रितानामेव तेषा गमनस्य वक्तव्यत्वादपि जीवेन सह भूतसूक्ष्माणा गमनसिद्धि ॥

ननु जीवस्य मरणदशाया तदीयवागादीन्द्रियाणामग्न्यादौ लयश्रवणात् कथ तेषा जीवेन सह गमनोक्तिसम्भव? श्रूयते हि [2]"यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वात प्राणश्चक्षुरादित्य" इत्यादौ वागादीन्द्रियाणामग्न्यादौ लय इति चेन्मैव— "ओषधीर्लोमानि वनस्पतीन् केशा" इति मृतशरीरेण सम दह्यमानाना लोम्ना केशाना च ओषध्यादिषु लयश्रवणस्य ओषध्याद्यभिमानिनीना देवताना लोमाद्यभिमाननिवृत्तिपरताया

[1] बृ ६ ४ २ [2] बृ ५ २-१३

अवश्यवक्तव्यतया, तत्सहपठितस्य वागादीन्द्रियलयस्यापि अग्न्याद्यभिमानिदेवतानां वागादीन्द्रियाभिमाननिवृत्तिपरतया उपपत्तेः ॥

ननु [1]"असौ वाव लोको गौतमाग्निस्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति" इति प्रतिवचने प्रथमाहुतौ श्रद्धाया हूयमानत्वं श्रूयते, न त्वपाम्; अतः कथं प्रतिवचनेन भूतसंसृष्टस्य जीवस्य गमनलाभ इति चेत्, उच्यते–[2]"वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति अपां पञ्चमाहुतौ शरीरात्मना परिणामप्रकारप्रश्नस्य प्रथमाहुतिविषये [1]"तस्मिन्नेतस्मिन्नग्नौ" इत्यादिप्रतिवचने अपां हूयमानत्वानुक्तौ प्रतिवचनासङ्गतिः स्यात्। अपां हि पञ्चस्वग्निषु हूयमानत्वप्रकारविषयः प्रश्नः। अतस्तत्र श्रद्धाशब्देन आप एवोच्यन्त इत्यवश्यमाश्रयणीयम्। अस्ति च श्रद्धाशब्दस्य अप्सु वैदिकः प्रयोगः [3]"श्रद्धा वा आपः" इति ॥

नन्वेवमपि श्रद्धाशब्दोक्तस्य भूतसूक्ष्मपञ्चकस्य हूयमानत्वलाभेन तस्यैव गमनलाभस्संभवति, न तु तत्संसृष्टस्येष्टादिकारिणः गमनस्य पञ्चाग्निविद्यया लाभ इति चेत्, शृणु–उत्तरत्र पितृयाणमार्गोक्तिप्रकरणे छान्दोग्ये [4]"अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते" इतीष्टादिकारिणां पितृयाणमार्गेण गतिमुपक्रम्य, [4]"पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति" इत्यत्र पितृयाणमार्गेण प्रस्थितस्येष्टादिकारिणश्चन्द्रप्राप्त्यनन्तरं सोमराजात्मना भवनस्याभिधानात्, इह पञ्चाग्निविद्याप्रकरणेऽपि, [1]"तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेस्सोमो राजा सम्भवति" इति प्रथमाहुतौ हुतस्य श्रद्धाशब्दोक्तस्य सोमराजात्मना संभवस्याभिधानात्, स एवायमिष्टादिकारिणस्सोमराजभाव इति प्रत्यभिज्ञायमानतया अत्र श्रद्धाशब्देन भूतसूक्ष्मपञ्चकविशिष्ट इष्टादिकारी निर्दिश्यत इति निर्धार्यते ॥

[1] छा. ५-४-२. [2] छा. ५-३-३. [3] तै. सं. ३-२-४-३३. [4] छा. ५-१०-३,४.

न च [1]" एष सोमो राजा " इत्येतदनन्तरं [1]" तद्देवानामन्नं तं देवा भक्षयन्ति " इत्यत्र तच्छब्देन पूर्ववाक्यप्रस्तुतं परामृश्य तस्यान्नत्वभक्ष्यमाणत्वयोर्वचनात् इष्टादिकारिणो जीवस्य भक्ष्यमाणत्वासंभवात् [1]" एष सोमो राजा " इतीदं वाक्यं न प्राप्तिरिष्टादिकारिपरं, अपि तु प्राप्यचन्द्रपरं; तथा सति चन्द्रस्य देवान्नत्वदेवभक्ष्यमाणत्वयोः पुराणादिषु प्रसिद्धत्वेन वाक्यार्थोपपत्तेरिति वाच्यम् — [1]" एष सोमो राजा " इत्यस्य प्राप्यचन्द्रपरत्वे चन्द्रस्य सोमत्वराजत्वयोः प्रसिद्धयोरनुवादे प्रयोजनाभावेन वाक्यवैयर्थ्यप्रसङ्गेन प्राप्तिरिष्टादिकारिपरताया अवश्यवक्तव्यत्वात्। तथा सति चन्द्रं प्राप्तस्येष्टादिकारिणः अमृतमयदेहप्राप्तिविधिपरत्वेन सार्थक्यसंभवात् ॥

[1]" तं देवा भक्षयन्ति " इति वाक्यं इष्टादिकारिण आजानदेवैः पशुवत् स्वभोगोपकरणीक्रियमाणत्वपरम्; इष्टादिकारिणः ब्रह्मवित्त्वाभावेन देवैः पशुवत् स्वभोगोपकरणीक्रियमाणत्वस्य [2]" यथा पशुरेवं स देवाना " इत्यत्र श्रूयमाणत्वात्। यथा पशुः मनुष्यस्य भोगोपकरणीभवति, एवं सः अब्रह्मवित् इष्टादिकारी देवानां किंकरीभूय भोगोपकरणीभवतीति तदर्थः।

ततश्च [3]" तस्मिन्नेतस्मिन्नग्नौ देवा " इत्यादिवाक्यस्य, तस्मिन्नेतस्मिन्नग्नौ-द्युलोकरूपेऽग्नौ, देवा-इष्टादिकारिणो जीवस्य इन्द्रियाणि, श्रद्धां—सूक्ष्मपञ्चकविशिष्टमिष्टादिकारिणं, द्युलोकं प्रापयन्तीति फलितम्। तस्या आहुतेस्सोमो राजा सभवति द्युलोकं प्राप्त इष्टादिकारी अमृतमयदिव्यशरीरविशिष्टो भवतीत्यर्थः। [4]" आकाशाच्चन्द्रमसमेष सोमो राजा " इत्यत्रापि, एषः-चन्द्रं प्राप्त इष्टादिकारी, सोमो राजा-अमृतमयदिव्यशरीरविशिष्टो भवतीत्यर्थः ॥

---

[1] छा. ५-१०-३, ४. [2] छा. ५-१०-४. [3] बृ ३-४-१०. [4] छा. ५-४-२.

इत्थं च [1] "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति प्रश्नस्य प्रथमाहुतिविषयेण "असौ वाव लोको गौतमाग्निस्तस्मिन्नग्नौ देवाः श्रद्धां जुह्वति" इत्यनेन प्रतिवचनेन भूतसूक्ष्मपञ्चकविशिष्टस्य इष्टादिकारिणो गमनलाभात् भूतसूक्ष्मपञ्चकविशिष्ट एव इष्टादिकारी गच्छतीति सिद्धम् ॥

६८ ॥ इति तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

---

२ ॥ कृतात्ययाधिकरणम् ॥ २ ॥

पूर्वाधिकरणे सुकृतफलभोगाय प्रस्थितस्येष्टादिकारिणो भूतसूक्ष्मरूपेण परिणतप्रकृतिसंबन्धस्यावर्जनीयत्वमुक्तम् । अनेन ब्रह्मविद्यायाः कर्मणां च महदन्तरं दर्शितं भवति । ब्रह्मविद्या हि स्वफलभोगाय प्रस्थितस्य ब्रह्मविदः प्रकृतिसंबन्धं नाशयति; कर्म तु प्रकृतिसंबन्धं स्थापयतीति । इदानीं पुण्यकर्मकारिणः प्रकृतिसंबन्धहेतुभूतकर्मबन्धस्यावर्जनीयतां ख्यापयितुं प्रवृत्तमिदमधिकरणम् ॥

## कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ३-१-८ ॥

[चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥
आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥
*सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥*]

पूर्वसूत्रात् 'इष्टादिकारी' इति पदं विपरिणतमनुवर्तते । 'अवरोहति' इत्यध्याहार्यम् । ततश्च इष्टादिकारी, कृतात्यये, कृतस्य-फलदानाय प्रवृत्तपुण्यकर्मणः, अत्यये-क्षये, अनुशयवान्-अदत्तफलावशिष्टकर्मवान्;

[1] छा. ५-३-३.

यथेतं-आरोहप्रकारेण; अनेवं-प्रकारान्तरेण च अवरोहति; दृष्टस्मृतिभ्यां-श्रुतिस्मृतिभ्यां तथाऽवगतेरिति सूत्रार्थः ॥

सुकृतफले भुक्ते सत्यभुक्तफलकर्मभिस्सहितः ।
यस्येच्छयाऽवरोहति तद्ब्रह्म श्रीनिवासनाम भजे ॥ ८८ ॥

अत्र 'इष्टादिकारी' इति पदं प्रकरणसिद्धम् । स्पष्टोऽर्थः ॥

भावः । स्वर्गं प्राप्तः पुण्यकर्मकृज्जीवः फलदानप्रवृत्तपुण्यकर्मफलेऽनुभूते सति भोक्तव्यफलकर्मभारवाही यस्य भगवतश्श्रीनिवासस्य सङ्कल्पादवरोहति तद्ब्रह्मेति पूर्ववत् । आरोहक्रमेण क्रमान्तरेण चावरोहति । धूमराव्यपरपक्ष-दक्षिणायनषण्मासपितृलोकाकाशचन्द्रक्रमेणाऽऽरोहः । अवरोहस्तु चन्द्राकाश-वायुधूमाभ्रमेघवृष्टिक्रमेण । आरोहावरोहयोराकाशप्राप्तया यथागतं अवरोहे पितृलोकमप्राप्य वाय्वादिप्राप्तया क्रमान्तरमिति विवेकः । इष्टादिकारिणां स्वर्गादवरोहस्यापि भगवत्सङ्कल्पायत्तत्वस्य पूर्वोदाहृतश्वेताश्वतरोपनिषत्सिद्धत्व-मभिप्रेत्यात्र यस्येच्छयाऽवरोहति इत्युक्तम् ॥

## पूर्वपक्षः ।

[1]"तस्मिन् यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते" इत्यत्र संपातशब्दस्य कर्मवाचिनस्सङ्कोचकाभावेन कर्मसामान्यपरतया निश्शेषकर्म-फलभोगानन्तरं स्वर्गात् प्रतिनिवृत्तिश्रवणेन स्वर्गादवरोहन्निष्टादिकारी भुक्त-शिष्टकर्मशून्य एव प्रतिनिवर्तते । अत एव [2]"प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययं । तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे ॥" इति श्रुत्य-न्तरं संगच्छते । तत्र हि इह लोके यत्कर्म करोति तस्यान्तं प्राप्य स्वर्ग-लोकात् प्रतिनिवृत्तिः श्रूयत इति ॥

---

[1] छा. ५-१०-१ [2] बृ. ६-४-६.

## सिद्धान्तः ।

इष्टादिकारी अभुक्तफलकर्मविशिष्ट एव स्वर्गादवरोहति; [1]"तद्य इह रमणीयचरणा अभ्याशो ह यत्, ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं क्षत्रिययोनिं वैश्ययोनिं वा। अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं सूकरयोनिं चण्डालयोनिं वा" इति श्रुतेः, [2]"वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततश्शेषेण विशिष्टदेशजातिकुलरूपायुश्श्रुतवित्तवृत्तसुखमेधसो जन्म प्रतिपद्यन्ते; विष्वञ्चो विपरीता नश्यन्ति" इति स्मृतेश्च तथाऽवगमात्। इह-अस्मिन् लोके, अभ्याशः-स्वर्गादागन्तारः ये, ते रमणीयचरणाः—पुण्यकर्माणः, यत्—यदि, ते—आगन्तारः, रमणीया-उत्कृष्टां ब्राह्मणादियोनिं प्राप्नुवन्ति। इह अभ्यागन्तारः ये, ते कपूयचरणाः—पापकर्माणः, यत्-यदि, श्वयोनिप्रभृतिकुत्सितां जातिं प्राप्नुवन्ति इति उक्तश्रुत्यर्थः। उक्तश्रुतिस्मृत्योः स्वर्गात् प्रतिनिवर्तमानस्य पुण्यपापरूपकर्मभेदेन जन्मभेदप्रतिपादनात् अनादिकालप्रवृत्तपुण्यपापरूपकर्मसु अभुक्तफलानां कर्मणां ब्रह्मविद्यारूपप्रायश्चित्तेन विना नाशासंभवाच्च [3]"यावत्संपातमुषित्वा" इत्यत्र संपातशब्दः फलदानप्रवृत्तपुण्यकर्ममात्रपरतया संकोचनीयः। [4]"प्राप्यान्तं कर्मणस्तस्य" इति श्रुत्यन्तरमपि फलदानप्रवृत्तकर्मविषयमेव वाच्यम्॥

ननु उदाहृतश्रुतौ 'रमणीयचरणा' 'कपूयचरणाः' इत्युभयत्र चरणशब्द आचारवाची; लोके आचार एव तस्य प्रयोगदर्शनात्। वेदे च [5]"यान्यनवद्यानि कर्माणि" इति, [5]"यान्यस्माकं सुचरितानि" इति कर्मण आचारस्य च पृथङ्निर्देशात् अत्र आचारफलमेव तत्तद्योनिप्राप्तिः, न तु कर्मफलं इति प्रतीयते। अतः कथमुक्तश्रुतिबलात् कर्मशेषविशिष्टस्य प्रत्यवरोह उच्यत इति चेत्, उच्यते—चरणशब्दस्य आचारे

[1] छा. ५-१०-७. [2] गौतम. २-११-१२,१३. [3] छा. ५-१०-३.
[4] बृ. ६-४-६. [5] तै. शिक्षा. ११-२.

प्रयोगेऽपि, प्रकृते चरणशब्दस्य नाचारपरत्वं सम्भवति, सदसद्योनिजन्मन पुण्यपापरूपकर्मफलभूतसुखदुःखभोगार्थत्वेन तत्र कर्मण एव हेतुतया आचारस्य तद्धेतुत्वायोगात्। अत उक्तश्रुतौ चरणशब्दस्सुकृतरूपकर्मणि लाक्षणिक। 'चर्यत इति चरण' इति व्युत्पत्त्या सुकृतदुष्कृतरूपकर्मवाची वा वक्तव्य। न चैवमाचारस्य वैयर्थ्यं शक्यम्; तस्य कर्मानुष्ठानयोग्यतापादकत्वेन सार्थक्यात्। अत. स्वर्गात्प्रत्यवरोहन् इष्टादिकर्मकृत् अभुक्तफलकर्मविशिष्ट एव प्रत्यवरोहतीति सिद्धम्॥

६९॥ इति कृतात्ययाधिकरणम्॥ २॥

---

## ३॥ अनिष्टादिकार्यधिकरणम्॥ ३॥

[1] "तस्मिन् यावत्संपातमुषित्वा" इत्यत्र संपातशब्दस्येव [2] "चन्द्रमसमेव ते सर्वे गच्छन्ति" इत्यत्र सर्वशब्दस्य सकोचे प्रमाणाभावेन, तत्र सर्वशब्द सुकृतदुष्कृतकृत्सर्वसाधारणस्यादित्याशङ्का परिहर्तुं प्रवृत्तमिदमधिकरणम्॥

# अनिष्टादिकारिणामपि च श्रुतम्॥ ३-१-१२॥

संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्॥ १३॥

स्मरन्ति च॥ १४॥

अपि सप्त॥ १५॥

तत्रापि तद्व्यापारादविरोध॥ १६॥

एतानि पूर्वपक्षसूत्राणि। 'चन्द्रगमन' इत्यध्याहार्यम्। चन्द्रगमन अनिष्टादिकारिणामपि श्रूयते इति सूत्रार्थ। अत्र अनिष्टादिकारिशब्देन शास्त्रनिषिद्धकर्मकर्तार विहितकर्मणामकर्तारश्च विवक्षिता॥

---

[1] छा ५-१०-३ [2] कौषी १२

पूर्वपक्षसूत्राणामय भाव –[1] "ये वै केचास्माल्लोकात्प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" इति अस्माल्लोकात्प्रेत्य गच्छता सर्वेषा चन्द्रप्राप्तिश्रवणात् पूर्वोक्तद्विविधपापकर्मकारिणामपि चन्द्रप्राप्तिरस्त्येव । परन्तु [2] "अय लोको नास्ति पर इति मानी पुन पुनर्वशमापद्यते मे" इति, [3] "सर्वे चैते वश यान्ति यमस्य भगवन् किल" इत्यादिश्रुतिस्मृतिषु पापिना यमसदनप्राप्त्यभिधानात्, यमसदन प्राप्य यमाज्ञया पापिना प्रथमं पापफलभूतरौरवादिनरकानुभव, पश्चाच्चन्द्रप्राप्तिरिति पुण्यकृद्भ्यो विशेषसिद्धये कल्पनीयमिति ॥

**विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ ३ १-१७ ॥**
**न तृतीये तथोपलब्धे ॥ १८ ॥**
**स्मर्यतेऽपि च लोके ॥ १९ ॥**
**दर्शनाच्च ॥ २० ॥**
**तृतीयशब्दावरोधस्संशोकजस्य ॥ २१ ॥** एतानि सिद्धान्तसूत्राणि ॥

तुशब्द पक्षव्यावृत्त्यर्थ । पापिना चन्द्रप्राप्तिर्नास्ति, देवयानपितृयाणमार्गगमनस्य प्रकरणेन **विद्याकर्म**फलभोगार्थत्वावगमात् इत्युक्तसूत्रार्थ । अय भाव –[4] "अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसभवन्ति" इत्युपक्रम्य, "आकाशाच्चन्द्रमस" इति पितृयाणमार्गेण प्रस्थितस्य चन्द्रप्राप्तिराम्नाता । ततश्च [5] 'तद्य इत्थ विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसभवन्ति" इत्यादिविद्याफलतया अभिमतमर्चिरादिमार्गगमन ब्रह्मविद्यारहिताना पापिना यथा न सभवति, एव [4] "अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसभवन्ति" इत्यादिना पुण्यकर्मफलतयाऽभिहितपितृयाणमार्गगमनमपि पुण्यकर्मरहिताना पापिना न सभवति ।

[1] कौषी. १ २ [2] कठ [3] वि पु ३-७५ [4] छा, ५ १० ३ [5] छा ५-१०-१,

अतस्तेषां चन्द्रप्राप्तिरपि नास्ति । [1]"ये वै के चास्माल्लोकात्" इत्यादि-पूर्वोदाहृतश्रुतौ 'ते सर्वे' इति सर्वशब्दः पुण्यकर्मकर्तृसर्वविषयतया संकोचनीयः ॥

ननु पापिनां चन्द्रप्राप्त्यभावे चन्द्रप्राप्त्यनन्तरभावितया पूर्वोदाहृत-श्रुतिसिद्धा योषिद्रूपपञ्चमाग्नौ भूतसूक्ष्माणामाहुतिरपि न संभवति । तद-संभवे च तैश्शरीरारंभोऽपि नोपपद्यते इति चेत्, नैवम्—पापिनां द्युलोक-प्राप्त्यभावश्रवणेन तेषां योषिद्रूपपञ्चमाग्निसंबन्धमन्तरेणैव शरीरारंभलाभेन तदर्थं चन्द्रप्राप्तेरकल्पनीयत्वात् । श्रूयते हि पञ्चाग्निविद्याप्रकरणे [2]"अथै-तयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं, तेनासौ लोको न सपूर्यते" इत्यत्र तृतीयस्थानशब्दनिर्दिष्टानां पापिनां द्युलोकप्राप्त्यभाव. । देवयानपितृयाणमार्ग-प्राप्तिहेतुभूतविद्याकर्मसम्बन्धहीनाः पुन पुनर्जननमरणवन्तो ये पापिनस्तैस्स्वर्ग-लोको न सपूर्यते इत्युक्तश्रुत्यर्थः । एवं द्रौपदीधृष्टद्युम्नप्रभृतीनामयोनिजाना योषिद्गर्भसम्बन्धमन्तरेणैव शरीरोत्पत्तिस्मरणादपि शरीरारंभे न योषिद्गर्भसब-न्धापेक्षानियमः । एवं [3]"तेषां खल्वेषा भूतानां त्रीण्येव बीजानि भवन्त्यण्डजं जीवजमुद्भिज्जं" इति श्रुतौ तरुगुल्मादिस्थावरशरीराणां, कृमिदंशादिस्वेदज-शरीराणां च योषिद्गर्भसम्बन्धमन्तरेण शरीरारंभश्रवणादपि शरीरारंभे न योषिद्गर्भसंबन्धरूपपञ्चमाहुत्यपेक्षानियम । उदाहृतश्रुतौ उद्भिज्जशब्देन स्वेदजशरीरमपि गृह्यत इति द्रष्टव्यम् । अतः पापिनां शरीरारंभे न पञ्चमाहुत्यपेक्षा नापि चन्द्रप्राप्त्यपेक्षेति सिद्धम् ॥

विद्याकर्मविहीनाः पापकृतो यस्य संकल्पात् ।
नरकानेव भजन्ते तद्ब्रह्म श्रीनिवासनाम भजे ॥ ८९ ॥

स्पष्टोऽर्थः ।

[1] कौषी. १-२. [2] छा. ५-१०-८. [3] छा. ६-३-१.

पापिनां नरकप्राप्तेरपि भगवत्सकल्पकृतत्वस्य पूर्वोदाहृतश्वेताश्वतरोपनिषत्सिद्धत्वादत्र यत्सङ्कल्पात् नरकानेव भजन्ते इत्युक्तम् ॥

७० ॥ इति अनिष्टादिकार्यधिकरणम् ॥ ३ ॥

---

४ ॥ तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

स्वर्गात् प्रत्यवरोहन् जीवश्चन्द्रलोके देवशरीरारंभकैस्सुकृतफलभोगावसाने विलीय सूक्ष्मतां प्राप्तैस्सप्राणैस्सेन्द्रियैः पञ्चभिर्भूतैस्सहितः अभुक्तफलकर्मविशिष्टश्च प्रत्यवरोहतीत्युक्तं प्राक् । इदानीं प्रत्यवरोहणकाले मार्गमध्ये तत्रावस्थाविशेषो विचार्यते ॥

# तत्स्वाभाव्यापत्तिरुपपत्तेः ॥३-१-२२॥

तत्स्वाभाव्यापत्तिः–आकाशादिसादृश्यापत्तिः, श्रुतिस्थेन आकाशादिभावमाप्तिशब्देनाभिधीयते, तत्सादृश्यप्राप्तेरेवोपपद्यमानत्वादिति सूत्रार्थः ॥

अयं भावः–स्वर्गात्प्रतिनिवर्तमानमधिकृत्य, [1]"यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति, धूमो भूत्वाऽभ्रं भवति" इत्यादि श्रूयते । अत्र 'आकाशं' इत्यादौ 'अभिसम्भवति' इति पूरणीयम् । ततश्च 'आकाशमभिसम्भवति' इत्यनेन आकाशप्राप्तिः प्रतीयते । तथाऽपि 'वायुर्भूत्वा' इत्यादावुत्तरत्र वाय्वादिभावप्राप्त्यभिधानेन पूर्वमप्याकाशादिभावप्राप्तिरेव विवक्षितेति गम्यते । तत्रावरोहतो जीवस्य आकाशभाव आकाशशरीरकत्वरूप इति न वक्तुं शक्यम्, पूर्वमेव जीवान्तरशरीरभूतस्याऽऽकाशस्येदानीं स्वर्गात्प्रत्यवरोहज्जीवशरीरत्वासम्भवात् । अपि त्वाकाशसादृश्यापत्तिरेव । तत्सादृश्यं

---

1 ५-१०-५.

च आकाशाद्भेदकाकारप्रहाणेन ततः पृथक्प्रतीत्यनर्हत्वमेव । ततश्च चन्द्रलोकात्प्रत्यवरोहन् जीव आकाशात्पृथक्प्रतीत्यनर्हभूतसूक्ष्मविशिष्टो भवतीति पर्यवसितम् ॥

७१ ॥ इति तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

५ ॥ नातिचिराधिकरणम् ॥ ५ ॥

## नातिचिरेण विशेषात् ॥ ३-१-२३ ॥

आकाशवायुधूमाभ्रमेघवृष्टिसादृश्यं प्राप्तस्वर्गात्प्रत्यवरोहन् जीवः, ईषद्विलम्बेनाऽऽकाशादितो निष्क्रामति । व्रीहिप्राप्त्यनन्तरं, [1]"ततः खलु वै दुर्निष्प्रपतरं" इति विलम्बेन व्रीह्यादितो निष्क्रमणश्रवणात्, ततः पूर्वमाकाशादितो निष्क्रमणे ईषद्विलम्बावगतेरिति सूत्रार्थः ॥

'दुर्निष्पतततरं' इति वक्तव्ये 'दुर्निष्प्रपतरं' इति तकारलोपश्छान्दसः । व्रीह्यादितो निष्क्रमणमतिकृच्छ्रेण भवतीत्यर्थः । उक्ताधिकरणद्वयार्थसंग्राहकमिदं पद्यम् ॥

अवरोहन्गगनाद्यैस्संश्लेषं कमपि यत्कृतं प्राप्य ।
निष्क्रामत्यनतिचिरात् तद्ब्रह्म श्रीनिवासनाम भजे ॥ ९० ॥

अर्थः । चन्द्रात् अवरोहन् जीवः येन श्रीनिवासेन कृतं–तत्संकल्पकृतमित्यर्थः; आकाशाद्यैस्समं कमपि आकाशादितः पृथक्प्रतीत्यनर्हं, संश्लेषं संबन्धं, प्राप्य अनतिचिरात्-ईषद्विलम्बेन, निष्क्रामति, तद्ब्रह्मेति पूर्ववत् ॥

भावः । इष्टादिकारिणां चन्द्रलोके देवशरीरारंभकाणि भूतसूक्ष्माणि तस्य स्वर्गसुखानुभवस्यावमाने द्रवीभावं प्राप्य वायुना इतस्ततः क्षिप्यमाणान्याकाशेन समं पृथक्प्रतीत्यनर्हं श्रीनिवाससंकल्पकारितं सम्बन्धविशेषं

छा. [1] ५-१०-६.

प्राप्नुवन्ति। तदा तत्संश्लिष्टः प्रत्यवरोहन् जीवोऽपि तथाविधमाकाशसंबन्धं प्राप्य आकाशादीषद्विलम्बेन निष्क्रम्य वायुना, ततो धूमेन, ततोऽभ्रेण, ततो मेघेन, ततो वृष्ट्या समं तथाविधसंबन्धं प्राप्नोतीति। 'अभ्रं' इत्यनेन जलग्रहणावस्था; 'मेघं' इत्यनेन जलसेचनावस्था चोच्यते॥

७२ ॥ इति नातिचिराधिकरणम् ॥ ५ ॥

---

६ ॥ अन्याधिष्ठिताधिकरणम् ॥ ६ ॥

स्वर्गादवरोहतां जीवानामाकाशादिप्राप्त्यनन्तरं [1] "त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायन्ते" इति व्रीह्यादिरूपेण जन्म श्रूयते। तत्र 'जायन्त' इति श्रवणात् व्रीह्यादिस्थावरशरीरप्राप्तिः प्रतिपाद्यत इति शङ्कापरिहाराय प्रवृत्तमिदमधिकरणम्॥

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥ ३-१-२४॥

[अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥
रेतःसिग्योगोऽथ ॥ २५ ॥
योनेश्शरीरम् ॥ २७ ॥]

अन्येन—भोक्त्रा जीवेन, अधिष्ठिते व्रीह्यादिशरीरे संश्लेषमात्रमेव 'व्रीहियवा जायन्त' इत्यनेन प्रतिपाद्यते, पूर्ववदभिलापात्—आकाशादिभावप्राप्तिवद्वचनात् इति सूत्रार्थः ॥

भावः। उत्तरत्र स्वर्गादवरोहतां शरीरविशेषप्राप्तिप्रतिपादनप्रकरणे, [2] "तद्य इह रमणीयचरणा अभ्याशो ह यत् ते रमणीयां योनिमापद्येरन्" इत्यादौ तत्तच्छरीरप्राप्तिनिमित्तभूतं सुकृतदुष्कृतरूपं कर्माभिहितम्। इह तु

---

[1] छा. ५-१०-६. [2] छा. ५-१०-६,७

[1] "आकाशमाकाशाद्वायुं" इत्यादाविव तथाविधकर्मानभिधानात् नात्र श्रीह्यादिशरीरप्राप्तिर्विवक्षिता, अपि तु भोक्त्रन्तरशरीरभूतव्रीह्यादिसंश्लेषमात्रमेव विवक्षितमिति गम्यते । अतो 'जायन्त' इति वचनमौपचारिकम् ॥

ननु स्वर्गप्राप्तिहेतुभूतस्याग्नीषोमीयादेः कर्मणः पशुहिंसागर्भत्वेन, हिंसायाश्च पापरूपत्वात्, अग्नीषोमीयादिकर्मणः पापमिश्रत्वेन स्वर्गलोके तत्सुकृतांशफलेऽनुभूते, तत्पापांशफलभूतस्थावरजन्मप्रतिपादनपरमिदं श्रुतिवचनं [2] "व्रीहियवा जायन्ते" इति । [3] "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इति व्रीह्यादिस्थावरजन्मनः पापफलत्वस्मरणात् । ततश्च 'जायन्त' इति वचनस्यौपचारिकत्वाश्रयणमन्याय्यमिति चेत् मैवं—

अग्नीषोमीयपश्वालम्भस्य हिंसात्वाभावावगमेन पापत्वस्यैवासंभवात् । तथा हि—'मरणोद्देश्यकमरणानुकूलव्यापारो हिंसा' इति हिंसालक्षणाश्रयणे कशाताडनादेः हिंसात्वाभावप्रसङ्गेन, तीव्रवेदनाजनकव्यापारत्वं हिंसात्वमित्येव हिंसालक्षणं वक्तव्यम् । ततश्च व्रणचिकित्सादेस्तात्कालिकवेदनाजनकत्वेन हिंसात्वप्रसङ्गः । न चेष्टापत्तिः ; व्रणचिकित्सकस्य हिंसकत्वव्यवहाराभावात्, प्रत्युत रक्षकत्वव्यवहारस्यैव दर्शनात् । अतो 'बलवद्धिताजनकत्वे सति तीव्रवेदनाजनकव्यापारो हिंसा' इत्येव हिंसालक्षणमास्थेयम् । व्रणचिकित्सादेस्तादात्विकतीव्रवेदनाजनकत्वेऽपि, आरोग्यरूपप्रबलहितसाधनत्वेन न हिंसात्वमिति च वारणीयम् । ततश्च प्रकृतेऽग्नीषोमीयपशुसंज्ञपनादेः, [4] "न वा उ एतन्म्रियसे न रिष्यसि देवानिदेपि पथिभिस्सुगेभिः । यत्र यान्ति सुकृतो नापि दुष्कृतस्तत्र त्वा देवस्सविता दधातु" इति मन्त्रवर्णेन पशोरुत्तरकाले स्वर्गप्राप्तिरूपप्रबलहितसाधनत्वावगमेन न हिंसात्वप्रसङ्गः । 'हे पशो, अभिमन्त्रणपूर्वकं क्रत्वर्थं हन्यमानस्य तव नैतन्मरणं, नापि हिंसा ।

[1] छा. ५-१०-५. [2] छा. ५-१०-६,७ [3] मनु. १-२-९. [4] तै. सं. २-६-९.४९

शोभनैर्मार्गैर्देवान्प्राप्स्यसि । पापिनामप्राप्यस्सुकृतिनां प्राप्यश्च यो लोकस्तत्र सविता देवस्त्वां प्रापयतु' इत्युक्तश्रुत्यर्थः ॥

अत्र हि स्वर्गप्राप्तिरूपफलाभ्युदयसाधनत्वेन अभिमन्त्रणपूर्वकं पशुवधस्य हिंसात्वाभावः कण्ठोक्तः । अतः अग्नीषोमीयपश्वालम्भादेः पापरूपत्वाभावेन केवलसुकृतरूपतया तत्फलस्य पूर्वमुपभुक्ततया अभुक्तफलकर्मणां फलभोगस्य [1]"तद्य इह रमणीयचरणा अभ्याशो ह" इत्यादिना वक्ष्यमाणत्वेन मध्ये फलभोगहेतुभूतकर्मणः कस्यचिदनुपन्यासादभावाच्च [2]"व्रीहियवा जायन्ते" इत्यादेः व्रीह्यादिशरीरप्राप्तिरूपमुख्यजन्मप्रतिपादनपरत्वासंभवात् भोक्त्रन्तरशरीरभूतव्रीह्यादिसंश्लेषमात्रमेव 'जायन्ते' इत्यनेन विवक्षितमिति अवश्याश्रयणीयम् ॥

एवमुत्तरत्र [2]"यो यो रेतस्सिञ्चति तद्भूय एव भवति" इत्यत्र रेतस्सिक्पुरुषसंश्लेषपर्यवसितरेतस्सिग्भावप्रतिपादनदर्शनेन [3]"अभ्रं भवति" इत्यादेः, [3]"तद्भूय एव भवति" इत्यन्तस्य प्रकरणस्य तत्तत्संश्लेषपर्यवसिततत्तद्भावप्रतिपादनपरत्वावगमेनापि तन्मध्यपतितस्य [2]"व्रीहियवा जायन्ते" इत्यादेः व्रीह्यादिसंश्लेषपरत्वमेवेति निर्णीयते । अतस्स्वर्गात्प्रत्यवरोहतः योषिद्गर्भप्रवेशनन्तरमेव शरीरप्राप्तिः । तत्पूर्वं तु तत्तत्संश्लेषमात्रमिति सिद्धम् ॥

स च संश्लेषः ब्राह्मणादिशरीरप्राप्तिहेतुभूतफलदानप्रवृत्तकर्मकृतः । अतः प्रत्यवरोहन् जीवः व्रीह्यादिसंश्लेषं प्राप्य, तल्लवनेनापक्रान्तेषु तदधिष्ठातृजीवेषु तच्चोपणपेपणपचनाभ्यवहारादिषु भूतसूक्ष्मैस्सह तत्संश्लिष्ट एव पुरुषशरीरं, ततो रेतस्संश्लेषेण स्त्रीशरीरं च प्राप्य, ब्राह्मणादिशरीररूपेण परिणतेषु भूतसूक्ष्मेषु शरीरवान् भवतीति [3]"तद्य इह रमणीयचरणा अभ्याशो ह" इत्यादिश्रुतिबलान्निर्धार्यते ॥

---

[1] छा. ५-१०-७ [2] छा. ५-१०-६,७ [3] छा. ५-१०-५.

मेघान्निष्क्रान्तस्सन्, व्रीहिभिरन्यस्य देहतां प्राप्तः ।
श्लिष्यति यत्संकल्पात् तद्ब्रह्म श्रीनिवासनाम भजे ॥ ९१ ॥

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य कलाप्रपूर्णस्य
श्रीदेशिकाचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालायां
तृतीयाध्यायस्य प्रथमः पादः ।

---

स्पष्टोऽर्थः ॥

अस्मिन् पादे [1] "भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयति" इति सूत्रे [2] "तं देवा भक्षयन्ति" इति श्रुतिवचनस्य स्वर्गलोकस्थैराजानजदेवैः स्वर्गलोकं प्राप्तस्येष्टादिकारिणस्स्वसेवकीक्रियमाणत्वपरतावर्णनेन स्वर्गसुखानुभवस्य सेवामिश्रता व्यवस्थापिता भवति । ततश्च औपाधिकसेवाया बहुतरदुःखहेतुत्वस्य राजसेवादौ दृष्टत्वेन, प्रकृते औपाधिकदेवसेवामिश्रस्य स्वर्गसुखानुभवस्य सेवाहेतुकदुःखभूयिष्ठत्वं निर्धारितं भवति ॥

कृतात्ययाधिकरणे इष्टादिकारिणस्स्वर्गसुखानुभवात् प्रतिनिवृत्तिप्रकारनिरूपणेन स्वर्गसुखस्य क्षयिष्णुत्वं दर्शितम् । तत्स्वाभाव्यापत्त्यधिकरणे स्वर्गसुखानुभवात् प्रतिनिवृत्तस्येष्टादिकारिण आकाशादिभावप्राप्तिवचनस्य आकाशादिसादृश्यप्राप्तिपरताव्यवस्थापनेन, अन्याधिष्ठिताधिकरणे इष्टादिकारिणः व्रीह्यादिजन्मप्राप्तिवचनस्य व्रीह्यादिशरीरकताप्राप्तिपरत्वं निराकृत्य भोक्त्रन्तरशरीरतापन्नव्रीह्यादिसंश्लेषमात्रपरताव्यवस्थापनेन, [3] "नातिचिरेण विशेषात्" इति सूत्रे व्रीह्यादिसंश्लेषप्राप्त्यनन्तरं [4] "अतो वै खलु दुर्निष्प्रपतरं" इति श्रुत्युक्तस्य रेतस्सिक्पुरुषजठरप्राप्तेर्दुर्लभत्वस्य प्रदर्शनेन च,

---

[1] शा मृ ३-१-७ [2] छा ५-१०-३ [3] शा मृ ३-१-२३ [4] छा ५-१०-६

बहुकालं शरीरागावस्थमेनातिचिरकालं सुखानुभवयोग्यताया अपि अभावप्रसक्तिरित्येते दोषा प्राधान्येन निरूपिताः। एतेन ईदृशबहुदोषदुष्टं स्वर्गसुखानुभवं को नाम कामयेतेति कर्मफलेषु पुरुषस्य कामना निवर्तिता भवति॥

७३॥ इति अन्याधिष्ठिताधिकरणम्॥ ६॥

---

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य कलामपूर्णस्य
श्रीदेशिकाचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालाप्रकाशे
तृतीयाध्यायस्य प्रथम. पादः॥

---

## तृतीयाध्यायस्य द्वितीयः पादः।

७॥ सन्ध्याधिकरणम्॥ १॥

पूर्वस्मिन् पादे ससरतो जीवस्य ससारदोषदर्शनेन तत्र जिहासोत्पादनाय जाग्रदवस्थायां लोकान्तरे इह च विविधदुःखानुभवो निरूपितः। इदानीं परमात्मप्राप्तीच्छोत्पादनाय परमात्मन प्राप्यत्वोपास्यत्वयोस्सिद्धये तस्य निरस्तनिखिलदोषत्वं, अनन्तकल्याणगुणाकरत्वं च निरूपयितुं द्वितीयः पाद आरभ्यते॥

तत्र ससरतो जीवस्य स्वाप्नकालिककर्मफलानुभवनिरूपणेन तदवस्थायां दोषान्निरूपयितुं, *परस्य ब्रह्मणो विचित्रशक्तियोगं दर्शयितुं* च प्रवृत्तमिदमधिकरणम्। यद्यपि जाग्रदवस्थावत् स्वप्नावस्था अपि पूर्वपाद एव निरूपणीया, तथापि तन्निरूपणस्य परमात्मविचित्रशक्तियोगनिरूपणरूपत्वेन, परमात्मन. कल्याणगुणनिरूपणपरेऽस्मिन् पाद एव तन्निरूपणमुचितमित्यभिप्रेत्य, अस्मिन् पादे तन्निरूपणं कृतम्॥

# सन्ध्ये सृष्टिराह हि ॥ ३-२-१ ॥

निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

इद सूत्रद्वय पूर्वपक्षविषयम् । उक्तसूत्रद्वयाभिप्रेतोऽयं पूर्वपक्ष— [1]"न तत्र रथा न रथयोगा न पन्थानो भवन्ति, अथ रथान् रथयोगान् पथः सृजते" इत्युपक्रम्य, "स हि कर्ता" इति श्रूयते। तत्र "रथान् रथयोगान् पथः सृजते" इति रथादिस्रष्टृत्वेनोच्यमानः पुरुषः क इति जिज्ञासायां "स हि कर्ता" इत्युत्तरवाक्ये तच्छब्देन [2]"सन्ध्यं तृतीयं स्वप्नस्थानं, तस्मिन् सन्ध्ये स्थाने तिष्ठन् एते उभे स्थाने पश्यतीदं च परं लोकस्थानं च" इत्यादिपूर्ववाक्ये प्रस्तुतं स्वप्नद्रष्टारं परामृश्य तस्य स्वाप्नार्थकर्तृत्वोक्त्या स्वप्नद्रष्टा जीव एव स्वाप्नरथादीनां स्रष्टेति निर्णीयते। एवं कठवल्ल्यां [3]"य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः" इत्यस्मिन् मन्त्रे जीवस्यैव स्वाप्नपदार्थनिर्मातृत्वमभिधीयते। अत्र हि 'कामं कामं' इत्यनेन "सर्वान् कामान् छन्दतः प्रार्थयस्व। शतायुषः पुत्रपौत्रान् वृणीष्व" इति पूर्वप्रस्तुतानां काम्यमानानां पुत्रपौत्रादीनां प्रत्यभिज्ञानात् तेषां निर्मातृत्वेनोच्यमानः पुरुषो जीवात्मैव भवितुमर्हति, तस्यैव पुत्रपौत्रादिप्रतिसम्बन्धित्वसम्भवात्। अतस्स्वाप्नपदार्थसृष्टिर्जीवकर्तृकेवेति निर्णीयते॥

न चोपकरणरहितस्य स्वप्नद्रष्टुः कथं रथादिसृष्टिरिति वाच्यम्— प्रजापतिविद्यायां जीवात्मनः सत्यसङ्कल्पत्वश्रवणेन जाग्रद्दशायां तिरोहितस्यापि सत्यसङ्कल्पत्वस्य स्वप्नदशायामाविर्भावसम्भवेन सङ्कल्पमात्रेण स्वाप्नपदार्थसृष्ट्युपपत्तेः इति ॥

मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३-२-३ ॥

[पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ४ ॥

---

[1] बृ ६-३-१०  [2] बृ ६  [3] कठ २-५-८

देहयोगाद्वा सोऽपि ॥ ५ ॥
सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ६ ॥]

अयमत्र सिद्धान्तः— स्वाप्नपदार्थसृष्टिर्जीवकर्तृकैवेत्येतन्नोपपद्यते ; जीवात्मनस्सत्यसङ्कल्पत्वस्य स्वाभाविकत्वेऽपि, तस्य संसारदशायां तिरोहितत्वेन तस्य सङ्कल्पमात्रेण सृष्ट्यनुपपत्तेः । अपि तु नित्याविर्भूतसत्यसङ्कल्पत्वादिकस्य परमात्मन एव स्वप्नद्रष्टृपुरुषकृतशुभाशुभकर्मफलदित्सया आश्चर्यभूता स्वप्ने काचिद्रथादिसृष्टिः । [1]"स हि कर्ता" इत्येतदपि [1]"न तत्र रथा न रथयोगा न पन्थानो भवन्ति" इत्यनेन सकलपुरुषानुभाव्यचिरकालस्थायिरथादीन् प्रतिषिध्य, [1]"अथ रथान् रथयोगान् पथस्सृजते" इत्यनेन स्वप्नद्रष्टृपुरुषमात्रानुभाव्यतत्कालमात्रावस्थायिरथादिसृष्टिं प्रतिपाद्य, कथमीदृशविचित्रसृष्टिकर्तृत्वमुपपद्यते इत्याकांक्षायां, विचित्रसृष्टिकर्तृत्वमुपपादयति इति प्रतीयते । ततश्च 'स' इत्यस्य स्वप्नद्रष्टृजीवपरत्वे, तस्य विचित्रसृष्टिकर्तृतायाः तदनुगुणशक्त्यादिमत्तायाश्चाप्रसिद्धतया विचित्रसृष्टिकर्तृत्वोपपादनं न घटते । 'स' इत्यस्य विचित्रसकलप्रपञ्चनिर्माणधुरन्धरतया अचिन्त्यशक्तिमत्तया च प्रसिद्धपरमात्मपरत्वे तु, तस्य अचिन्त्यशक्तिमत्तायाः प्रसिद्धतया अचिन्त्यशक्तिमहिम्ना विचित्रस्वाप्नपदार्थस्रष्टृत्वमुपपद्यत इति पूर्ववाक्यप्रस्तुतं विचित्रसृष्टिकर्तृत्वमुपपादितं भवति ॥

[2]"य एषु सुप्तेषु जागर्ति" इति पूर्वोदाहृतश्रुतिरपि परमात्मविषयैव । [3]"तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिन् लोकाः श्रितास्सर्वे तदु नात्येति कश्चन" इति तदुत्तरवाक्ये पूर्वं यच्छब्देन निर्दिष्टं स्वाप्नपदार्थनिर्मातारं तच्छब्देन परामृश्य, तस्य निरुपाधिकामृतत्वसर्वलोकाधारत्वादिपरमात्मासाधारणधर्माम्नानात् । अतः तत्र 'कामं कामं' इत्यस्य

[1] बृ. ६-३-१०. [2] कठ. २-५-८, [3] कठ. २-५-८,

सङ्कल्प्य सङ्कल्प्य इत्यर्थः। णमुलन्तं चेदं पदम्। अतस्तदैकार्थ्यादपि [1]"अथ रथान् रथयोगान् पथस्सृजते" इति श्रुतिः परमात्मविषयैव; न जीवात्मविषया, तदीयसत्यसङ्कल्पत्वस्य संसारदशायां तिरोहितत्वेन सङ्कल्पमात्रेण सृष्ट्यनुपपत्तेः॥

ननु जीवात्मनस्स्वाभाविकसत्यसङ्कल्पत्वादेस्संसारदशायां कुतस्तिरोधानमिति चेत्, परमात्मसङ्कल्पवशात् तिरोधानमिति ब्रूमः। श्रूयते हि श्वेताश्वतरोपनिषदि [2]"प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसारमोक्षस्थितिबन्धहेतुः" इति परमात्मनः क्षेत्रज्ञसंबन्धहेतुत्वं तत्प्रयोजकसंकल्पवत्त्वरूपम्। ततश्च जीवात्मनस्संसारबन्धस्य परमात्मसंकल्पप्रयोज्यत्वे तदन्तर्गतस्य सत्यसंकल्पत्वादिजीवस्वरूपतिरोधानस्यापि तत्संकल्पप्रयोज्यत्वं सिद्धम्। तच्च तिरोधानं सृष्टिदशायां शरीरात्मना परिणताचित्संबन्धेन, प्रलयदशायां सूक्ष्मावस्थापन्नाचित्संबन्धेन भवति॥

ननु सत्यसंकल्पत्वादिजीवस्वरूपस्य तिरोहितत्वेऽपि तस्य स्वप्नदशायामाविर्भावः तेन स्वाप्नपदार्थसृष्टिश्चास्त्विति चेत्, मैवम्—स्वप्ने शुभसूचकस्येवाशुभसूचकस्यापि निमित्तस्य दर्शनश्रवणेन, स्वाप्नपदार्थसृष्टेः जीवकर्तृकत्वे, जीवात्मनस्स्वाशुभसूचकनिमित्तसृष्टेस्तद्दर्शनस्य च श्रुतिसिद्धस्यानुपपत्तिप्रसङ्गात्। श्रूयते हि [3]"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने" इति, [4]"अथ स्वप्ने कृष्णं कृष्णदन्तं पश्यति, स एनं हन्ति" इति च शुभसूचकदर्शनमिवाशुभसूचकदर्शनमपि॥

अस्मिन्नधिकरणे जीवात्मनस्स्वप्नेऽनिष्टनिमित्तवस्तुदर्शनजनितभयकम्पशोकादयो दोषाः, परमात्मनः विचित्रस्वाप्नपदार्थसृष्ट्या अचिन्त्यशक्तिरूपमहिमविशेषश्च प्रतिपादिता इति॥

[1] बृ. ६-३-१०. [2] श्वे. [3] छा. ५-२-९, [4]

रथवेशन्तप्रभृतीन्यत्याश्चर्याणि देहिनां स्वप्ने ।
सृजति यदचिन्त्यशक्त्या तद्ब्रह्म श्रीनिवासनाम भजे ॥ ९२ ॥

वेशन्तः–पल्वलम् । अत्याश्चर्यत्वं स्वप्नद्रष्टृमात्रानुभाव्यत्वस्वप्नकालमात्रावस्थायित्वबाह्यवस्तुप्रतिघातानर्हत्वादिभिर्बोद्धव्यम् ॥

[1]"न तत्र रथा न रथयोगा न पन्थानो भवन्ति" इति स्वप्नविषया श्रुतिः [2]"य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः" इति श्रुत्येकार्थ्यात् तादृशश्रुत्युक्तं निर्मातारं स्वाप्नपदार्थस्रष्टारमाह । स च निर्माता [3]"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदं" इति मुमुक्षुप्राप्यतया पूर्वप्रस्तुतं श्रीनिवासापरनामधेयं विष्ण्वाख्यं परं ब्रह्मेत्यभिप्रायेणात्र यत् सृजति इत्युक्तम् ॥

७४ ॥ इति सन्ध्याधिकरणम् ॥ १ ॥

८ ॥ तदभावाधिकरणम् ॥ २ ॥

स्वप्नावस्थानिरूपणानन्तरं सुषुप्त्यवस्थानिरूपणाय प्रवृत्तमिदमधिकरणम् ॥

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ३-२-७ ॥

[अतः प्रबोधोऽस्मात् ॥ ८ ॥]

तदभावः–स्वप्नाभाव , सुषुप्तिरित्यर्थः; नाडीषु-हिताख्यासु नाडीषु, पुरीतदाख्यायां नाड्या, परमात्मनि च भवति । तच्छ्रुतेः–हितापुरीतत्परमात्मनां सुषुप्तिस्थानत्वश्रवणादिति सूत्रार्थः ॥

छान्दोग्ये सद्विद्याप्रकरणे सुषुप्तिनिरूपणावसरे [4]"तद्यत्रैतत्सुप्तस्समस्तस्संप्रसन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सृप्तो भवति"

[1] बृ ६-३-१०, [2] कठ, २-५-८, [3] कठ, ३. [4] छा. ८-६-३.

इति, बृहदारण्यके [1]"अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते । ताभिः प्रत्यवसृप्य पुरीतति शेते" इति, छान्दोग्ये [2]"यत्रैतत्पुरुष स्वपिति नाम सता सोम्य तदा संपन्नो भवति" इति च श्रूयते । अत्र प्रथमोदाहृतश्रुतौ हिताख्यनाडीनां जीवात्मनस्सुषुप्तिस्थानत्वं प्रतिपाद्यते; द्वितीयश्रुतौ पुरीतन्नाड्यास्तत्स्थानत्वं; तृतीयश्रुतौ ब्रह्मणस्तत्स्थानत्व प्रतिपाद्यते । अत्र त्रयाणां सुषुप्तिस्थानत्वश्रवणात्, अणोर्जीवस्य युगपत् त्रिषु स्थानेषु शयनासंभवात्, हितासु नाडीषु वा, पुरीतति वा, ब्रह्मणि वा शयितो भवतीति त्रयाणां विकल्प इति पूर्वपक्षः ॥

विकल्पाङ्गीकारे एकैकस्मिन् स्थाने शयनदशायामितरयोश्शयनस्थानत्वाभावप्रसङ्गः । स च न युक्तः । प्रासादखट्वापर्यङ्कन्यायेन त्रयाणां युगपत्स्थानत्वसंभवात् । तत्र प्रासादस्थानीया हिता नाम नाड्य; खट्वास्थानीया पुरीतन्नाडी; पर्यङ्कस्थानीयं ब्रह्म । अत एव सुषुप्तस्य "सत आगम्य न विदुस्सत आगच्छामहे" इति ब्रह्मणस्सकाशादुत्थानश्रुतिरुपपद्यते । अतस्त्रयाणा समुच्चय एवेति सिद्धान्त ॥

आयस्तोऽयं जीवः करणैस्सह तूलतल्प इव ।
शेते यत्र सुषुप्तौ तद्ब्रह्म श्रीनिवासनाम भजे ॥ ९३ ॥

आयस्तः—जाग्रद्दशायामिन्द्रियप्रेरणेन श्रान्त इत्यर्थः ।
शिष्टं स्पष्टम् ॥

अत्र श्रान्तस्य जीवस्य सुषुप्तिदशाया परमात्मनः तच्छ्रमापनोदनरूपगुणविशेष, जीवात्मनो ज्ञानसामान्याभावेन अचित्कल्पतारूपदोषश्च प्रतिपादितौ भवतः । अत्र सुषुप्तिस्थानतया निर्दिष्टस्य सच्छब्दवाच्यस्य

---

[1] बृ. ४-१-१९, [2] छा. ६-८-१,

ब्रह्मण ईक्षत्यधिकरणे नामरूपव्याकरणकर्तृत्वादिना प्रत्यभिज्ञापकेन श्रीनिवासाख्यदेवताविशेषरूपताया व्यवस्थापितत्वात्, तदभिप्रायेणात्र यत्र शेते इत्युक्तम् ॥

७९ ॥ इति तदभावाधिकरणम् ॥ २ ॥

---

९ ॥ कर्मानुस्मृत्यधिकरणम् ॥ ३ ॥

सुप्तत्यनन्तरमुत्थितस्य सुप्तादन्यत्वमाशंक्य तत्परिहाराय प्रवृत्तमिदमधिकरणम् ॥

छान्दोग्ये सुप्तस्य [1]"सता सोम्य तदा संपन्नो भवति" इति सच्छब्दितब्रह्मसंपत्तिः श्रूयते। सा च संपत्तिर्लयरूपेति "स्वमपीतो भवति" इति तत्रत्यश्रुत्याऽवगम्यते। एवं [2]"तं न कश्चन पाप्मा स्पृशति" इति सुप्तस्य सर्वपाप्मास्पर्शश्च श्रूयते। अतस्सर्वकर्मविनिर्मोकपूर्वकं ब्रह्मणि लयप्रतिपादनात् सुप्तस्य मुक्तताप्रतीतेस्तस्मादन्य एवोत्तिष्ठतीति पूर्वपक्षे सिद्धान्तमाह—

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ इति । ॥ ३-२-९ ॥

तुशब्दः पक्षव्यावर्तकः। यस्सुप्तः स एव उत्तिष्ठति। तत्र हेतुमाह कर्मेत्यादिना। कर्म—पुण्यपापरूपं सुप्तभिक्तं कर्म, अनुस्मृतिः—'योऽहं सुप्तस्स एवाहमुत्थित' इति प्रत्यभिज्ञा, शब्दः—"स इह व्याघ्रो वा सिंहो वा" इत्यादिश्रुतिः, विधिः—मोक्षार्थब्रह्मोपासनविधिः, एतेभ्यः सुप्तस्यैव स्वापादुत्थानमिति निश्चीयत इति सूत्रार्थः ॥

---

[1] छा. ६-८-१.  [2]

अयं भाव —सुपुप्तेन सुपुप्ते प्राक् कृतानामभुक्तफलाना पुण्यपापरूपकर्मणा फलानुभव ब्रह्मोपासनं वा विना नाशो न सभवति। स्वापादुत्थितस्य योऽहं सुप्तस्स एवाहं प्रबुद्धोऽस्मीति प्रत्यभिज्ञा च भवति। [1]"त इह व्याघ्रो वा सिंहो वा" इत्यादिश्रुतिरपि यादृशरूपस्सुपुप्तो भवति, सुपुप्तेरनन्तर तादृशरूप एव भवतीत्याह। सुपुप्तस्य सुपुप्तिमात्रेण मुक्तत्वे मुक्तिप्राप्तये ब्रह्मोपासनविधिवैयर्थ्यं च भवति। अतस्सुपुप्तस्य मुक्तत्वाभावात् स एव प्रबुद्ध्यत इति निश्चीयते ॥

सुपुप्तस्य [2]"नाह खल्वयमेव सप्रत्यात्मान जानाति" इति ज्ञानसामान्याभाव, [2]"नाहमत्र भोग्य पश्यामि" इति सुपुप्तेर्भोग्यत्वाभावश्च श्रूयते। मुक्तस्य तु [3]"सर्वं ह पश्य पश्यति सर्वमाप्नोति सर्वश, मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके" इत्यादिश्रुतिभिस्सर्वज्ञत्वा ब्रह्मगुणानुभव इत्यादिक प्रतिपाद्यते। अतो मुक्तेस्सुपुप्तयपेक्षया अत्यन्तवैलक्षण्यप्रतीत्या सुपुप्तिर्न मुक्तिरिति निश्चीयते। सुपुप्तस्य पाप्मास्पर्शश्रुतिस्तु तदानीं कर्मणा फलप्रदानाभावमात्रपरतयोपपद्यते। सुपुप्तौ ब्रह्मसपत्तिश्रुतिरपि जाग्रद्दशायामिन्द्रियादिप्रेरणेन श्रान्तस्य श्रमनिवृत्तये विश्रमस्थानप्राप्तिमात्ररूपब्रह्मप्राप्तिप्रतिपादनपरा। अतस्सुपुप्तस्य मुक्तत्वाभावात् स एव स्वापादुत्तिष्ठतीति।

यत्र शयनेन जीवस्स्वास्थ्यं समवाप्य भूयोऽपि।
उत्तिष्ठति तल्पादिव तद्ब्रह्म श्रीनिवासनाम भजे ॥ ९४ ॥

स्वास्थ्यं—श्रमनिवृत्ति। शिष्ट स्पष्टम् ॥

पूर्वाधिकरणे श्रीनिवासस्यैव सुपुप्तिस्थानत्वेन निर्धारितत्वात् तस्मादेव उत्थानमित्यभिप्रायेण यस्मादुत्तिष्ठति इत्युक्ति ॥

७६ ॥ इति कर्मानुस्मृत्यधिकरणम् ॥ ३ ॥

---

[1] छा ६-१०-२ [2] छा ८-११ २ [3] छा. ७-२६-२

१० ॥ मुग्धाधिकरणम् ॥ ४ ॥

प्रसङ्गान्मूर्छावस्थां निरूपयितुं प्रवृत्तमिदमधिकरणम् ॥

# मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ ३-२-१० ॥

मुग्धे-मूर्छिते, या अवस्था, सा अर्धसंपत्तिः-अर्धमरणरूपा; परिशेषात्-जाग्रत्स्वप्नसुषुप्त्यवस्थास्वनन्तर्भावादिति सूत्रार्थः ॥

भावः। जाग्रत्स्वप्नयोः ज्ञानसद्भावात्, मूर्छायां ज्ञानाभावात्, मूर्छा न जाग्रत्स्वप्नयोरन्तर्भवति। मूर्छाया अभिघातानिष्टश्रवणादिमूलत्वात् सुषुप्तेरतथात्वात्, न सुषुप्तावन्तर्भावः। मूर्छायां अल्पप्राणसद्भावात् मरणे प्राणस्यात्यन्तमभावात्, मूर्छा न मरणेऽन्तर्भवति। अतो जाग्रदाद्यवस्थाभ्योऽन्या मूर्छावस्था ॥

यत्कारितासु जाग्रत्स्वप्नसुषुप्त्याद्यवस्थासु।
मूर्छाऽन्याभ्यो भिन्ना तद्ब्रह्म श्रीनिवासनाम भजे ॥ ९५ ॥

अर्थः। यत्संकल्पकारितासु जाग्रदाद्यवस्थासु मूर्छावस्था जाग्रदादिभ्योऽन्या तद्ब्रह्म इति पूर्ववत्। अस्याभिप्रायस्सूत्रव्याख्यानेन विवृतः ॥

*अत्र श्वेताश्वतरश्रुतिमनुसृत्य जाग्रदाद्यवस्थानां श्रीनिवासाख्यब्रह्म*कारितत्वोक्तिरिति द्रष्टव्यम्। अत्र मूर्छाया अर्धमरणत्वोक्त्या जीवस्य मूर्छायां महान् क्लेशो निरूपितो भवति ॥

७७ ॥ इति मुग्धाधिकरणम् ॥ ४ ॥

## ११ ॥ उभयलिङ्गाधिकरणम् ॥ ५ ॥

एवं जीवात्मनो जाग्रत्स्वप्नसुषुप्तिमूर्छाद्यवस्थाहेतुभूततत्तच्छरीरयोगेन तास्ववस्थासु सुखदु खरूपफलानुभवो निरूपितः। इदानीं परमात्मनो जाग्रदाद्यवस्थाहेतुभूतजीवाधिष्ठितशरीरयोगे सत्यपि तत्तच्छरीरसंबन्धकृतसुखदु:खाद्यपुरुषार्थसंबन्धलेशाभावं कल्याणगुणयोगं च निरूपयितुं प्रवृत्तमिदमधिकरणम् ॥

यद्यपि [1]"संभोगप्राप्तिरिति चेन्न वैशेष्यात्," [2]"भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्" इति सूत्रयोः परमात्मनो जीवाधिष्ठितदेहसंबन्धे सत्यप्यकर्मवश्यतया न सुखदु:खादिरूपकर्मफलस्पर्श इति निरूपितमेव, तथापि मांसशोणितादिमयदेहसंबन्धाज्जीवात्मनीव तदन्तर्यामितया तस्मिन् देहेऽवस्थिते परमात्मन्यपि तद्देहसंबन्धप्रयुक्तापुरुषार्थयोगोऽवर्जनीय । न च जीवात्मनि पुण्यपापरूपकर्मसंबन्धप्रयुक्तोऽपुरुषार्थयोग न देहसंबन्धप्रयुक्तः। अतोऽकर्मवश्ये परमात्मनि सत्यपि देहसंबन्धे नापुरुषार्थयोगप्रसङ्ग इति वाच्यम्। कर्मणा देहसंबन्धोत्पादनद्वारा अपुरुषार्थहेतुत्वस्य [3]"देहयोगाद्वा सोऽपि" इति सन्ध्याधिकरणसूत्रे व्यवस्थापितत्वेन देहस्य स्वतो हेयत्वाभावे कर्मभिरपुरुषार्थजनने देहसंबन्धापेक्षावैयर्थ्यप्रसङ्गेन देहस्य स्वतो हेयताया अवश्याश्रयणीयत्वात्। न च कर्मकृतस्यैव देहसंबन्धस्यापुरुषार्थहेतुत्वं, न स्वेच्छाकृतस्य। ततश्च प्रकृते ईश्वरस्य जीवाधिष्ठितदेहसम्बन्धस्य स्वेच्छाकृतत्वेन नापुरुषार्थापादकतेति वाच्यम्—स्वेच्छाकृतस्यापि देहसंबन्धस्य वस्तुस्वभावप्रयुक्तापुरुषार्थहेतुतताया दुर्वारत्वात्। न हि पूयशोणितादिगर्तमज्जनं स्वेच्छाकृतमपि नापुरुषार्थहेतुर्भवतीति पूर्वपक्षावतारात्, तमिमं पूर्वपक्षं परिहर्तुमधिकरणारम्भ ॥

---

[1] शा.सू १-२-२२. [2] शा. सू. २-१-१४. [3] शासू ३-२-५.

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ [३-२-११ ॥

भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥
अपि चैवमेके ॥ १३ ॥
अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥
प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥
आह च तन्मात्रम् ॥ १६ ॥
दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥
अत एवोपमा सूर्यकादिवत् ॥ १८ ॥
अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥
वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ॥ २० ॥
प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २१ ॥
तदव्यक्तमाह हि ॥ २२ ॥
अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २३ ॥
प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २४ ॥
अतोऽनन्तेन तथा हि लिङ्गम् ॥ २५ ॥

**परस्य**-गुहासूत्रोक्तयोरात्मनोरन्यतरस्य परमात्मनः, **स्थानतोऽपि**–तदितरजीवाधिष्ठिततद्पुरुषार्थहेतुभूततत्तद्देहेष्ववस्थानादपि, **न** अपुरुषार्थयोग इति प्रकरणसिद्धम्। पूर्वाधिकरणेषु जीवात्मनः देहसंबन्धकृतापुरुषार्थयोगनिरूपणस्यैव प्रकृतत्वात्। ततश्च परमात्मनस्तत्तद्देहेष्ववस्थानादपि अपुरुषार्थयोगो न भवतीत्यर्थः पर्यवसितः। तत्र हेतुमाह **उभयलिंगं सर्वत्र हि**। हि-यतः, 'परं' इति विभक्तिविपरिणामेनानुषज्यते। परं ब्रह्म, सर्वत्र-सर्वासु श्रुतिस्मृतिषु, उभयलिङ्गं-हेयप्रत्यनीकत्वकल्याणैकतानत्वरूपासाधारणधर्मविशिष्टं प्रतिपाद्यत इति सूत्रार्थः ॥

भावः । [१]"अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः" इत्यादिश्रुतिषु, [२]"परः पराणां सकला न यत्र क्लेशादयस्सन्ति परावरेशे" इत्यादिस्मृतिषु च परमात्मनस्स्वाभाविकहेयप्रत्यनीकत्वकल्याणगुणाकरत्वरूपासाधारणधर्मप्रतिपादनेन हेयप्रत्यनीके तस्मिन् देहसंबन्धो नापुरुषार्थापादनाय भवति । अपहतपाप्मत्वं हि पुण्यपापरूपकर्मफलास्पृष्टत्वम् । पुण्यपापसजातीयकर्मणां स्वस्मिन्नपुरुषार्थापादनशक्तिविघटकशक्तिमत्त्वपर्यवसितम् । इदमेव च हेयप्रत्यनीकत्वम् । ईदृशशक्तिमति परमात्मनि हेयभूतदेहसंबन्धस्य नापुरुषार्थापादकतासम्भवः ॥

यत्तु स्वेच्छाकृतस्यापि हेयसम्बन्धस्य वस्तुस्वभावप्रयुक्तमपुरुषार्थापादकत्वमवर्जनीयमिति, तन्न; हेयतायाः कर्मकृतत्वेन वस्तुस्वभावप्रयुक्तत्वाभावात् । सर्वस्यैव वस्तुनस्संसारदशायामनुकूलत्वं प्रतिकूलत्वं वा न वस्तुस्वभावप्रयुक्तम् । तथात्वे सर्वस्य सर्वदा सर्वमनुकूलमेव वा प्रतिकूलमेव वा स्यात्; न चैवं दृश्यते । अतस्सर्ववस्तूनां संसारदशायामनुकूलत्वप्रतिकूलत्वयोः कर्मकृतत्वेनाकर्मवश्यस्य परमात्मनस्सर्वमपि स्वविभूतित्वेनानुकूलमेवेति न तस्य परमात्मन्यपुरुषार्थापादकतेति ॥

ननूक्तलक्षणस्य अपहतपाप्मत्वस्य जीवात्मनोऽप्यविशिष्टतायाः प्रजापतिवाक्यसिद्धत्वेऽपि देहसम्योगदशायां तस्य तिरोधानेन जीवात्मनो यथाऽपुरुषार्थसम्बन्धस्तथा परमात्मनोऽपि देहसम्बन्धदशायां तस्य तिरोधानेनापुरुषार्थसम्बन्धस्यादिति चेत्, मैवम्—कर्मकृतस्यैव देहसम्बन्धस्य स्वरूपतिरोधायकतया ऐच्छिकस्य तस्य तिरोधायकत्वाभावेन परमात्मनः पृथिव्यादिदेहसम्बन्धस्य ऐच्छिकत्वेन उक्तदोषाभावात् ॥

अन्तर्यामिब्राह्मणे हि [३]"यः पृथिव्यां तिष्ठन्" इत्यादिना परमात्मनः पृथिव्यादितत्तद्देहेषु तत्तन्नियमनायान्तर्यामितयाऽवस्थानमुक्त्वा, प्रतिस्थानं

१ २ ३ बृ. ५-७-२२.

[1] "स त आत्माऽन्तर्याम्यमृतः" इत्यपुरुषार्थलेशासम्स्पर्शरूपामृतत्वोक्त्या परमात्मनस्तत्तद्देहसम्बन्धस्यापुरुषार्थापादकताऽभावोऽवगम्यते ॥

अपि च [2] "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति" इत्यस्मिन् मन्त्रे जीवात्मपरमात्मनोरेकस्मिन्देहेऽवस्थानेऽपि, जीवात्मनस्तद्देहसम्बन्धकृतकर्मफलभूतसुखदुःखानुभवः; परमात्मनस्तु तद्देहसम्बन्धप्रयुक्तसुखदुःखभोगाभावः, अतिरोहितसर्वज्ञत्वादिगुणवत्तया द्योतमानत्वं च स्पष्टमेवाभिधीयते ॥

ननु परमात्मनोऽपि कर्मवश्यत्वं श्रुतिषु प्रतीयते। "वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यश्शरदि वैश्यः" इत्यादिषु ब्राह्मणादिशरीरवतामाधानविधेः, "ब्राह्मणो न सुरां पिबेत्" इत्यादिषु तेषां सुरापानादिनिषेधस्य च प्रतिपादनात्, [3] "सेयं देवतैमास्तिस्रो देवता अनेन जीवेनानुप्रविश्य नामरूपे व्याकरोत्" इति श्रुतौ अनुप्रवेशपूर्वकनामरूपव्याकरणाभिधानेन जीवात्मन इव परमात्मनोपि तत्तच्छरीरानुप्रवेशकृततत्तच्छरीरवत्तासिद्ध्या उक्तविधिनिषेधविषयताप्रतीतेः; विधिनिषेधविषयत्वमेव हि कर्मवश्यत्वमिति चेत्, मैवं—[4] "आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति श्रुतौ परमात्मनो नामरूपनिर्वाहकत्वेन प्रधानतया नामरूपकार्यास्पृष्टत्वरूपरूपरहिततुल्यत्वप्रतिपादनेन जीवात्मवन्नामरूपवत्त्वेऽपि रूपवत्ताप्रयुक्तविधिनिषेधविषयत्वकृतसुखदुःखाद्यपुरुषार्थसम्बन्धाभावप्रतीतेः। उक्तश्रुतौ हि यत्—ब्रह्म, ते अन्तरा—नामरूपाभ्यामस्पृष्टं इति परमात्मनो नामरूपाभ्यामस्पृष्टत्वं प्रतिपाद्यते। तच्च रूपवत्ताप्रयुक्तविधिनिषेधविषयत्वकृतसुखदुःखाद्यपुरुषार्थवत्त्वाभावः। अतः परमात्मन उक्तश्रुत्या विधिनिषेधविषयत्वाभावास्सिद्धः। इत्थं च "ब्राह्मणो यजेत"

[1] बृ. ५-७-२२. [2] [3] छा. ६-३-३. [4]

इत्यादिश्रुतौ ब्राह्मणादिशब्दा न परमात्मपर्यन्तवाचिनः, परमात्मनि विधिनिषेधयोरन्वयबाधात्; अपि तु तत्तच्छरीरविशेषविशिष्टजीवात्ममात्रवाचिनः; [1] "यस्य पृथिवी शरीरं" इत्यादौ पृथिव्यादिशब्दवत्। तत्र हि पृथिव्यादिशब्दानां परमात्मपर्यन्तवाचित्वे यस्य परमात्मनश्शरीरमित्यस्यान्वयानुपपत्त्या पृथिवीमात्रपरत्वमवश्यमाश्रयणीयम्। अतः परमात्मनस्तत्र तत्रान्तर्यामिरूपेणावस्थितत्वेऽपि तत्तत्सम्बन्धकृतदोषासम्स्पृष्टत्वं सिद्धम्॥

ननु [2] "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादौ परमात्मनो ज्ञानस्वरूपत्वप्रतिपादनात् ज्ञानस्य ज्ञानान्तराश्रयत्वासम्भवात् परमात्मनस्सर्वज्ञत्वाद्यनन्तकल्याणगुणवत्त्वमप्रामाणिकमिति चेत्, न—[2] "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिभिः परमात्मनः ज्ञानस्वरूपत्वप्रतिपादनवत् [3] "यस्सर्वज्ञस्सर्ववित्" इत्यादिभिस्सर्वज्ञत्वादिगुणानामपि प्रतिपादनात् ज्ञानस्वरूपस्यापि ब्रह्मणो ज्ञानाश्रयत्वेऽनुपपत्तिविरहात्, [2] "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादौ ज्ञानस्वरूपताप्रतिपादनेऽपि गुणान्तराणामनिषेधात्, [3] "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च," [4] "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः" इत्यादिस्मृतिषु च कृत्स्नासु अनन्तगुणवत्त्वप्रतिपादनाच्च परमात्मनो निरस्तनिखिलदोषत्वस्यानन्तकल्याणगुणवत्त्वस्य च प्रामाणिकताया दुरपह्नवत्वात्॥

[5] "आकाशमेकं हि यथा घटादिषु पृथग्भवेत्। तथाऽऽत्मैकोऽप्यनेकस्थो जलाधारेष्विवांशुमान्॥" [6] "एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इत्यादिशास्त्रेषु आकाशवत् जलप्रतिबिम्बितसूर्यादिवच्च तत्र तत्र स्थानेषु स्थितोऽपि परमात्मा तत्तद्गतदोषैर्न स्पृश्यते इत्यभिधानादपि परमात्मनो निर्दोषत्वं निर्णीयते॥

---

[1] बृ. ५-७-२२. [2] तै. आ. १. [3] मु. १-१-९. [4] गी. १५-१७.
[5] याज्ञ. १४४. [6] अमृतबिन्दूप. १२.

ननु जलप्रतिबिम्बितसूर्यस्य वस्तुतो जलेऽनवस्थानात् तद्गतदोषास्पृष्टत्वमस्तु; परमात्मनस्तु तत्तत्स्थानेषु वस्तुतः स्थितत्वात् कथं जलप्रतिबिम्बितसूर्यदृष्टान्तेन तत्तत्स्थानगतदोषास्पृष्टत्ववर्णनोपपत्तिरिति चेत्, उच्यते· वस्तुतस्तत्तत्स्थानगतदोषासम्स्पर्शे देशविप्रकर्षवत् स्वभावविप्रकर्षोऽपि कारणम् । तत्र देशविप्रकर्षात् जलप्रतिबिम्बितसूर्ये जलगतदोषासंस्पर्शः । आकाशे तु निर्लेपे स्वभावविप्रकर्षात् घटकरकादिस्थानसम्बन्धेऽपि, तद्गतवर्तुलत्वादिदोषासंस्पर्शः । तद्वत्, प्रकृते हेयप्रत्यनीकस्य परमात्मनस्तत्तत्स्थानसंबन्धेऽपि स्वभावविप्रकर्षात् तत्तत्स्थानगतवृद्धिह्रासादिदोषासंस्पर्शः इति दर्शयितुमत्र दृष्टान्तद्वयोपादानम् । अतो नानुपपत्तिः ॥

ननु बृहदारण्यके [1]"द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च" इत्यादिना ब्रह्मणो मूर्तामूर्तात्मकरूपद्वयवत्त्वं, [2]"तस्य ह वा एतस्य रूपं" इत्यादिना आकारविशेषवत्त्वं च प्रतिपाद्य, [2]"अथात आदेशो नेति नेति" इत्यनन्तरवाक्ये 'इति न इति न' इत्यत्र इतिशब्दाभ्यां पूर्वोक्तं प्रकारद्वयं परामृश्य, "नेति नेति" इति तत्प्रतिषेधात् ब्रह्मणो निर्विशेषत्वे श्रुतेस्तात्पर्यं प्रतीयते । तत्कथं सर्वज्ञत्वाद्यनन्तगुणवत्त्वं ब्रह्मण उच्यत इति चेत्, मैवम्—[3]"न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्" इत्यादिश्रुतिभिर्ब्रह्मणः प्रत्यक्षागोचरत्वाभिधानेन [4]"यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति, [5]"भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप" इति श्रुतिस्मृतिषु भक्त्येकगोचरताप्रतिपादनेन च ब्रह्मणो मूर्तामूर्तात्मकरूपद्वयवत्त्वस्य प्रत्यक्षादिप्रमाणान्तरप्राप्तयसंभवेन अनुवादायोगात् विधेरेव वक्तव्यतया [6]"नेति नेति" इत्यस्य तत्प्रतिषेधपरत्वे, स्वेन

[1] बृ ४-३-१. [2] बृ ४-३-६. [3] तै नारा. १-१०. [4] मु. ३-२-३.
[5] गी ११-५४ [6] बृ ४-३-६

विहितस्य स्वेनैव प्रतिषेधेन श्रुतेरुन्मत्तत्वापत्त्या [1] "नेति नेति" इत्येतत्र प्रकृतरूपद्वयनिषेधपरं; अपि तु रूपद्वयवत्त्वाभिधानेन रूपद्वयमात्रवत् ब्रह्म इति ब्रह्मप्रकारस्य इयत्ताप्रतीत्या तत्प्रतिषेधाय प्रवृत्तमिदं [1] "अथात आदेशो नेति नेति" इति वाक्यम् । ततश्चात्र 'इति न' इत्यनेन प्रकृता प्रकारेयत्ता प्रतिषिध्यते । ततश्च ब्रह्म एतावन्मात्रवत्त इति तदर्थोऽवश्या-श्रयणीयः । [1] "न ह्येतस्मादिति, नेत्यन्यत्परमस्ति" इत्यादिवाक्यशेषादपि [1] "नेति नेति" इति निषेधस्योक्तार्थपरत्वमवगम्यते । 'इति न' इत्यनेन एतावन्मात्रवत्त इत्युक्तं यद्ब्रह्म, एतस्माद्ब्रह्मणः परं--स्वरूपतो गुणतो विभूति-तश्च उत्कृष्टमन्यन्नास्ति इति हि तदर्थः । ततश्चात्र प्रकृताद्ब्रह्मण उत्कृष्ट-स्यान्यस्य प्रतिषेधात् ब्रह्मणस्सर्वप्रकारेण सर्वोत्कृष्टत्वं प्रतिपादितं भवति । [1] "अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यं" इति ब्रह्मणो नामधेयविशेषमुक्त्वा, तन्निर्वचनेनापि ब्रह्मणस्सर्वोत्कृष्टत्वप्रतिपादने वाक्यतात्पर्यं गम्यते। 'प्राणाः' इति प्राणसाहचर्याल्लक्षणया जीवा उच्यन्ते। ते, सत्यं--निर्विकारस्वरूपाः, तेषामचेतनवत्स्वरूपविकाराभावात् । तेषा-मेष सत्यं---एषः--परमात्मा, तेभ्यः--जीवात्मभ्योऽपि, सत्यं--स्वरूपस्वभा-वयोर्निर्विकारः । जीवात्मनां स्वरूपाविकाराभावेऽपि, तदीयधर्मभूतज्ञानस्य संकोचविकासरूपविकारवत्तया स्वभावविकारवत्त्वमस्ति । परमात्मनस्तु उभयविधविकाराभावात् तेभ्योऽपि परमात्मा उत्कृष्ट इत्यर्थः ॥

अपि च [2] "तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च" इत्यादिश्रुतिषु साक्षात्कृतपरब्रह्मस्वरूपाणां वामदेवादीनां ब्रह्म-साक्षात्कारे ज्ञानत्वानन्दत्वादीनामिव मनुसूर्यादिप्रपञ्चवैशिष्ट्यस्यापि विषय-त्वोक्तेः तेषामिव प्रपञ्चवैशिष्ट्यस्यापि तत्त्वसाक्षात्कारेण साक्षात्कृतत्वात् भ्रान्तिसिद्धत्वोक्त्ययोगेन पारमार्थ्यस्यावश्यवक्तव्यत्वादपि [1]"अथात आदेशो

---

[1] बृ. ४-३-६. [2] बृ. ३-४-१०.

नेति नेति'' इत्यस्य ब्रह्मणि प्रपञ्चवैशिष्ट्यनिषेधपरत्ववर्णनमयुक्तम् । अतो ब्रह्मणो निरस्तनिखिलदोषत्वमनन्तकल्याणगुणाकरत्वं च प्रामाणिकमेवेति सिद्धम् ॥

यत्संबन्धाज्जीवे जायन्ते जाग्रदादयो दोषाः ।
तेन शरीरेण समं सत्यपि योगे न ते दोषाः ॥ ९६ ॥

यस्मिन्संबध्यन्ते हेयानां प्रतिभटस्वभावतया ।
कल्याणगुणतयाऽपि च तद्ब्रह्म श्रीनिवासनाम भजे ॥ ९७ ॥

अर्थः । यत्संबन्धात् —यस्य शरीरस्य संबन्धादित्यर्थः । हेयानां प्रतिभटस्वभावतया इति स्वस्मिन् दोषाणामसंबन्धापादकस्वाभाविकशक्तिमत्तयेत्यर्थः । कल्याणगुणतया इति कल्याणाः—स्वस्मिन् स्वाश्रितेषु च दोषनिवर्तनसमर्था गुणाः यस्य, तथाभूततयेत्यर्थः ॥

यद्यपि ब्रह्मणस्स्वस्मिन् दोषासंबन्धे हेयप्रत्यनीकत्वस्योपयुक्तत्वेऽपि कल्याणगुणवत्त्वस्य तत्रानुपयोगात् तदुपादानमनर्थकमिव भाति, तथापि परमात्मसंबन्धिनां ज्ञानशक्त्यादिगुणानां स्वस्मिन् स्वाश्रितेषु च दोषनिवर्तनोपयोगित्वात् तस्याप्युपादानमिति द्रष्टव्यम् । अत्र हेयप्रतिभटत्वस्य [1] "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसंकल्प " इति श्रुतिसिद्धतया तस्या श्रुतौ अपहतपाप्मत्वादिगुणाष्टकविशिष्टतयाऽभिधीयमान आत्मा [2] "एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण " इति श्रुतौ नारायण एवेति प्रत्यभिज्ञायमानतया, श्रीनिवासापरनामधेयनारायण एवायं "अपहतपाप्मा" इत्यादि- "सत्यसङ्कल्प" इत्यन्तेनोक्त परमात्मेति निर्धार्यते इति ॥

७९ ॥ इति उभयलिङ्गाधिकरणम् ॥ ५ ॥

---

[1] छा. ८-१-५. [2] सुबाल.

भावप्रतिपादनात्, तस्य च श्रीनिवासापरनामधेयनारायणविषयकत्वस्य पूर्वमुपपादितत्वात् यथांशभूतं इत्युक्तम् ॥

७९ ॥ इति अहिकुण्डलाधिकरणम् ॥ ६ ॥

---

## १२ ॥ पराधिकरणम् ॥ ७ ॥

एवमुभयलिङ्गाधिकरणे जगत्कारणस्य श्रीनिवासापरनामधेयस्य ब्रह्मण प्राप्यत्वोपास्यत्वयोस्सिद्धये निरस्तनिखिलदोषत्व, समस्तकल्याणगुणाकरत्व चोभय निरूपितम् । पूर्वाधिकरणे निरस्तनिखिलदोषत्व च स्थिरीकृतम् । इदानीं प्राप्यत्वोपयोगिगुणपौष्कल्यस्य स्थिरीकरणाय प्रवृत्तमिदमधिकरणम् ॥

**परमतस्सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥**
**॥ ३-२-३० ॥**

इद पूर्वपक्षसूत्रम् । सेतुव्यपदेशात्, उन्मानव्यपदेशात्, संबन्ध व्यपदेशात्, भेदव्यपदेशाच्च । अतः–पूर्वप्रकृतात् श्रीनिवासापरनामधेयात् परस्माद्ब्रह्मण , परं-उत्कृष्ट, किञ्चिदस्तीति गम्यते इति सूत्रार्थ ॥

अय भाव—[1] "य आत्मा स सेतुर्विधृतिरेषा लोकानामसभेदाय" इति श्रुतौ जगत्कारणस्य परमात्मनस्सेतुत्व व्यपदिश्यते । तेन लोके यथा सेतुस्तीरान्तरप्रापक , तद्वत् अय परमात्मा वस्त्वन्तरप्रापक इति लाभात् तेन प्रापणीय किञ्चित् ततोऽप्युत्कृष्टमस्तीति लभ्यते । [1] "एत सेतु तीर्त्वाऽन्धस्सन्ननन्धो भवति" इति श्रुत्यन्तरे अस्य परमात्मनो जगत्कारण-स्यातिक्रमणीयत्व च श्रूयते । तेन चैनमतिक्रम्याधिगन्तव्य किञ्चिदस्तीति लभ्यते ॥

---

1 ८४१२

एवं [1] "चतुष्पाद्ब्रह्म" [2] "षोडशकलं" इति श्रुत्यन्तरे अस्य परमात्मन. प्रत्येकं कलाचतुष्टयविशिष्टपादचतुष्टयवत्त्वेन परिमितत्वं प्रतिपाद्यते। तेनास्य परमात्मनः परिमितत्वव्यपदेशेनापरिमितमन्यदस्तीति लभ्यते ॥

एवं [3] "अमृतस्य परं सेतुं दग्धेन्धनमिवानलं" इति श्रुत्यन्तरे अमृतशब्दितस्य कस्यचित्, परमात्मनश्च, प्राप्यप्रापकभावरूपस्संबन्धसेतुशब्देन व्यपदिश्यते। तेन प्राप्यान्तरमस्तीति लभ्यते ॥

एवं [4] "तेनेदं पूर्णं पुरुषेण सर्वं" इति परमात्मानमुपक्रम्य, [5] "ततो यदुत्तरतरं तदरूपमनामयं य एतद्विदुरमृतास्ते भवन्ति" इति श्रूयते। अत्र "ततो यदुत्तरतरं" इत्यत्र परमात्मानं तच्छब्देन परामृश्य तस्मादप्युत्कृष्टस्य कस्यचित्प्रतिपादनाच्च प्राप्यवस्तुन· परमात्मतो भेदः प्रतीयते ॥

तस्मादुक्तैर्हेतुभि. परमकारणात्परस्माद्ब्रह्मणः श्रीनिवासापरनामधेयादुत्कृष्टं किञ्चित्तत्त्वमस्तीति ॥

सामान्यात्तु ॥ ३-२-३१ ॥
बुद्ध्यर्थः पादवत् ॥ ३२ ॥
स्थानविशेषात्प्रकाशादिवत् ॥ ३३ ॥
उपपत्तेश्च ॥ ३४ ॥
तथाऽन्यप्रतिषेधात् ॥ ३५ ॥
अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३६ ॥

एतानि सिद्धान्तसूत्राणि। तेषामयं भावः—[6] "य आत्मा स सेतुः" इत्यत्र, लोके यथा सेतुरुभयपार्श्ववर्तिनामसङ्करकरः, तथाऽयं परमात्मा सर्वस्य जगतोऽसङ्कीर्णत्वेन स्थापक इत्यभिप्रायेण सेतुव्यपदेशः। इत्थं च

[1] छा. ३-१८-२. [2] प्रश्न. ६-१ [3] श्वे. ६-१९. [4] श्वे. ३-९.
[5] श्वे. ३-१०. [6] छा. ८-४-१.

सेतुसादृश्यं [1] "विधृतिरेषां लोकानामसम्भेदाय" इत्यनन्तरवाक्येनैव स्फुटीकृतम्। [1] "एतं सेतुं तीर्त्वा" इत्यत्र 'तीर्त्वा' इत्येतत् 'वेदान्तं तरति' इतिवत् प्राप्त्यर्थकम्। अतस्सेतुव्यपदेशस्योक्तरीत्याऽन्यथासिद्धत्वेन, न तावता प्रकृतात्परस्माद्ब्रह्मणः प्राप्यवस्त्वन्तरसिद्धिः॥

यथाऽपरिच्छिन्नस्य ब्रह्मणो [2] "वाक्पादः प्राणः पादः" इत्यादिना वागादीनां पादत्वव्यपदेशस्तथोपासनार्थः, तथाऽपरिच्छिन्नस्य ब्रह्मणश्चतुष्पात्त्वोक्तिरुपासनार्था। यथा सर्वतो विस्तृतस्सूर्यालोकादिर्जालकाद्युपाधिसंबन्धेन परिच्छिन्नो गृह्यते, तद्वत् अपरिच्छिन्नस्यापि ब्रह्मण उपाधिना परिच्छिन्नत्वेनानुसन्धानसंभवात्। अतश्चतुष्पात्त्वोक्तेरुक्तरीत्याऽन्यथासिद्धत्वेन नानुन्मितवस्त्वन्तरगमकता॥

[3] "अमृतस्यैष सेतुः" इत्यादेरपि ब्रह्मणस्स्वप्राप्तौ स्वस्यैवोपायतापरतयाऽप्युपपत्तेः, तेनापि न प्राप्यान्तरसिद्धिः॥

[4] "यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वं" इति पूर्वमन्त्रे परस्माद्ब्रह्मण उत्कृष्टस्यान्यस्य वस्तुनः प्रतिषेधात् [5] "ततो यदुत्तरतरं" इत्यस्य परस्माद्ब्रह्मण उत्कृष्टतरं यत् इति नार्थः; तथा सति पूर्वमन्त्रविरोधप्रसङ्गात्; अपि तु जगत्कारणात्परस्माद्ब्रह्मण उत्कृष्टतरं यतो नास्ति, ततः—तस्माद्धेतोः, उत्तरतरं-सर्वोत्कृष्टं जगत्कारणं यद्ब्रह्म, तत् अरूपमनामयं—कर्मकृतरूपतत्कृतदुःखसंबन्धविरोधि। एतद्ब्रह्म ये विदुः ते अमृता भवन्तीति श्रुत्यर्थः। एवं सेत्वादिव्यपदेशस्यान्यथासिद्धत्वेन न तेन परस्माज्जगत्कारणाद्ब्रह्मण उत्कृष्टवस्त्वन्तरसिद्धिः। किञ्च [6] "यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः

[1] छा. ८-४-१. [2] छा. ३-१८-२ [3] मु. २-२-५. [4] श्वे. ३-९.
[5] श्वे ३ १० [6] प

स्थितः'' इत्यादिषु परेण ब्रह्मणा स्वेतरसमस्तवस्तूनां नियन्तृतया व्याप्तत्वोक्त्या तदव्याप्तं किञ्चिन्नास्तीत्यर्थलाभेन ततः उत्कृष्टस्य तदव्याप्तस्य प्रतिषेधादपि जगत्कारणं परं ब्रह्मैव सर्वोत्कृष्टमिति सिद्धम् ॥

सर्वस्मात्परमं यत् यस्मात्परमं न किञ्चिदप्यस्ति ।
गुणतस्स्वरूपतो वा तद्ब्रह्म श्रीनिवासनाम भजे ॥ १०० ॥

स्पष्टोऽर्थः ॥

भावः । [1] "वेदाहमेतं पुरुषं महान्तं" इति उत्तरनारायणे लक्ष्मीपतित्वेन प्रतिपादितं श्रीनिवासाख्यं महापुरुषं प्रस्तुत्य, [2] "यस्मात्परं नापरमस्ति किञ्चित्" इत्युत्तरमन्त्रे स्वरूपतो गुणतो वा पूर्वमन्त्रोक्तान्महापुरुषादुत्कृष्टमन्यन्नास्तीति प्रतिपाद्य, [3] "ततो यदुत्तरतरं" इति तदनन्तरमन्त्रे यस्माद्धेतोर्लक्ष्मीपतेश्श्रीनिवासान्महापुरुषादुत्कृष्टं नास्ति तस्माद्धेतोश्श्रीनिवासाख्यं परं ब्रह्मैव सर्वोत्कृष्टमिति, तदुपासनमेव मोक्षोपाय इति चोपसंहृतत्वात्, श्रीनिवासाख्यं परं ब्रह्मैव सर्वोत्कृष्टमिति निर्धार्यते इति ॥

८० ॥ इति पराधिकरणम् ॥ ७ ॥

---

१४ ॥ फलाधिकरणम् ॥ ८ ॥

एवं परमात्मोपासने प्रवर्तनौपयिकं तस्य निरस्तनिखिलदोषत्वं, समस्तकल्याणगुणाकरत्वं, परमप्राप्यत्वं च निरूपितम् । इदानीं तदौपयिकं तस्यैव फलप्रदत्वं व्यवस्थापयितुं प्रवृत्तमिदमधिकरणम् ॥

## फलमत उपपत्तेः ॥ ३-२-३७॥

[श्रुतत्वाच्च ॥ ३८ ॥
धर्मं जैमिनिरत एव ॥ ३९ ॥
पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४० ॥]

---

[1] श्वे. ३-८. [2] श्वे. ३-९. [3] श्वे. ३-१०.

अतः—सर्वज्ञात्सर्वशक्तात्सत्यसंकल्पात्परस्माद्ब्रह्मण एव । फलं-त्रिवर्गापवर्गरूपफलं भवतीत्यर्थः। अत्र हेतुमाह **उपपत्तेः** इति। सर्वज्ञत्वादि-गुणवतस्तस्यैव फलप्रदत्वोपपत्तेरिति सूत्रार्थः ॥

पूर्वपक्षः ।

यथा कृष्यादिकं कर्म कस्यचित्पुरुषस्य प्रसादमनपेक्ष्य फलं प्रयच्छति, तथा यागदानादिवैदिककर्मणां स्वत एव फलप्रदत्वसंभवात् "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादिश्रुतिषु यागादेस्स्वर्गसाधनत्वबोधनाच्च यागादि-वैदिकं कर्मैव स्वर्गादिफलसाधनम्। न च यागादेराशुतरविनाशितया कालान्तरानुभाव्यस्वर्गादिफलं प्रति तस्य साधनत्वं न संभवतीति वाच्यम्, यागादेर्विधिबोधितस्वर्गादिफलसाधनत्वान्यथाऽनुपपत्त्या, यागादिना कर्तर्यात्मनि फलोत्पत्तिपर्यन्तस्थायी अपूर्वाख्यः कश्चिद्धर्मविशेष उत्पाद्यते, तद्द्वारा यागादिः स्वर्गादिसाधनमिति कल्पनेन यागादेस्स्वर्गसाधनत्वोपपत्तेरिति ॥

सिद्धान्तः ।

*"स्वर्गकामो यजेत" इत्यादिविधिवाक्येषु श्रुतस्य यजधातोः 'यज देवपूजायां" इति देवताराधनेऽनुशिष्टतया देवताराधनरूपत्वेनैव कर्मणां विधानलाभात्, [1]"वायव्यं श्वेतमालभेत भूतिकाम." इत्यादिष्वैश्वर्यादिसाधनतया वाय्वादिदेवताराधनभूतमिष्टिविशेषं विधाय, [1]"वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इत्यादिषु तदनन्तरार्थवादवाक्येषु पूर्ववाक्यविहितेष्टिविशेषाराधितवाय्वादिदेवतानामैश्वर्यादिफलप्रदत्वोपदेशेन तत्तत्कर्मणां तत्तत्कर्माराधनजनितदेवताप्रीतिद्वारा फलसाधनत्वप्रकारोपपादनात्, अर्थवादोक्तस्य फलसाधनत्वप्रकारस्य विध्यपेक्षितत्वेन विधेस्तत्र तात्पर्यसंभवाच्च तत एव सर्वोपपत्तौ कर्मभिः फलजनने अपूर्वरूपद्वारकल्पने श्रुतहानाश्रुतकल्पनयोः प्रसङ्गेन तत्तत्कर्माराधनप्रीतानां देवतानामेव फलप्रदत्वाभ्युपगमो न्याय्य इति ॥

* तै स २-५-५ [1] तै स २-१-१

इदमत्रावधेयम्—यद्यपि [1]"स एवैनं भूतिं गमयति," [2]"तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति" इत्यादिषु वाय्विन्द्रादीनामेव फलप्रदत्वं प्रतीयते, तथापि [3]"तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनां । इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः," [4]"यो यो यां यां तनुं भक्तश्श्रद्धयाऽर्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ स तया श्रद्धया युक्तस्तस्या राधनमीहते । लभते च ततः कामान् मयैव विहितान् हि तान्," [5]"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इत्यादिश्रुतिस्मृतिषु भगवत एव सर्वकर्मसमाराध्यत्वसर्वकर्मफलप्रदत्वयोरभिधानेन पूर्वोदाहृतार्थवादवाक्यस्थवाय्विन्द्रादिशब्दानां "वायव्यं श्वेतमालभेत" इत्यादिविधिवाक्यस्थवाय्वादिशब्दानां च वाय्वाद्यन्तर्यामिपरमात्मपर्यन्तत्वे परमात्मन एव फलप्रदत्वे च तात्पर्यमिति ॥

एतेन वाय्वादिदेवताराधनरूपकर्मणां विपाकात्प्रागेव वाय्वाद्यर्वाचीनदेवतानां नाशसंभवेन तासां कर्मफलप्रदत्वासंभवशंकाया नावकाशः; तासां नाशेऽप्यकालकाल्यस्य तदन्तरात्मनः परमात्मनस्सर्वदाऽवस्थानेन, तस्य फलप्रदत्वेऽनुपपत्तिविरहात् । इत्थं च परमात्मैव सर्वकर्मसमाराध्यस्सर्वकर्मफलप्रदश्चेति सिद्धम् ॥

कर्मभिरुपासनैश्चाशेषैराराधितं प्रसन्नं यत् ।
सकलफलप्रदमेकं तद्ब्रह्म श्रीनिवासनाम भजे ॥ १०२ ॥

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य कलाप्रपूर्णस्य
श्रीदेशिकाचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालायां
तृतीयाध्यायस्य द्वितीयः पादः ।

स्पष्टोऽर्थः ॥

[1] तै. सं. २-१-१. [2] [3] तै.ना. १-६. [4] गी. ७-२१, २२, [5] गी. ९-२४

भावः । तैत्तिरीयके अंभस्यनुवाके [1]"इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः" इति श्रूयते । अस्यार्थः—प्रकृतं ब्रह्म, बहुधा जातं—अग्नीन्द्रादिशब्दघटितश्रुतिविहितत्वेन देवताभेदात् बहुविधं, जायमानं, इष्टापूर्तं—यागादिश्रौतं कर्म, खातादिस्मार्तं कर्म, विश्वं—सर्वं, बिभर्ति—स्वाराधनत्वेन स्वीकरोति ; भुवनस्य—सर्वस्य लोकस्य, तत्तत्कर्मफलप्रदानेन, नाभिः—धारकं च भवतीति । अयं भावः—अग्नीन्द्रादिनामघटितश्रुतिवाक्यविहितानि यानि यानि तत्तद्देवतोद्देश्यकानि कर्माणि, तानि सर्वाणि तत्तद्देवतान्तरात्मतयाऽवस्थाय स्वाराधनतया स्वीकृत्य तत्तत्कर्मफलप्रदानेन सर्वान् ब्रह्मैव रक्षतीति ॥

तत्र सर्वकर्मसमाराध्यतया सर्वकर्मफलप्रदतया च श्रुतं ब्रह्म, [1]"अद्भ्यस्संभूतो हिरण्यगर्भ इत्यष्टौ" इति तत्प्रकरणस्थोत्तरवाक्येन, [1]"इष्टापूर्तं बहुधा" इति मन्त्रस्य [2]"अद्भ्यस्संभूतः पृथिव्यै रसाच्च" इत्याद्यनुवाकसमानप्रकरणतावगमात्, तस्य च लक्ष्मीपतिविषयकत्वात्, स लक्ष्मीपतिः श्रीनिवास एवेति निर्धार्यते । [3]"को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयाति" इति मोक्षानन्दहेतुत्वेन श्रुत आनन्दमयात्मा श्रीनिवासापरनामधेयपुण्डरीकाक्ष एवेति पूर्वमेव निर्धारितम् ॥

८१ ॥ इति फलाधिकरणम् ॥ ८ ॥

---

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य कलाप्रपूर्णस्य
श्रीदेशिकाचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालाप्रकाशे
तृतीयाध्यायस्य द्वितीयः पादः ॥

---

[1] तै. नारा. १-६. [2] तै. आर. ३-१३-१. [3] तै. आन. ५.

## तृतीयाध्यायस्य तृतीयः पादः ।

---

### १५ ॥ सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

पूर्वपादे मुमुक्षुभिरुपास्यत्वप्राप्यत्वयोस्सिद्धये श्रीनिवासापरनामधेयस्य परस्य ब्रह्मणः निरस्तनिखिलदोषत्वं, कल्याणगुणाकरत्वं, अनन्तविभूतिमत्त्वं, सर्वस्मात् परत्वं, महोदारत्वं च निरूपितम् । इदानीं ब्रह्मण ईदृशवैभवश्रवणेन तत्प्राप्तीच्छया सञ्जाततदुपासनाभिलाषस्य वेदान्तेषु विहितानां ब्रह्मोपासनाना किं समुच्चयस्सम्भवति, उत विकल्प एव; विकल्पपक्षेऽपि वैश्वानरदहरोपासनादिषु नानाशाखाविहितेषु यत्र यत्र शाखाया ये ये ब्रह्मणो गुणा उक्तास्तेषामेव तत्रानुसन्धानं कार्यं, किं वा शाखान्तरे तदुपासनप्रकरणे श्रुतानि गुणान्तराण्यप्युपासनाय स्वीकार्याणि इति जिज्ञासा शमयितुं तृतीय पाद आरभ्यते ॥

प्रथमं वैश्वानरदहरादिविद्यानां नानाशाखोक्तानामैक्यसाधनेन तत्र तत्रानुक्ताना गुणानामुपसंहार्यताज्ञापनाय प्रवृत्तमिदमधिकरणम् ॥

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥३-३-१

[भेदान्नेति चेदेकस्यामपि ॥ २ ॥
स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥
दर्शयति च ॥ ४ ॥
उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥]

अत्र 'वैश्वानराद्युपासनं,' 'एकं' इति पदद्वयमध्याहार्यम् । यजुःसामादिशाखाभेदभिन्नेषु सर्वेषु वेदान्तेषु प्रतीयमानं वैश्वानराद्युपासनं,

एक—अभिन्नम्, चोदनाद्यविशेषात्; चोदना-विधायकवाक्य, आदिशब्देन फल-उपास्याकार-नामधेयानि गृह्यन्ते; तेषा अविशेषात्—ऐक्यादिति सूत्रार्थः ॥

अय भाव —वैश्वानरविद्या छान्दोग्ये, वाजसनेयकान्तर्गताग्निरहस्ये च श्रूयते। तत्रोभयत्र "वैश्वानरमुपासत" इति चोदनाया, ब्रह्मप्राप्तिरूपफलस्य, वैश्वानरात्मरूपोपास्यस्य, वैश्वानरविद्येति सज्ञायाश्चैक्यात्, शाखाद्वयश्रुतयोर्विद्ययोरैक्यमिति ॥

अत्रायं पूर्वपक्षः —छान्दोग्यश्रुताया अग्निरहस्यश्रुतायाश्च वैश्वानरविद्याया ऐक्य न सभवति। भिन्नशाखाम्नातयोस्तयो प्रकरणभेदेन, अविशेषपुन श्रवणरूपाभ्यासेन च भेदावश्यभावात्। तयो कर्मभेदकत्वस्य पूर्वमीमासाया निर्णीतत्वात् तुल्यन्यायेन विद्याभेदकत्वस्याऽऽवश्यकत्वात्। तथा हि— अग्निहोत्रप्रकरणे विहितस्य नित्याग्निहोत्रस्य, कुण्डपायिनामयनप्रकरणे विहितस्याग्निहोत्रस्य च, चोदनाद्यविशेषेऽपि प्रकरणभेदाद्भेदस्सिद्धान्तित। "समिधो यजति" "इडो यजति" इत्यादौ विहितस्य कर्मण अविशेषपुनश्श्रवणरूपाभ्यासेन भेदस्सिद्धान्तित। "दध्ना जुहोति," "पयसा जुहोति" इत्यादौ विधिशक्तेर्दधिपयोरूपविशेषणे सक्रान्त्या विधिसार्थक्यसभवेन जुहोतिपदयो पुनश्श्रवणस्य कर्मभेदकत्वाभावेऽपि, "समिधो यजति," "इडो यजति" इत्यादौ विधिशक्तेर्विशेषणसक्रान्त्यसभवेन विहितस्य पुनर्विधानवैयर्थ्यप्रसङ्गादविशेषपुनश्श्रवणस्य कर्मभेदकत्वं निर्णीतम्। तद्वदिहापि शाखाद्वयविहितयोर्वैश्वानरविद्ययो प्रकरणभेदस्याविशेषपुनश्श्रवणरूपाभ्यासस्य चावर्जनीयतया भेदो दुर्वार। न चात्र तत्तच्छाखाध्येतृपुरुषप्रतिपत्त्यर्थत्वेन प्रकरणभेदस्य पुनश्श्रवणस्य च सार्थक्योपपत्ते चोदनाद्यविशेषेण तयोरैक्यमावश्यकमिति वाच्यम्। चोदनाद्यविशेषस्याक्षरविद्यायामैक्यासाधकत्वेन व्यभिचरितत्वात्। तत्र हि

अथर्वशाखाविहितायामक्षरविद्यायां [1]"तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णं" इत्यथर्वशाखिमात्रनियतशिरोव्रतांगकत्वस्य विधानात्, शाखान्तरविहिताक्षरविद्यायां च शिरोव्रतांगकत्वविरहेण शाखाद्वयविहितयोः तयोर्भेदोऽवर्जनीय. । शिरोव्रतं नाम शिरस्यङ्गारपात्रधारणरूपो व्रतविशेषः । इत्थं च ययोर्विद्ययोश्चोदनाद्यविशेषस्तयोरैक्यमिति नियमस्याक्षरविद्यायां भग्नतया न तस्यैक्यसाधकतासम्भव इति ॥

सिद्धान्तस्तु–[1]"तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णं" इत्युक्तशिरोव्रतस्य तदुपनिषदध्ययनाङ्गत्वमेव विधीयते, न त्वक्षरविद्याङ्गत्वम्। [2]"नैतदचीर्णव्रतोऽधीते" इत्युत्तरवाक्ये शिरोव्रतस्य तदुपनिषदध्ययनांगत्वश्रवणात्। पूर्वमन्त्रस्थब्रह्मविद्यापदस्य तदुपनिषत्परत्वावगमात्। ततश्च यैश्शिरोव्रतं चरितं, तानेवेमामुपनिषदमध्यापयेदिति मन्त्रार्थः। इदं च शिरोव्रतस्य तदुपनिषदध्ययनाङ्गत्वं [3]"इदमपि वेदव्रतेन व्याख्यातं" इति समाचाराख्यग्रन्थोक्त्या चावगम्यते। तत्र हि शिरोव्रते वक्तव्यं सर्वमुक्त्वा, व्रतान्तरे तदतिदेशाय प्रवृत्ते तद्वाक्ये शिरोव्रतं वेदव्रतत्वेनाभिहितम्। अतश्शिरोव्रतस्य तद्वेदाध्ययनांगत्वमेव, न त्वक्षरविद्यांगत्वम्। इत्थं च चोदनाद्यविशेषस्य विद्यैक्यसाधकत्वेऽनुपपत्तिविरहात्, शाखान्तरे प्रकरण-भेदस्य पुनश्श्रवणस्य च तच्छाखाध्येतृपुरुषप्रतिपत्त्यर्थत्वेन विधिवैयर्थ्य-विरहात्, शाखाद्वयविहितयोर्दहरविद्ययोरैक्यस्य श्रुत्यैव दर्शितत्वाच्च शाखा-द्वयोक्तयोर्वैश्वानरविद्ययोरैक्यं दुरपह्नवम्।

छान्दोग्ये हि दहरविद्यायामपहतपाप्मत्वादिगुणाष्टकविशिष्टस्य परमात्मन उपासनविधानमुपजीव्य, तैत्तिरीयके दहरविद्यायां "तत्रापि दहं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यं" इत्यत्र सामान्यत उपासनविधानेन

[1] मु. ३-२-१०. [2] मु ३-२-११. [3]

छान्दोग्यस्थदहरविद्योक्तविशेषोपजीवन, शाखाद्वयोक्तयोर्दहरविद्ययोरैक्यं च दर्शित भवति । इत्थ च एकस्या शाखाया तद्विद्याप्रकरणोक्ताना गुणाना तद्विद्यायामुपासनार्थत्वात् शाखान्तरेऽनुक्तानामपि तेषा तद्विद्यायामुपासनार्थं सग्रह कर्तव्य इति सिद्धम् ॥

वैश्वानरदहराद्या यद्विद्याश्चोदनाद्यभेदेन ।
शाखाद्वयेऽप्यभिन्नास्तद्ब्रह्म श्रीनिवासनाम भजे ॥ १०३ ॥
स्पष्टोऽर्थ ।

वैश्वानरादिविद्याना श्रीनिवासविषयकत्वस्य तत्तदधिकरणेषु निरूपितत्वात्, अत्र यद्विद्या इत्युक्तम् ॥

८२ ॥ इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

---

१६ ॥ अन्यथात्वाधिकरणम् ॥ २ ॥

पूर्वाधिकरणे चोदनाद्यभेदेन सैवेय विद्येति प्रत्यभिज्ञायमानतया शाखाद्वयाम्नातयोर्वैश्वानरविद्ययोरैक्यमुक्तम् । तद्वत् उद्गीथविद्ययोर्वाजसनेयकछान्दोग्योक्तयोश्चोदनाद्यभेदेन ऐक्यशङ्कापरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ३-३-६ ॥

इद पूर्वपक्षसूत्रम् । वाजसनेयके छान्दोग्ये चाम्नातयोरुद्गीथविद्ययो, अन्यथात्वं रूपभेद, तत्तत्त्यशब्दात् अवगम्यते इति चेत्, न न रूपभेद इत्यर्थ । तत्र हेतुमाह अविशेषात् इति । उभयत्र रूपस्याविशिष्टत्वात् इति सूत्रार्थ । अत्र पूर्वपक्षी सिद्धान्त्यभिमत तयोर्विद्ययो रूपभेदमनूद्य परिहरन् रूपैक्यात्तयोरैक्यमाह ॥

अयं भावः—वाजसनेयके देवासुरसमामे [1] "हन्तासुरान् यज्ञ उद्गीथेनात्ययाम" इति देवानामुद्गीथोपासनेनासुरपराभवसकल्पमुपक्रम्य, उद्गीथे वागादिदृष्टौ तेषामसुरैः पराभवमुक्त्वा, [2] "अथ हेममासन्यं प्राणमूचुः त्वन्न उद्गायेति, तथेति तेभ्य एष प्राण उदगायत्" इत्युक्तम्। अयमर्थः—आसन्यं प्राणं-मुख्यप्राणं, त्वं, नः—अस्मभ्यं, उद्गाय-तदुद्गानकर्ता भव इत्यूचुः। तथेति देवैरुक्तमंगीकृत्य एष मुख्यप्राण, तेभ्यो देवेभ्य उदगायत्—उद्गानं कृतवान्। देवा उद्गातरि मुख्यप्राणदृष्टिमकुर्वन्निति यावत्। एवमत्र उद्गातरि प्राणदृष्टिमभिधाय, "ते विदुः" इत्यादिना असुराणामुद्गातरि पापचिन्तामभिधाय, [3] "स यथाऽश्मानमाखणमृत्वा विध्वंसेत एवं हैव ते विध्वंसमाना विष्वञ्चो विनेशुः" इत्यनेन यथा अश्मानं प्राप्य लोष्टं विनश्येत्, एवमध्यस्तप्राणभावे उद्गातरि पापचिन्तया असुराणां पराभवमुक्त्वा, [2] "भवत्यात्मना परास्य द्विषन् भ्रातृव्यो भवति य एवं वेद" इत्यनेन उद्गातारं प्राणदृष्ट्या य उपास्ते तस्य शत्रव पराभूता भवन्ति इति उद्गातरि प्राणदृष्ट्या उपासनस्य फलमभिहितम्। अनेन वाजसनेयकोक्तोद्गीथविद्यायामध्यस्तप्राणभावस्योद्गातुरुपास्यत्वं प्रतीयते॥

छान्दोग्ये तु [4] "देवासुरा ह वै यत्र संयेतिरे" इत्युपक्रम्य, [4] "तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिहनिष्याम इति" इति उद्गीथोपासनेन देवानामसुरपराभवसकल्पमुक्त्वा, उद्गीथे वागादिदृष्टौ असुरै पराभवमभिधाय, [5] "अथ य एवायं मुख्यप्राणस्तमुद्गीथमुपासांचक्रिरे" इत्यादिना उद्गीथे मुख्यप्राणदृष्ट्योपासनस्य शत्रुपराभवरूपफलमभिहितम्। अतोऽत्राध्यस्तप्राणभावस्य उद्गीथस्योपास्यत्वं प्रतीयते। अत एकत्र अध्यस्तप्राणभाव उद्गाता उपास्य. अन्यत्र अध्यस्तप्राणभाव उद्गीथ उपास्य इति रूपभेदान्न

[1] बृ. १-३-१.　[2] बृ. १-३-७.　[3] छा १-२-७.　[4] छा. १-२-१.
[5] छा. १-२-७, ८.

विद्यैक्यमिति नाशङ्कनीयम् । वाजसनेयके [1]"हन्तासुरान् यज्ञ उद्गीथेनात्ययाम" इत्युद्गीथशब्दस्य उपक्रमानुरोधेन [2]"तेभ्य एष प्राण उदगायत्" इत्युपसंहारवाक्यस्य नेयतया उद्गानकर्मण्युद्गीथ एव सौकर्यविवक्षया कर्तृत्वोपचार इत्याश्रयणीयम् । इत्थं चोभयत्र उद्गीथ एव मुख्यप्राणदृष्ट्या उपास्य इति रूपमभिन्नम् । शत्रुपराभवरूपमर्थवादवाक्योक्तं फलमप्यभिन्नम् । वेदेति चोदनाऽप्यविशिष्टा । एवं फलसंयोगादीनामविशिष्टतया सैवेयं विद्येति प्रतीयमानतया शाखाद्वयाम्नातयोरुद्गीथविद्ययोरैक्यमिति ॥

**न वा प्रकरणभेदात्परोवरीयस्त्वादिवत्** ॥ ३-३-७ ॥
[संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥
व्याप्तेश्च समञ्जसम् ॥ ९ ॥]

इदं सिद्धान्तसूत्रम् । छान्दोग्यवाजसनेयकोक्तयोरुद्गीथविद्ययोरैक्यं **न** संभवतीत्यर्थः । तत्र हेतुमाह **प्रकरणभेदात्** इति । प्रकरणं विधेयार्थप्रतिपादकप्रदेशः, तद्भेदादित्यर्थः । तत्र दृष्टान्तमाह **परोवरीयस्त्वादिवत्** इति । अत्र **आदि**शब्देन हिरण्मयत्वं गृह्यते । ततश्च परोवरीयस्त्वगुणविशिष्टविषयकहिरण्मयत्वगुणविशिष्टविषयकोपासनयोर्भेदवत् इति सूत्रार्थः ॥

अयं भावः—छान्दोग्ये [3]"ओमित्येतदक्षरमुद्गीथमुपासीत" इति उद्गीथाङ्गप्रणवोपासनं प्रकृत्य तत्प्रकरणे [4]"देवासुरा ह वै यत्र संयेतिरे" इत्यारभ्य, [5]"अथ य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे" इति आम्नाता उद्गीथविद्या उद्गीथाङ्गप्रणवविषया, प्रणवस्यैव पूर्वं प्रकृतत्वात् । वाजसनेयके "ते ह देवा उद्गीथमाजह्रुः" इत्यादिना आम्नाता उद्गीथविद्या तु कृत्स्नोद्गीथविषया, तत्र प्रणवस्याप्रकृतत्वात् । अत एकत्र उद्गीथाङ्गप्रणवोपासनं, अन्यत्र कृत्स्नोद्गीथोपासनमित्युपास्यरूपभेदाद्विद्याभेदः । एवं

[1] बृ ३ ३ १ [2] बृ ३ ३ ७ [3] छा १ १ १ [4] छा १ २-१
[5] छा १ २-७, ८

वाजसनेयके प्रागुक्तरीत्या उद्गातरि प्राणदृष्ट्योपासनं; छान्दोग्ये तु उद्गीथाङ्गप्रणवे प्राणदृष्ट्योपासनमिति । अतोऽपि रूपभेदः । अयं च रूपभेदस्सूत्रे वाशब्देनाभिप्रेतः ॥

न चैवं वाजसनेयके [1]"तद्ध देवा उद्गीथमाजह्रुः" इति उद्गीथशब्देनोपक्रमादुपक्रमविरोधश्शङ्कनीयः । [2]"तेभ्य एष प्राण उदगायत्" इत्युपसंहारे उद्गीथकर्मकोपासनकर्तर्येव प्राणदृष्ट्या उपासनविधानेन उपक्रमप्रक्रान्तोद्गीथापरित्यागेनोपक्रमविरोधाभावात् । उपक्रमाधिकरणे हि उपक्रमावगतस्योपसंहारेऽपरित्याज्यत्वमात्रमुक्तं, न तूपक्रमानवगतविशेषस्योपसंहारे अस्वीकार्यत्वमपि । अतोऽत्रोपसंहारे उपक्रमावगतस्य ततोऽधिकस्य च स्वीकारान्नोपक्रमाधिकरणविरोधः । तदेवमुभयत्र रूपभेदाद्विद्याभेदः । यथा छान्दोग्येऽस्मिन् प्रकरणे आम्नातस्य परोवरीयस्त्वगुणविशिष्टाकाशशब्दवाच्यपरमात्मदृष्ट्या उद्गीथोपासनस्य, हिरण्मयत्वविशिष्टपरमात्मदृष्ट्या उद्गीथोपासनस्य च दृष्टिविशेषणब्रह्मगुणभेदाद्भेदः, तद्वत् । उदाहृतदृष्टान्तयोरुपास्यस्योद्गीथस्य दृष्टिविशेषणब्रह्मणश्चैक्येऽपि दृष्टिविशेषणब्रह्मविशेषणभूतयोः परोवरीयस्त्वहिरण्मयत्वरूपयोर्गुणयोर्भेदात् तद्विद्ययोर्भेदे किं वक्तव्यं दृष्टिविशेषणभेदाद्विद्याभेद इति । उद्गीथविद्येति सञ्ज्ञैक्यं तु तत्प्रकरणाम्नातपरस्परभिन्नविद्यासाधारणत्वान्नैक्यसाधकम् । परोवरीयस्त्वं परेभ्यः—उत्कृष्टेभ्य, परत्व—उत्कृष्टत्वम् ॥

ननु छान्दोग्ये प्रकरणोपक्रमे प्रणवस्य प्रकृतत्वेऽपि तत्प्रकरणस्य [3]"देवासुरा यत्र संयेतिरे" इत्यतः पूर्वमेव परिसमाप्तत्वमस्तु । [3]"तद्ध देवा उद्गीथमाजह्रुः" इत्यत्र उद्गीथशब्दः कृत्स्नोद्गीथविषय एवास्तु । ततश्चोभयत्राप्यस्तप्राणभावस्योद्गीथस्यैवोपास्यत्वात् न रूपभेद इति चेत्, मैवं—

1 [2] छा ३-३-७. [3] छा. १-२-१.

एतदुत्तरविद्यास्वपि उद्गीथाङ्गप्रणवस्यैवोपास्यत्वेनानुवृत्तेर्दर्शनात् तन्मध्यपतितायामस्यामपि विद्यायामुद्गीथाङ्गप्रणवस्यैवोपास्यत्वौचित्यात् घटैकदेशस्य दग्धत्वेऽपि घटो दग्ध इति व्यवहारदर्शनेन एकदेशविवक्षयाऽपि समुदायशब्दप्रयोगसम्भवात् ॥

यदुपासनोपकृतये त्वाम्नाते प्राणदृष्टिरूपे ये ।
उद्गीथोपास्ती द्वे उद्गातरि प्राणदृष्टिरेकस्याम् ॥ १०४ ॥

उद्गीथाङ्गे प्रणवे त्वितरस्यामिति च रूपभेदेन ।
विद्ये ते भिद्येते तद्ब्रह्म श्रीनिवासनाम भजे ॥ १०५ ॥

अर्थः । यस्य श्रीनिवासापरनामधेयस्य ब्रह्मण, उपासनानां-वैश्वानरदहरादीनां, उपकृतये-उपासनाङ्गभूतक्रतूनां वीर्यवत्तरत्वापादनद्वारा उपासनस्य शीघ्रनिष्पत्तिरूपोपकारसिद्ध्यर्थं, आम्नाते - छान्दोग्यवाजसनेयकयोर्विहिते, प्राणदृष्टिरूपे ये उद्गीथविद्ये, तत्र वाजसनेयकोक्तविद्यायां, उद्गातरि प्राणदृष्टिः-अध्यस्तप्राणभावस्योद्गातुरुपासनं, छान्दोग्योक्ताया तु अध्यस्तप्राणभावस्य उद्गीथाङ्गप्रणवस्योपासनमिति उपास्यरूपभेदात्, ते विद्ये परस्परभिन्ने, तद्ब्रह्मेति पूर्ववत् ॥

अत्र प्रथमपद्ये तुशब्दोपादानं ब्रह्मविद्यानिरूपणाय प्रवृत्तेऽस्मिन्पादे उद्गीथविद्याविचार. किमर्थं क्रियते इति शङ्कानिवारणार्थं । ततश्च ब्रह्मविद्याङ्गभूतक्रतूना साद्गुण्यापादनद्वारा ब्रह्मोपासनोपकारकत्वज्ञापनार्थमुद्गीथविद्यानिरूपणमिति ॥

सर्वासामपि ब्रह्मविद्याना श्रीनिवासापरनामधेयब्रह्मविषयत्वं प्रथमाध्याये निरूपितमभिप्रेत्य अत्र पद्ये यदुपासनोपकृतय इत्युक्तम् ॥

८३ ॥ इति अन्यथात्वाधिकरणम् ॥ २ ॥

## १७ ॥ सर्वाभेदाधिकरणम् ॥ ३ ॥

पूर्वाधिकरणे उद्गीथे वागादिदृष्टौ शत्रुभि परिभव फलमभिधाय मुख्यप्राणदृष्टौ शत्रुविध्वंसनरूपफलमभिहितम् । तत्कुत इति जिज्ञासाया मुख्यप्राणस्य वागादिभ्य श्रैष्ठ्यादिति प्रदर्शनाय दृष्टिविशेषणतया प्रस्तुतस्य प्राणस्य स्वातन्त्र्येणोपासनयोश्शाखाद्वयाम्नातयोर्भेदमाशङ्क्य तत्परिहाराय प्रवृत्तमिदमधिकरणम् ॥

# सर्वाभेदादन्यत्रेमे ॥ ३-३-१० ॥

सर्वस्य–प्राणज्यैष्ठ्यश्रैष्ठ्योपपादनप्रकारस्य सर्वस्य इत्यर्थ । अभेदात्-भेदविरहात्, अन्यत्र कौषीतक्युपनिषदुक्ताया प्राणविद्यायामपि, इमे-वसिष्ठत्वादयो गुणा सन्त्येवेति सूत्रार्थ ।

अत्रैव पूर्वपक्षः —छान्दोग्यवाजसनेयकयो कौषीतक्युपनिषदि च प्राणविद्या आम्नायते। तत्र छान्दोग्यवाजसनेयकयो [1]"यो ह वै ज्येष्ठ च श्रेष्ठ च वेद ज्येष्ठश्च श्रेष्ठश्च भवति प्राणो ह वै ज्येष्ठश्च श्रेष्ठश्च" इत्यादिना ज्यैष्ठ्यश्रैष्ठ्यगुणविशिष्टप्राणोपासन विधाय वाक्चक्षुश्श्रोत्रमनसा क्रमेण वसिष्ठत्वप्रतिष्ठात्वसम्पत्त्वायतनत्वरूपान् गुणान् प्रतिपाद्य, वाक्चक्षुश्श्रोत्र-मनस्सु एकैकस्य शरीरादुत्क्रान्तावपि अन्येषामिन्द्रियाणा प्राणस्य शरीरस्य च यथापूर्वस्थितिं, मुख्यप्राणोत्क्रमणे वागादीन्द्रियाणा शरीरस्य च विशरण-मकार्यकरत्व चाभिधाय, तेन वसिष्ठत्वादिगुणविशिष्टाना वागादीना मुख्य-प्राणाधीनस्थितिकत्व तदधीनस्वकार्यकरत्व च प्रदर्श्य वागादिभिर्मुख्य-प्राणस्य स्वीयस्वीयवसिष्ठत्वादिगुणवत्ताभिधानप्रदर्शनेन तज्ज्यैष्ठ्यमुपपादितम्॥

---

[1] छा ५-१ १

एवमेव बृहदारण्यके अष्टमाध्यायप्रथमब्राह्मणेऽपि प्रतिपादितम्। तेन श्रैष्ठ्योपपादकवसिष्ठत्वादिगुणविशिष्टतया मुख्यप्राणस्योपासनं विधित्सितं प्रतीयते। कौषीतकिप्राणविद्यायां तु इत्थमेव मुख्यप्राणस्य श्रैष्ठ्यमुपपादितम्। वागादिभिर्मुख्यप्राणस्य स्वीयस्वीयवसिष्ठत्वादिगुणविशिष्टत्वं तु नाभिहितं दृश्यते। अतश्छान्दोग्यवाजसनेयोक्तयोः प्राणविद्ययोर्वसिष्ठत्वादिगुणविशिष्टमुख्यप्राणस्योपास्यतया रूपाभेदाद्विद्यैक्यम्। कौषीतक्युक्तप्राणविद्यायां तु वसिष्ठत्वादिगुणरहितश्रैष्ठ्यज्यैष्ठ्यगुणविशिष्टप्राणोपासनमिति रूपभेदाद्यतो भेदः॥

सिद्धान्तस्तु— कौषीतक्युक्तप्राणविद्यायामपि वागादीनां मुख्यप्राणाधीनस्थितिकत्वतदधीनकार्यकरत्वयोः प्रदर्शितत्वेन मुख्यप्राणस्य वागादिस्थितिकार्यकरताहेतुत्वरूपाया वागादिगतवसिष्ठत्वादिमत्तायास्सिद्धत्वेन तस्यामपि विद्यायां मुख्यप्राणे वसिष्ठत्वादिगुणवत्ताया उपास्यत्वसिद्ध्या रूपभेदविरहात् न विद्याभेद इति। वाचो वसिष्ठत्वं नाम वाग्व्यवहारेण धनप्राप्तिहेतुत्वम्। चक्षुषः प्रतिष्ठात्वं नाम निम्नोन्नतस्थलदर्शनेन स्खलनं विना स्थितिहेतुत्वम्। श्रोत्रस्य सम्पत्तिहेतुत्वं नाम वेदान्तार्थश्रवणेन तदनुष्ठानद्वारा मुक्तिपर्यन्तसम्पद्धेतुत्वम्। मनस आयतनत्वं नाम स्रक्चन्दनादिविषयज्ञानरूपभोगाश्रयत्वम्॥

कौषीतक्युक्तायां यदधीनप्राणविषयविद्यायां।
छान्दोग्योक्तायां च श्रैष्ठ्यवतः प्राणरूपवेद्यस्य॥ १०६॥

श्रैष्ठ्योपपादनस्य च सर्वस्याप्येकरूपतया।
विद्ये उभे अभिन्ने तद्ब्रह्म श्रीनिवासनाम भजे॥ १०७॥

अर्थः। कौषीतक्युपनिषदुक्तायां छान्दोग्योपनिषदुक्तायां च यदधीनः— यन्निर्वाह्यसत्तास्थितिप्रवृत्तिकः यः प्राणः, तद्विषयविद्यायां

श्रैष्ठ्यगुणवतो मुख्यप्राणरूपोपास्यस्य प्राणश्रैष्ठ्योपपादनप्रकारस्य च सर्वस्यैकरूपतया प्राणस्य श्रैष्ठ्योपपादकगुणवत्तासिद्धेः वेद्यभेदविरहेण उभे विद्ये अभिन्ने, तद्ब्रह्मेति पूर्ववत् ॥

भावश्च सूत्रव्याख्यानेनैव स्पष्टः ॥

अत्र पक्षे वागादीनां शरीरस्य च स्थितिः प्रवृत्तिश्च यदधीना, स मुख्यप्राणोऽपि यदधीनसत्तास्थितिप्रवृत्तिकतया अन्तर्यामिब्राह्मणे [1] "यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणश्शरीरं यः प्राणमन्तरो यमयति" इत्यत्र श्रूयते। तस्य महिमा अपार इति श्रीनिवासमाहात्म्यमस्मिन्नधिकरणे प्राणविचारेण सूत्रकारैरनुसंहितमिति ज्ञापनाय अन्तर्यामिब्राह्मणस्य सुबालोपनिषदैकार्थ्येन श्रीनिवासविषयतायाः प्रागुपपादितत्वात् यदधीनप्राण इत्युक्तमिति द्रष्टव्यम् ॥

८४ ॥ सर्वाभेदाधिकरणम् ॥ ३ ॥

---

१८ ॥ आनन्दाद्यधिकरणम् ॥ ४ ॥

पूर्वाधिकरणे प्राणस्य श्रैष्ठ्यानुसन्धानं वसिष्ठत्वादिगुणवत्त्वानुसन्धानं विना नोपपद्यत इति कौषीतक्युपनिषदुक्तप्राणविद्यायामपि वसिष्ठत्वादिप्राप्तिरुक्ता । तद्वत् यैर्गुणैर्विना चिदचिद्विजातीयब्रह्मस्वरूपानुसन्धानं नोपपद्यते, तेषां गुणानां सर्वासु ब्रह्मविद्यासूपसंहारः कर्तव्य इति प्रतिपादनाय प्रवृत्तमिदमधिकरणम् ॥

## आनन्दादयः प्रधानस्य ॥ ३-३-११ ॥

[प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

इतरे त्वर्थसामान्यात् ॥ १३ ॥

---

[1] बृ ५-७-२२.

आध्यानाय प्रयोजनाभावात् ॥ १४ ॥
आत्मशब्दाच ॥ १५ ॥
आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥
अन्वयादिति चेत् स्यादवधारणात् ॥ १७ ॥]

'सर्वाभेदात्' इति पूर्वसूत्रे समासघटक 'अभेदात्' इति पदमनुवर्तते । आनन्दपद नानन्दत्वपरम् । ततश्च प्रधानस्य गुणिनो ब्रह्मण उपास्यस्य, अभेदात् ऐक्यात्, सर्वास्वपि ब्रह्मविद्यासु आनन्दत्वादयो गुणा अनुसन्धेया इति सूत्रार्थः ॥

अत्रैव पूर्वपक्षः—सर्वासु ब्रह्मविद्यासु ब्रह्मगुणत्वेनाऽऽनन्दत्वादीना मुपासनाय उपसहाराभ्युपगमे ब्रह्मगुणाना सर्वेषा सर्वासु ब्रह्मविद्यासूपसहार प्रसङ्ग । न चेष्टापत्ति , ब्रह्मगुणानामनन्तत्वेन सर्वेषामुपसहर्तुमशक्यत्वात्, प्रकरणान्तरश्रुताना प्रकरणान्तरे उपसहारे प्रमाणाभावाच्च । तत्तद्ब्रह्मविद्याप्रकरणोक्ता ब्रह्मगुणास्तत्र तत्रोपसंहर्तव्या , न सर्वे इति ॥

सिद्धान्तः ।

गुणाना प्रधानानुवर्तित्वात्, गुणित्वेन प्रधानस्य ब्रह्मण सर्वासु ब्रह्मविद्यासूपास्यस्यैकत्वात्तद्गुणा आनन्दत्वादयोऽपि तासु सर्वास्वप्यनुसन्धेया । न च [1]"तस्य प्रियमेव शिर " इत्यादिना आनन्दमयविद्याप्रकरणे श्रुताना प्रियशिरस्त्वादीना ब्रह्मगुणत्वाविशेषात् सर्वास्वपि ब्रह्मविद्यासु तेषामुपसहार प्रसङ्ग इति वाच्यम् । प्रियशिरस्त्वादीना ब्रह्मगुणत्वाभावात् ब्रह्मणश्शिरःपक्षपुच्छाद्यवयवभेदाङ्गीकारे क्वचिदवयवे स्थूलत्व क्वचिदवयवे कृशत्वमिति विरुद्धपरिमाणद्वय स्यात् । ततश्च [2]"अस्थूलमनणु" इत्यादिश्रुतिविरोधप्रसङ्ग , तत्र ब्रह्मणि स्थूलत्वकृशत्वादिपरिमाणनिषेधात् ॥

[1] तै उ ५ २ [2] बृ ५ ८

न चैवमपि [1]"अन्नादो वसुदान" इत्यादिश्रुतिप्रतिपन्नानां महोदारत्वादिब्रह्मगुणानामानन्दत्वादिवत् ब्रह्मविद्यासु सर्वासु उपसंहारप्रसङ्गो दुर्वार इति वाच्यम्। ब्रह्मस्वरूपनिरूपकधर्माणां सर्वासु ब्रह्मविद्यास्वनुसन्धेयतास्वीकारेणातिप्रसङ्गविरहात्॥

ब्रह्मस्वरूपनिरूपका अतथाविधाश्चेति ब्रह्मधर्मा द्विविधाः। तत्र चेतनाचेतनविजातीयत्वेन ब्रह्मस्वरूपप्रतिपत्तिजनका ये, ते तत्स्वरूपनिरूपकधर्मा इत्युच्यन्ते। ते च धर्माः सत्यत्वज्ञानत्वानन्तत्वानन्दत्वामलत्वानि॥

तत्र सत्यत्वं--स्वरूपे स्वभावे च कदाचिदपि अन्यथाभावरहितत्वम्। तेन ब्रह्मणि अचिज्जातीयता तत्संसृष्टचेतनजातीयता च व्यावर्त्यते, अचितस्सततपरिणामितया स्वरूपान्यथाभावस्य, तत्संसृष्टचेतने तत्संसर्गप्रयुक्तस्य सङ्कोचविकासरूपतदीयधर्मभूतज्ञानात्मकस्वभावान्यथाभावस्य च नियमेन सत्त्वेन तयोस्तदसाधारणधर्मत्वात्, ब्रह्मणि तदभावरूपसत्यत्वेन तज्जातीयता व्यावर्त्यते। यथा अप्सु पृथिव्यसाधारणगन्धविरहेण पृथिवीजातीयता व्यावर्त्यते, तद्वत्।

ज्ञानत्वं-साक्षात् धर्मद्वारा च स्वप्रकाशत्ववत्त्वम्। साक्षात् स्वप्रकाशत्ववत्त्वेन ज्ञानस्वरूपत्वस्य, स्वप्रकाशधर्मवत्तया ज्ञानगुणकत्वस्य च लाभः। ज्ञानस्य इदानीं तदानीं इत्यादिकालविशेषानुक्त्या विषयविशेषानुक्त्या च सङ्कोचाभावलाभात् ज्ञानपदेन नित्यासङ्कुचितज्ञानवत्त्वं लभ्यते। तेन ब्रह्मणि मुक्तचेतनजातीयता व्यावर्त्यते; तस्य संसारदशायां ज्ञानसङ्कोचवत्त्वनियमेन कदाचित् ज्ञानसङ्कोचस्य तदसाधारणधर्मत्वात्।

अनन्तत्वं--अन्तः-परिच्छेदः; स च देशकृतः कालकृतो वस्तुकृतश्चेति त्रिविधः। तदभावोऽनन्तत्वम्। तत्र 'अस्मिन् देशे नास्ति'

1 बृ. ६-४-२४.

इति बुद्धिविषयत्वं देशपरिच्छेदः; तदभावो देशापरिच्छिन्नत्वम्। ब्रह्मणः सर्वव्याप्तत्वात्तदुपपत्तिः। 'अस्मिन् काले नास्ति' इति धीविषयत्वं कालपरिच्छेदः; तदभावः कालापरिच्छिन्नत्वम्। ब्रह्मणस्सर्वदा वर्तमानत्वात् तदुपपत्तिः। स्वेतरवस्तुवाचकपदसमानाधिकरणपदेन व्यवहारानर्हत्वं वस्तुपरिच्छेदः; यथा 'गौः अश्वः' इति व्यवहारानर्हत्वेन गवादेरश्वादिपरिच्छिन्नत्वं; तदभावो वस्त्वपरिच्छिन्नत्वम्। ब्रह्मणस्स्वेतरसमस्तवस्तुवाचकपदवाच्यतायाः [1]"चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात्" इति सूत्रे व्यवस्थापितत्वेन [2]"ब्रह्मैवेदं सर्वं" [3]"सर्वं खल्विदं ब्रह्म" इत्यादिव्यवहारार्हत्वात् वस्त्वपरिच्छिन्नत्वोपपत्तिः। तेन नित्यचेतनजातीयता व्यावर्त्यते, तेषामणुत्वेन परिच्छिन्नत्वात्; स्वेतरवाचकपदवाच्यत्वविरहेण वस्तुपरिच्छिन्नत्वाच्च।

सिद्धान्ते आनन्दस्य ज्ञानविशेषरूपत्वाभ्युपगमेन आनन्दरूपज्ञानस्वरूपत्वस्य आनन्दरूपज्ञानगुणकत्वस्य च लाभाय आनन्दत्वोक्तिः। ब्रह्मण. परमप्राप्यत्वौपयिकनिरतिशयपुरुषार्थत्वलाभाय निरतिशयानन्दस्वरूपत्वनिरतिशयानन्दवत्त्वयोः सर्वपरविद्यास्वनुसन्धेयता। एतदभिप्रायेण "आनन्दादयः प्रधानस्य" इति सूत्रे आनन्दस्य प्रथमोपादानम्॥

अमलत्वस्वरूपं तु [4]अक्षरध्यधिकरणे वक्ष्यते। तदेवं सत्यत्वादीनां पञ्चानां ब्रह्मस्वरूपनिरूपकत्वेन तानि सर्वपरविद्यास्वनुसन्धेयानि। महोदारत्वादीनामतथाविधत्वेन, न तेषां सर्वविद्यास्वनुसन्धेयत्वप्रसंगः। प्रियशिरस्त्वादीनां तु ब्रह्मगुणत्वस्यैवाभावेन, न ते ब्रह्मविद्यास्वनुसन्धेयाः॥

नन्वेवं [5]"तस्य प्रियमेव शिरः" इत्यादिना ब्रह्मणः प्रियशिरस्त्वाद्यभिधानं किमर्थमिति चेत्, उच्यते—ब्रह्मण उपासनाय शिर पक्षपुच्छादिकल्पनेन

[1] शा.सू. २-३-१७. [2] बृ. ४-५-१. [3] छा. ३-१४-१. [4] ३-३-१४.
[5] तै. आन. ५-२.

पुच्छाद्यारोहार्थं शिरःपक्षपुच्छाद्यभिधानम्, न वस्तुतश्शिरःपक्षपुच्छादिमत्त्वात्। [1]"तस्माद्वा एतस्माद्विज्ञानमयात् अन्योन्तर आत्माऽऽनन्दमयः" इति आनन्दमयस्य ब्रह्मण आत्मत्वोक्तेश्च शिरःपक्षपुच्छाद्यभावसिद्धेः, आत्मनो निरवयवत्वात् ॥

ननु [2]"अन्योन्तर आत्मा प्राणमयः" इत्यादिष्वनात्मसु प्राणादिषु पूर्वमात्मशब्दप्रयोगदर्शनात्, [1]"अन्योन्तर आत्माऽऽनन्दमयः" इत्यत्रापि अनात्मन्यात्मशब्दप्रयोगसम्भवादानन्दमयस्य कथमात्मत्वलाभ इति चेत्, उत्तरत्र [3]"सोऽकामयत बहु स्यां प्रजायेयेति" इत्यत्र तच्छब्देन पूर्वप्रकृतमानन्दमयं परामृश्य, तस्य बहुभवनसङ्कल्पोक्त्या प्रकृतानन्दमयः परमात्मैवेति निर्धार्यते। यथा [4]"आत्मा वा इदमेक एवाग्र आसीत्। स ईक्षत लोकान्नु सृजा इति" इत्यत्र सङ्कल्पविशेषश्रवणेन प्रकृत आत्मा परमात्मा इति निर्णीयते, तद्वत् इति ब्रूमः ॥

ननु उपक्रमे प्राणमयादीनामनात्मना आत्मशब्देन व्यवहारदर्शनेन उपक्रमाधिकरणन्यायेन उपक्रमस्य प्रबलत्वात् कथं [3]"सोऽकामयत" इत्याद्युत्तरवाक्यात् परमात्मविषय एवायमानन्दमयपर्याये आत्मशब्द इति निर्णीयत इति चेत्, उच्यते—"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" इति तस्याप्युपक्रमे सर्वजगत्कारणं परमात्मानं प्रस्तुत्य तस्य सर्वान्तरत्वेन परमात्मत्वव्यञ्जनाय प्रवृत्तेऽस्मिन् सन्दर्भे प्रथममन्नमयाच्छरीरादन्तरत्वेन प्राणमये परमात्मत्वबुद्धिमवतार्य, तदनन्तरं तस्याप्यन्तरे मनोमये, ततस्तस्याप्यन्तरे विज्ञानमये, ततस्तस्याप्यन्तरे आनन्दमये परमात्मबुद्धिरवतारिता। ततस्तस्याप्यन्तरस्य कस्यचिदनुक्त्या आनन्दमय एव प्रकृतपरमात्मत्वबुद्धिः प्रतिष्ठापितेति निर्णीयते ॥

---

[1] तै. आन. २-३. [2] तै. आन. २-२. [3] तै. आन ६-२. [4] ऐतरेय १-१-१.

अत आत्मबुद्धिविषयेषु प्राणमयादिषु आत्मशब्दः परमात्मविषय एवेति उपक्रमेऽपि परमात्मन एव प्रकान्तत्वेन उत्तरवाक्येन आनन्दमयपर्याये आत्मशब्दस्य परमात्मविषयत्वनिर्णये उपक्रमविरोधाभावात् बहुभवनसंकल्पश्रवणाच्च आनन्दमयविषयोऽयमात्मशब्दः परमात्मविषय एवेति निर्धार्यत इति ॥

इत्थं च आनन्दमयस्याऽऽत्मत्वेन तस्य शिरःपक्षपुच्छाद्यसंभवात्, प्रकान्तस्याऽऽनन्दमयस्याऽऽत्मनो बुद्ध्यारोहार्थं शिरःपक्षादिकल्पनमात्रं, न तु वस्तुत इति प्रियशिरस्त्वादीनां ब्रह्मगुणत्वाभावान्न तेषां ब्रह्मविद्यासनुसन्धेयतामसङ्ग इति सिद्धम् ॥

परविद्यास्वखिलास्वपि चिदचिद्व्यावर्तकं विशिष्टं यत् ।
सत्यत्वाद्यध्येयं तद्ब्रह्म श्रीनिवासनाम भजे ॥ १०८ ॥

"सत्यं ज्ञानमनन्तं ब्रह्म" इति लक्षणवाक्यगतब्रह्मशब्दवाच्यं ब्रह्म "तस्माद्वा एतस्मादात्मन आकाशस्संभूतः" इत्यत्र 'तस्माद्वा एतस्मादात्मन' इत्यनेन परामृश्य, तस्याऽऽनन्दमयत्वमभिधाय, तस्य "स यश्चायं पुरुषे यश्चासावादित्ये" इति आदित्यमण्डलान्तस्थश्रीनिवासापरनामधेयपुण्डरीकाक्षपुरुषाभेदोक्तेः, लक्षणवाक्योक्तं ब्रह्म श्रीनिवास एवेति निर्धार्यत इति भावः ॥

८५ ॥ इति आनन्दाद्यधिकरणम् ॥ ४ ॥

## १९ ॥ कार्याख्यानाधिकरणम् ॥ ५ ॥

पूर्वं [1]"सर्वाभेदादन्यत्रेमे" इति सूत्रे प्रस्तुतायां प्राणविद्यायां तास्मिन्नधिकरणे अविचारितांशविचाराय प्रवृत्तमिदमधिकरणम् ॥

[1] शा. सू ३-३-१०.

# कार्याख्यानादपूर्वम् ॥ ३-३-१८ ॥

कार्यस्य–प्राणान्तराप्राप्तस्य, आख्यानात्–विधानादेव; विधिसार्थक्यसंभवादित्यर्थः। अपूर्वं–अप्राप्तं अपां वासस्त्वानुसन्धानमेव प्राणविद्यायां विधीयत इति सूत्रार्थः॥

वाजसनेयके माध्यन्दिनशाखायां प्राणविद्याप्रकरणे [1]"किं मे वासो भविष्यति" इति पृच्छ्यमानेन पृष्टैर्वागादिभिः [1]"आप इति होचुः" इत्यनेन अपां प्राणवासस्त्वमुक्तमित्युक्त्वा, [1]"तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाऽऽचामेत्" इत्यभिधाय, "एतमेव तदनमनग्नं कुरुते" इत्यभिहितम्॥

अत्रैवं पूर्वपक्षः–[1]"तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाऽऽचामेत्" इत्याचमनस्य विधिः श्रूयते। यद्यपि [1]"किं मे वासः आपो वासः" इति, [1]"एतमेव तदनमनग्नं कुरुते" इति उपक्रमोपसंहारयोः पर्यालोचनया अपां प्राणवासस्त्वदृष्टिविधाने तात्पर्यं प्रतीयते, अपां प्राणवासस्त्वोक्तेरनग्नकरणोक्तेश्च प्रयोजनान्तरानुपलंभात्, तथापि 'आचामेत्' इति विधिश्रुतेर्बलीयस्त्वात्, अपां प्राणवासस्त्वानुसन्धाने विध्यदर्शनाच्च आचमनमेव प्राणविद्याङ्गं विधीयते। न च भोजनाङ्गाचमनस्य स्मृत्याचारप्राप्तत्वात् विधिसंभव इति [illegible] शंक्यं, प्राणविद्याङ्गस्याऽऽचमनान्तरस्य विधिसंभवादिति॥

सिद्धान्तः।

उपक्रमोपसंहारपर्यालोचनया अपां प्राणवासस्त्वानुसन्धाने वाक्यतात्पर्यावगमात् तस्याप्राप्तत्वात्, छान्दोग्ये समानप्रकरणे आचमनविध्यदर्शनात्, भोजनाङ्गाचमनस्य स्मृत्याचारप्राप्तत्वात् अप्राप्त एव विधिसार्थक्यसंभवाच्च, [2]"दध्ना जुहोति" इत्यादावप्राप्ते दध्यादौ विध्यन्वयवत् [1]"एवं

[1] बृ. ५-१-१४. [2]

विद्वाचामेत् " इत्यत्र प्राप्तमाचमनमुल्लंघ्य अप्राप्तेऽपां प्राणवासस्त्वानुसन्धाने एव विध्यन्वय इति स्मृत्याचारप्राप्ताचमनकर्मभूतास्वप्सु प्राणवासस्त्वानुसन्धानमिह विधीयत इति ॥

याजसनेये साम्नि च यदधीनप्राणविषयविद्यायां ।
प्राणोपासननिष्ठैः पूर्वं परतश्च भुक्तानाम् ॥ १०९ ॥
आचमने विनियुक्तास्वप्स्वेव प्राणवासस्त्वं ।
अनुसन्धेयं विहितं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ११० ॥

सूत्रव्याख्यानादेव श्लोको व्याख्यात । अत्र प्राणविद्याचिन्तनस प्रयोजनं श्रीनिवासमहिमप्रतिपादनमिति पूर्वमेव निरूपितम् ॥

८६ ॥ इति कार्याख्यानाधिकरणम् ॥ ५ ॥

---

२० ॥ समानाधिकरणम् ॥ ६ ॥

आनन्दाद्यधिकरणे ब्रह्मस्वरूपनिरूपकत्वेन ब्रह्मस्वरूपप्रतीत्यनुबन्धितया यथा सत्यत्वादिगुणाना सर्वविद्यासूपसहार उक्त, तथा शाण्डिल्यविद्यायामपि सत्यसङ्कल्पत्वान्तर्गततया वशित्वादीनामप्युपसहार कर्तव्य इति प्रदर्शनाय प्रवृत्तमिदमधिकरणम् ॥

## समान एवं चाभेदात् ॥ ३-३-१९ ॥

अग्निरहस्योक्ताया शाण्डिल्यविद्याया यथा मनोमयत्वादिरुपास्यतया श्रुत, तथा बृहदारण्यकश्रुताया तस्या मनोमयत्वादिरुपास्यतया श्रुत । एवं च उभयत्र रूपे समाने सति, बृहदारण्यकोक्तवशित्वादिगुणानामग्निरहस्योक्ततद्विद्याश्रुतसत्यसङ्कल्पत्वाभेदात् न विद्याभेद इति सूत्रार्थ ॥

वाजसनेयके अग्निरहस्ये [1]"सत्यं ब्रह्मेत्युपासीत, अथ खलु क्रतुमयोऽयं पुरुष" इत्यारभ्य, [1]"स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपं सत्यसङ्कल्पमाकाशात्मानं कामरूपिणं सत्यसङ्कल्पं सत्यधृतिं सर्वगन्धं सर्वरसं सर्वा दिशोऽनुप्रभूतं सर्वमिदमभ्यात्तमवाक्यनादरं यथा व्रीहिर्वा यवो वा" इत्यादिना शाण्डिल्यविद्या आम्नाता। तथा बृहदारण्यके माध्यन्दिनशाखायां पुनरपि शाण्डिल्यविद्या आम्नायते। [2]"मनोमयोयं पुरुषो भास्सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानस्सर्वस्याधिपतिस्सर्वमिदं प्रशास्ति यदिदं किं च" इति। अत्र अग्निरहस्याम्नातशाण्डिल्यविद्यायामश्रुतानां वशित्वाधिपतित्वादीनां बृहदारण्यकोक्तशाण्डिल्यविद्यायां श्रवणेन तत्रानुक्तानां सत्यसङ्कल्पत्वकामरूपत्वादीनामग्निरहस्ये श्रवणाच्च उपास्यरूपभेदात् विद्ययोर्भेद इति पूर्वपक्षः।

## सिद्धान्तः।

बृहदारण्यकोक्तशाण्डिल्यविद्याश्रुतानां वशित्वादीनामग्निरहस्योक्तविद्याश्रुतसत्यसङ्कल्पत्वकार्यतया तद्वितितिरूपत्वेन तदभेदान्नात्र रूपभेदः। एवमग्निरहस्ये श्रुतानां कामरूपत्वादीना बृहदारण्यकश्रुतवशित्वकार्यतया तदन्तर्भावान्न रूपभेदः। अत उभयत्र सत्यसङ्कल्पत्ववशित्वादीनां सत्वान्न रूपभेदः। एवं च मनोमयरूपधर्मप्रत्यभिज्ञानेन सैवेयं विद्येति प्रत्यभिज्ञायमानत्वात् रूपभेदविरहाच्च न विद्याभेदः॥

> उपनिषदि वाजिनां द्विः श्रुताऽपि शाण्डिल्यविद्यैका।
> एकत्र यस्य कथयन्त्यमोघसङ्कल्पताख्यगुणम्॥ १११॥
>
> तस्यैव विततिभेदान् सर्ववशित्वप्रशासितृत्वाद्यान्।
> अन्यत्र प्राह गुणांस्तद्ब्रह्म श्रीनिवासनाम भजे॥ ११२॥

---

[1] वाजसनेयके अग्निरहस्ये.   [2] बृ. ७-६-१.

अर्थः । वाजसनेयकशाखायामग्निरहस्ये बृहदारण्यके च द्विवार श्रुताऽपि शाण्डिल्यविद्या, एका--अभिन्ना । तर्हि पुनःश्रवणवैयर्थ्यमिति शङ्कां परिहरति एकत्र इत्यादिना । एकत्र अग्निरहस्ये, यस्य श्रीनिवासस्य अमोघसङ्कल्पताख्यगुणं सत्यसङ्कल्पत्वरूपगुणं, कथयन्ती विद्याना सती, अन्यत्र बृहदारण्यके, तत्पत्र सत्यसङ्कल्पत्वस्यैव, विततिभेदान् तत्कार्यतया तद्विस्ताररूपान्, सर्ववशित्वप्रशासितृत्वादीन् गुणान् आह, तद्ब्रह्म इति पूर्ववत् ॥

इदमुपलक्षणम् । एकत्र वाजसनेयके वशित्वादिगुणान् कथयन्ती अन्यत्र अग्निरहस्ये तद्विततिरूपकामरूपत्वादिगुणान् प्राह इत्यपि द्रष्टव्यम्॥

एकत्र कारणगुणोक्तिरन्यत्र तत्कार्यगुणोक्तिरिति द्विराम्नानस्य न वैयर्थ्यशङ्कावकाशः । कार्योक्तिस्थले कारणस्य, कारणोक्तिस्थले कार्यस्य चोपसंहारात् विद्याभेदः ॥

अग्निरहस्ये, "मनोमयः प्राणशरीरमात्मानमुपासीत" इत्यनेन [1]"यस्य प्राणश्शरीरं" इत्यन्तर्यामिब्राह्मणोक्तान्तर्यामिणः प्रत्यभिज्ञानात् तस्य सुबालोपनिषदैकार्थ्येन नारायणत्वावगमात् "मनोमयः प्राणशरीरमात्मानमुपासीत" इत्युक्तमनोमय आत्मा श्रीनिवास एवेति निर्धार्यत इति ॥

८७ ॥ इति समानाधिकरणम् ॥ ६ ॥

---

२१ ॥ सम्बन्धाधिकरणम् ॥ ७ ॥

पूर्वाधिकरणे शाण्डिल्यविद्यायामग्निरहस्ये बृहदारण्यके च उपास्यस्य मनोमयस्यैव ब्रह्मण उपास्यत्वेन सम्बन्धाद्गुणानामुपसंहार इत्युक्तम् ।

---

[1] बृ ५ ७ २२

तद्वत् एकस्य व्याहृतिशरीरकस्य सत्यस्य ब्रह्मण उभयत्र संबन्धाद्विद्यैक्यात् नाम्नोरुभयत्रोपसंहारः कार्य इत्याशङ्कापरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## संबन्धादेवमन्यत्रापि ॥ ३-३-२० ॥

इद पूर्वपक्षसूत्रम् । यथा शाण्डिल्यविद्ययोरुभयोर्मनोमयस्यैकस्योपास्यत्वेन संबन्धात् विद्यैक्यमिति गुणोपसंहार, एवं अन्यत्रापि व्याहृतिविद्यायामपि व्याहृतिशरीरकस्य ब्रह्मण आदित्ये अक्षिणि चोपास्यतया सबन्धात्, अह अहमिति नाम्नोरुपसंहार इति सूत्रार्थ. ॥

भाष्य । बृहदारण्यके [1]" सत्यं ब्रह्म " इत्यारभ्य, [2]" तद्यत्सत्यमसौ आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चाय दक्षिणेऽक्षिन्" इत्युपक्रम्य आदित्यमण्डले अक्षिणि च भूर्भुवस्सुवरिति व्याहृतिशरीरकस्य सत्यशब्दितस्य ब्रह्मण आदित्यमण्डले दक्षिणेऽक्षिणि चोपासनं विधाय, तस्य ब्रह्मण अहरिति अहमिति च स्थानभेदेन द्वे नामनी उपदिष्टे । तत्र व्याहृतिशरीरकस्य सत्यस्य ब्रह्मण एकस्यैव आदित्यमण्डलेऽक्षिणि च उपास्यतया उपस्यैक्यात् विद्यैक्य, विद्यैक्याच्च नाम्नोर्विकल्पत उपसंहार इति ॥

न वा विशेषात् ॥ ३-३-२१ ॥ इद सिद्धान्तसूत्रम् ॥
[दर्शयति च ॥ २२ ॥]

न वा—आदित्यमण्डलस्थव्याहृतिशरीरकसत्यसंज्ञकब्रह्मोपासनस्य दक्षिणाक्षिस्थव्याहृतिशरीरकसत्याख्यब्रह्मोपासनस्य च नैक्यमित्यर्थ. । अत्र हेतुमाह विशेषात्—रूपभेदात् इत्यर्थ ॥

---

[1] बृ ७-४-२ [2] बृ ७-५-१

भावः । व्याहृतिशरीरकत्वस्यैव आदित्यमण्डलदक्षिणाक्षिरूपस्थानयोरप्युपास्यकोट्यन्तर्भूतत्वेन उपास्यस्थानभेदात् रूपभेदेन विद्याभेदः । एवं [1]"तस्यैतस्य तदेव रूपं यदमुष्य रूपं" इति छान्दोग्ये चाक्षुषपुरुष आदित्यमण्डलपुरुषरूपाद्यतिदेशादपि स्थानभेदे विद्याभेदः सिद्धः । स्थानभेदेऽपि विद्यैक्ये अतिदेशं विनैव चाक्षुषपुरुषे आदित्यमण्डलपुरुषरूपादिप्राप्त्या तदतिदेशस्य वैयर्थ्यप्रसङ्गात् । अतस्तत्तत्स्थाने आम्नातस्य नाम्नस्तत्तत्स्थानकतया ब्रह्मोपासने व्यवस्थेति ॥

आदित्यमण्डलस्थं त्वहरिति नाम्ना यदक्षिनिष्ठं तु ।
अहमिति नाम्नोपास्यं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ११२ ॥

अर्थस्तु सूत्रव्याख्यानेन स्पष्टः ॥

अत्र अन्तरादित्यविद्यायामादित्यमण्डलस्थस्य पुण्डरीकाक्षत्वोक्त्या पुण्डरीकाक्षापरनामधेयश्रीनिवासत्वावगमात् स एव श्रीनिवासो व्याहृतिविद्यायामादित्यमण्डलस्थतया अहरिति नाम्ना व्याहृतिशरीरकतया च उपास्यत इति निर्धार्यते ॥

८८ ॥ इति संबन्धाधिकरणम् ॥ ७ ॥

२२ ॥ संभृत्यधिकरणम् ॥ ८ ॥

पूर्वाधिकरणे स्थानभेदादुपास्यनाम्नोर्व्यवस्था उक्ता । तद्वदुपास्यगुणविशेषाणां स्थानभेदाद्व्यवस्थेति प्रदर्शयितुं प्रवृत्तमिदमधिकरणम् ॥

## संभृतिद्युव्याप्त्यपि चातः ॥ ३-३-२३ ॥

संभृतिश्च द्युव्याप्तिश्च, तयोस्समाहारः संभृतिद्युव्याप्ति । समाहारद्वन्द्वैकवचनान्तमिदम् । संभृतिः-ज्येष्ठवीर्यपूर्णत्वम्; द्युव्याप्तिः-द्युलोकव्याप्तत्वम् । इदमुभयमपि, अतः-स्थानभेदात् व्यवस्थितमिति सूत्रार्थः ॥

[1] छा. १-७-५.

[1]"ब्रह्म ज्येष्ठा वीर्या सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान। ब्रह्म भूतानां प्रथमोऽत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः" इति राणायनीयानां खिलेषूपासनविशेषमनारभ्य श्रूयते। अस्यार्थः—ब्रह्म ब्रह्मणा, ज्येष्ठा—प्रशस्तानि, वीर्या पराक्रमाः, सम्भृतानि सम्यगव्याहततया धृतानि। ज्येष्ठं ब्रह्म, अग्रे पूर्वमेव, दिवं-आकाशं, आततान व्याप्नोत्। ब्रह्म भूतानां, प्रथमोत जज्ञे प्रथममेव स्थितमित्यर्थः। तेन ब्रह्मणा कः कलहं कर्तुमर्हति, न कोऽपीत्यर्थः॥

अत्र ब्रह्मणोऽव्याहतवीर्यत्वं द्युलोकव्याप्तत्वं च गुणद्वयं श्रुतम्। इदं न ब्रह्मस्वरूपोपदेशपरं, अपरिच्छिन्नस्य ब्रह्मणो द्युपरिच्छिन्नत्वस्य स्वरूपत्वासंभवात्। अतः उपासनार्थमेवोक्तगुणोपदेशः इत्याश्रयणीयं, अन्यथा उपदेशवैयर्थ्यप्रसङ्गात्। अतः उपासनविशेषे उक्तगुणयोर्विनियोजकप्रमाणाभावात् सर्वेषु ब्रह्मोपासनेषूपसंहारः कर्तव्य इति पूर्वपक्षः।

## सिद्धान्तः।

हृदयाद्यल्पप्रदेशावच्छिन्नतया उपासनरूपेषु दहराद्युपासनेषु द्युपरिच्छिन्नतया ब्रह्मण उपासनं न संभवति, हृदयपरिच्छिन्नत्वद्युपरिच्छिन्नत्वयोर्विरोधात्। शाण्डिल्यादिविद्यासु अल्पस्थानविषयासु [2]"ज्यायान् पृथिव्या ज्यायानन्तरिक्षात्" इत्याद्युक्तिस्तूपदर्शितविरोधादेव न तथोपासनार्था, अपि तु ब्रह्ममाहात्म्योक्तिपरा। इत्थं न येषूपासनेषूपाधिविशेषपरिच्छिन्नत्वमुपास्यतया न श्रुतं, तेषूपासनेषु द्युव्याप्तेरुपास्यतयोपसंहारः। तत्सहचरितस्य ज्येष्ठवीर्यसंभृतत्वस्यापि तत्समानदेशत्वेन तत्रैवोपसंहारः। सतोऽपरिच्छिन्नं ब्रह्म उपासनसौकर्याय अस्मास्वनुग्रहेण हृदयादितत्तदल्पदेशावच्छिन्नमित्यनुसन्धातुं शक्यतया सर्वासु ब्रह्मविद्यास्वनन्तत्वरूपब्रह्मस्वरूपनिरूपकधर्मस्योपसंहारे न विरोधः॥

[1] तै राणायनीय [2] छा ३ १४-३.

यद्‌द्युव्याप्त्यादिगुणा अल्पायतनान्यविषयविद्यासु ।
व्यवतिष्ठन्ते ध्येयास्तद्ब्रह्म श्रीनिवासनाम भजे ॥ ११४ ॥

अर्थः । यस्य श्रीनिवासस्य द्युव्याप्तिप्रभृतयो गुणा अल्पप्रदेशपरिच्छिन्नब्रह्मविषयविद्याऽतिरिक्तब्रह्मविद्यासु ध्येयतया व्यवस्थिता, तद्ब्रह्म इति पूर्ववत् ॥

[1]"यस्य ब्रह्म च क्षत्र च उभे भवत ओदन । मृत्युर्यस्योपसेचन" इति मन्त्रे उक्तस्य कृत्स्नचराचरसंहर्तृत्वस्य [2]"ब्रह्म ज्येष्ठा वीर्या" इत्यादि-प्रकृतमन्त्रोक्तज्येष्ठवीर्यसंभृतिकार्यतया प्रकृतमन्त्रोक्त ब्रह्मैव [1]"यस्य ब्रह्म च क्षत्र च" इति मन्त्रे कार्यमुखेनोक्तमिति निर्धारणात्, [2]"तेनार्हति ब्रह्मणा स्पर्धितु क" इत्यनेन [1]"क इत्था वेद यत्र स" इति तन्मन्त्र-खण्डप्रत्यभिज्ञानात्, तन्मन्त्रस्य च श्रीनिवासापरनामधेयविष्णुविषयताया [3]अत्त्रधिकरणे निर्णीतत्वात्, श्रीनिवास एवेद [2]"ब्रह्म ज्येष्ठा" इति मन्त्रोक्त ब्रह्मेति निर्धार्यत इत्यभिप्रायेण, अत्र यद्‌द्युव्याप्ति इत्याद्युक्तम् ॥

८९ ॥ इति संभृत्यधिकरणम् ॥ ८ ॥

२३ ॥ पुरुषविद्याधिकरणम् ॥ ९ ॥

पूर्वाधिकरणे द्युव्याप्तिसन्निधिश्रुतस्य संभृतिगुणस्य तत्समानदेशत्व-मुक्तम् । तद्वत् ब्रह्मविद्यासन्निधिसमाम्नाता पुरुषविद्या सन्निधिपठितत्वेन तच्छेषभूतेति प्रदर्शयितुं प्रवृत्तमिदमधिकरणम् ॥

## पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥
## ॥ ३-३-२४ ॥

सूत्रार्थस्सिद्धान्ते व्यक्तीभविष्यति ॥

[1] कठ १-२-२५ [2] तै घणायनीय [3] १-२-२ अ.

तैत्तिरीयके [1]"तस्यैवं विदुषो यज्ञस्याऽऽत्मा यजमानश्श्रद्धा पत्नी" इत्युपक्रम्य, [1]"यन्मरणं तदवभृथ" इत्यादिना पुरुषविद्या आम्नायते। एवं छान्दोग्येऽपि [2]"पुरुषो वाव यज्ञ" इत्यादिना पुरुषविद्या आम्नाता। अत्रानयोर्विद्ययोः पुरुषावयवेषु यज्ञावयवत्वकल्पनसाम्यात् मरणे अवभृथत्वकल्पनसाम्याच्च क्वचिदङ्गकल्पनाभेददर्शनेऽप्यनुष्ठानविकल्पसंभवाच्च रूपाभेद। पुरुषविद्येति संज्ञैक्यम्। तैत्तिरीयकश्रुतपुरुषविद्यायां ब्रह्मप्राप्तिफलश्रवणेऽपि ब्रह्मविद्यानात्मिकायां पुरुषविद्यायां ब्रह्मप्राप्तिफलकत्वायोगेन तत उत्कृष्य ब्रह्मप्राप्तिफलस्य पूर्वानुवाकश्रुतब्रह्मविद्यायां निवेशनीयतया तत्र श्रुतपुरुषविद्याया फलाकांक्षायां छान्दोग्यश्रुतपुरुषविद्याफलस्य षोडशाधिकशतवर्षजीवनस्यैव फलत्वेनाङ्गीकर्तव्यतया फलरूपचोदनाख्यानामविशेषात् विद्यैक्यमिति पूर्वपक्षः॥

सिद्धान्तः।

तैत्तिरीयके पुरुषविद्यायां [1]"यत्सायं प्रातर्मध्यन्दिनं च तानि सवनानि" इत्यादिना आम्नातानां यज्ञावयवानां छान्दोग्योक्तपुरुषविद्यायामनुक्तत्वात् तत्र सवनत्वेनाभिहितस्य त्रेधाविभक्तपुरुषायुषस्य तैत्तिरीयकोक्तपुरुषविद्यायामनुक्तेश्च न रूपैक्यम्। अतो न विद्यैक्यम्॥

एवं तैत्तिरीयकाम्नातपुरुषविद्याया ब्रह्मविद्यात्वाभावेन तस्याः 'फलवत्सन्निधावफलं तदङ्गं' इति न्यायेन पूर्वानुवाकश्रुतब्रह्मविद्याङ्गत्वसिद्ध्या अङ्गिभूतब्रह्मविद्याफलभूतब्रह्मप्राप्तिरेव फलम्; छान्दोग्योक्तपुरुषविद्यायास्तु दीर्घायुःप्राप्तिः फलमिति फलसंयोगोऽपि भिद्यते। अतः फलसंयोगस्य रूपस्य च भेदात्, उक्तपुरुषविद्ययोर्भेद इति॥

ब्रह्मप्राप्तिफलैका नान्याऽतः पुरुषविद्ययोर्भेदः।
यत्प्राप्त्यप्राप्तिभ्यां तद्ब्रह्म श्रीनिवासनाम भजे॥ ११५॥

[1] तै. नारा ५२. [2] छा. ३-१६-७.

अर्थः । छान्दोग्यतैत्तिरीयकपुरुषविद्ययोस्तैत्तिरीयोक्ताया ब्रह्मविद्याङ्गत्वेन ब्रह्मप्राप्ति फलम्, अन्यस्याश्छान्दोग्योक्ताया ब्रह्मविद्याऽनङ्गत्वात् आयुःप्राप्ति फलमिति फलभेदाद्विद्याभेद । एका-तैत्तिरीयशाखोक्ता पुरुषविद्या, अङ्गद्वारा ब्रह्मप्राप्तिफला; अन्या—छान्दोग्योक्ता, न ब्रह्मप्राप्तिफला । अतो यस्य श्रीनिवासस्य प्राप्त्यप्राप्तिभ्यां पुरुषविद्ययोर्भेदो भवति तद्ब्रह्मेति पूर्ववत् ॥

तैत्तिरीयके अम्भस्यनुवाके पठितेन [1]"अद्भ्यस्सम्भूतो हिरण्यगर्भ इत्यष्टौ" इत्यनेन तदनुवाकस्य [1]"अद्भ्यस्सम्भूत" इत्यनुवाकसमानप्रकरणता, तया "अद्भ्यस्सम्भूत" इत्यनुवाकश्रुतलक्ष्मीपतिविषयकता च अवगमय्य [2]"तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनां" इत्यनेन तनत्यमन्त्रेण श्रीनिवासापरनामधेयस्य लक्ष्मीपते ब्रह्मशब्दार्थत्वनिर्धारणात् उपसंहारे [3]"तस्माद्ब्रह्मणो महिमानमाप्नोति" इति फलवाक्ये श्रुतेन ब्रह्मशब्देन श्रीनिवासापरनामधेयलक्ष्मीपतिरेव विवक्षित इति निश्चीयत इति अभिप्रायेण, अत्र यत्प्राप्त्यप्राप्तिभ्यां इत्युक्तम् ॥

९० ॥ इति पुरुषविद्याधिकरणम् ॥ ९ ॥

२४ ॥ वेधाद्यधिकरणम् ॥ १० ॥

पूर्वाधिकरणे ब्रह्मविद्यासन्निधिश्रुतायाः पुरुषविद्याया ब्रह्मविद्याङ्गत्वमुक्तम् । तद्वत् ब्रह्मविद्यासन्निधिपठितानां [4]"शं नो मित्र" इत्यादिमन्त्राणां शत्रुहृदयभेदाध्ययनाद्यर्थप्रकाशकत्वरूपलिङ्गेन तेषां मन्त्राणां ब्रह्मविद्याङ्गत्वमिति शङ्कापरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## वेधाद्यर्थभेदात् ॥ ॥ ३-३-२५ ॥

वेधः-शत्रुहृदयभेदनं, आदिपदेन अध्ययनादिकं गृह्यते । ततश्च

[1] तै नारा १ ११ [2] तै आर १-१३ १ [3] तै नारा ७२ [4] तै शी १

[1]"शुक्रं प्रविध्य हृदयं प्रविध्य" [2]"तेजस्वि नावधीतमस्तु" इत्यादि-मन्त्राणामभिचाराध्ययनादिरूपकर्मसु विनियोगान्न ब्रह्मविद्याङ्गत्वमिति सूत्रार्थः ॥

[3]"शं नो मित्र," [4]"सह नाववतु" इत्यादिमन्त्राणां ब्रह्मविद्याप्रकरणे पाठस्य प्रयोजनान्तरादर्शनात्, तेषां ब्रह्मविद्याङ्गत्वमङ्गीकार्यं इति पूर्वपक्षः ।

सिद्धान्तः ।

उदाहृतमन्त्रेषु अध्ययनरूपार्थप्रकाशनसामर्थ्यरूपलिङ्गेन प्रकरणात् बलीयसाऽध्ययनाङ्गत्वावगमान्न ब्रह्मविद्याङ्गत्वम् । यथा [5]"शुक्रं प्रविध्य" इत्यादिमन्त्राणामुपनिषदारंभेऽधीतानामपि हृदयभेदनप्रकाशकत्वलिङ्गेनाभिचारादिकर्माङ्गत्वम् । एवमिहापि [3]"शं नो मित्रः," [4]"सह नाववतु" इत्यादिमन्त्राणामध्ययनप्रकाशकत्वरूपलिङ्गेनाध्ययनाङ्गत्वमेव, न ब्रह्मविद्याङ्गत्वम् ॥

यदुपासनाविधायकवेदाध्ययने भवन्ति विनियुक्ताः ।
मन्त्राश्शं नो मुख्यास्तद्ब्रह्म श्रीनिवासनाम भजे ॥ ११६ ॥

[3]"शं नो मित्रश्शं वरुण" इत्याद्या मन्त्राः श्रीनिवासापरनामधेयनारायणविषयकानन्दमयदहराद्युपासनविधायकतैत्तिरीयोपनिषदध्ययनाङ्गतया विनियुक्ता भवन्ति, तद्ब्रह्मेति पूर्ववत् ॥

[3]"शं नो मित्र" इत्यादिमन्त्रपठनरूपनियमपूर्वकाध्ययनग्राह्योपनिषत्प्रतिपाद्यः श्रीनिवास इति प्रमाणप्रशंसया श्रीनिवासाख्यप्रमेयप्रशंसा कृता भवति ॥

९१ ॥ इति वेधाद्यधिकरणम् ॥ १० ॥

---

1 [2] तै. मृत्यु. १-१. [3] तै. शी. १. [4] तै. आन. १. १. [5]

## २५ ॥ हान्यधिकरणम् ॥ ११ ॥

पूर्वाधिकरणे ब्रह्मविद्यासन्निधिपठितानां मन्त्राणां तदनङ्गत्वं व्यवस्थापितम् । इदानीं ब्रह्मविद्यासन्निधिसमाम्नातानां हानादीनां विचाराय प्रवृत्तमिदमधिकरणम् ॥

# हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ ३-३-२६ ॥

छान्दोग्ये [1]"अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि" इत्यत्र मुक्तिं प्राप्स्यतो ब्रह्मविदः पुण्यपापयोर्विधूननं त्यागरूपं श्रूयते । शाट्यायनके तु [2]"तस्य पुत्रा दायमुपयन्ति सुहृदस्साधुकृत्यां द्विषन्तः पापकृत्याम्" इति ब्रह्मवित्सम्बन्धिनोः पुण्यपापयोर्यथाक्रमं तन्मित्रामित्रयोस्संक्रमश्श्रूयते । कौषीतक्युपनिषदि तु [3]"तत्सुकृतदुष्कृते धूनुते तस्य प्रिया ज्ञातयस्सुकृतमुपयन्ति अप्रिया दुष्कृतम्" इत्युभयमपि श्रूयते । तदेवं क्वचित् ब्रह्मविद्यापुण्यपापयोस्त्यागः, क्वचित् पुण्यपापयोरन्यत्र संक्रमः, क्वचित् त्यागस्संक्रमश्चोभयं श्रूयते । अनयोस्त्यागसंक्रमयोः ब्रह्मप्राप्तिवत् ब्रह्मविद्याफलत्वात् तत्क्रतुन्यायेन ब्रह्मविदा चिन्तनीयत्वं सिद्धम् । [1]"अश्व इव रोमाणि विधूय पापम्" इति मन्त्रेण च तच्चिन्तनं सिद्धम् । एवं हानिचिन्तनस्य संक्रमचिन्तनस्य उभयचिन्तनस्य च तत्तच्छ्रुतिभिः कर्तव्यत्वे सिद्धे, एतेषां त्रयाणां विकल्प एव । न हान्युपायनचिन्तनयोस्समुच्चयः, कौषीतकिनामुपनिषदि उभयचिन्तनस्य सर्वब्रह्मविद्यानिष्ठैः कर्तव्यतासिद्ध्या शाखान्तरे पृथक्पृथक्तच्चिन्तनविधानवैयर्थ्यप्रसङ्गात् । न हि तत्तच्छाखाध्येतृपुरुषभेदेन तत्तद्विधिरिति वक्तुं शक्यम्,

---

[1] छा ८।१३।१ [2] · · · [3] कौषी १४

अविशेषपुनश्श्रवणविरहात् । अविशेषपुनश्श्रवणे हि तथा सार्थक्यं सुवचम् । इह तु क्वचित् हानेरेव, क्वचित् सङ्क्रमस्यैव, क्वचिदुभयोः चिन्तनस्य विधिरित्यतो नाविशेषपुनश्श्रवणम् । न च उभयचिन्तनस्य विद्याविशेषमात्रनियतविषयत्वं वक्तुं शक्यम्; ब्रह्मविद्यानिष्ठानां सर्वेषामपि पुण्यपापयोस्त्यागस्य त्यक्तयोस्तयोः क्वचित्सङ्क्रमस्य चावश्यकतया तच्चिन्तनस्य कर्तव्यत्वात् । अतो हान्यादिचिन्तनानां विकल्प एवेति पूर्वपक्षे प्राप्ते अनेन सूत्रेण सिद्धान्त उच्यते—

तुशब्दः पक्षव्यावृत्त्यर्थः । हानौ—सुकृतदुष्कृतयोस्त्यागमात्रे श्रूयमाणायामपि, उपायनं-अन्यत्र संक्रमोऽपि उपसंहर्तव्य इत्यर्थः । तत्र हेतुमाह उपायनशब्दशेषत्वात् इति । उपायनशब्दस्य-अन्यत्रोपसंक्रमप्रतिपादकवाक्यस्य हानिप्रतिपादकवाक्यं प्रति शेषत्वात्; तदपेक्षितार्थसिद्ध्यर्थत्वादित्यर्थः ॥

अयं भावः— विदुषा त्यक्तयोः पुण्यपापयोः फलभोगमन्तरेण नाशासंभवात् अन्यत्र संक्रमोऽवश्यापेक्षित, त्यक्तस्यैव सक्रमसंभवात्; संक्रमोऽपि त्यागमपेक्षते । अतस्त्यागसक्रमयोरेकैकस्य श्रवणेऽप्युभयमुभयत्रोपसंहर्तव्यम् । ततश्च पुण्यपापयोर्हानिचिन्तनमुपायचिन्तनं चोभयमपि ब्रह्मविद्यानिष्ठैस्सर्वै कर्तव्यमेव ॥

नन्वत्र विदुषा त्यक्तयोः पुण्यपापयोर्मित्रामित्रयोः कथं संक्रम, स च कीदृश इति चेत्, उच्यते—पुण्यपापे परमात्मनस्तत्तत्कर्मफलदित्सारूपे । तत्र ब्रह्मविदाऽनुष्ठितेन ब्रह्मोपासनरूपप्रायश्चित्तेन प्रीतः परमात्मा "अस्मिन् ब्रह्मविदि तत्कर्मफलं न दास्यामि" इति सङ्कल्पयति । स एव पुण्यपापयोः त्याग इत्युच्यते । ब्रह्मविदि द्विषत्सु तद्द्वेषफलतया ब्रह्मविकृतपापफलमस्मै दास्यामि इति सङ्कल्पयति; अयमेव अमित्रे पापसक्रम इत्युच्यते । ब्रह्मविदि प्रीयमाणेषु तत्फलतया तत्पुण्यफलमस्मै दास्यामि इति सङ्कल्पयति; अयमेव

पुण्यसंक्रम इत्युच्यते। इदमुभयमपि शास्त्रसिद्धत्वेन तात्त्विकमेव, न ब्रह्मविद्यास्तुतिमात्रमिति मन्तव्यम्। शाखान्तराम्नातस्योपायनवाक्यस्य अन्यशाखाश्रुतहानिवाक्यं प्रति शेषत्वं दृष्टान्तैस्समर्थयति कुशाच्छन्दस्स्तुत्युपगानवत् इति। यथा कालपिनां [1]"कुशा वानस्पत्या" इति वाक्यस्थस्य वानस्पत्यशब्दस्य वनस्पतिसंबन्धमात्रवाचितया वनस्पतिविशेषसापेक्षस्य, [2]"औदुंबर्यः कुशा" इति शाठ्यायनवचनं उदुंबररूपवनस्पतिविशेषबोधनेन तच्छेषभूतं ; कुशाशब्दस्स्त्रीलिङ्गः, समिध इत्यर्थ.; यथा वा [3]"देवासुराणां छन्दोभिः" इति वाक्ये छन्दसा पौर्वापर्याकांक्षायां [4]"देवच्छन्दांसि पूर्वं" इति वाक्यं क्रमविशेषविधानेन तद्वाक्यशेषं भवति ; यथा वा [5]"हिरण्येन षोडशिनस्स्तोत्रमुपाकरोति" इत्यत्र स्तोत्रस्य कालविशेषाकांक्षायां, [6]"समयाविषिते सूर्ये हिरण्येन स्तोत्रमुपाकरोति" इति वाक्यं सूर्यास्तमयपूर्वकालरूपकालविधानेन तच्छेषभूतं भवति; षोडशिनः—षोडशिनाम्नः क्रतोरित्यर्थः ; यथा वा [7]"ऋत्विज उपगायन्ति" इत्यस्य ऋत्विक्सामान्यविषयकस्य [8]"नाध्वर्युरुपगायेत्" इति निषेधः अध्वर्युव्यतिरिक्तऋत्विक्कर्तृकत्वव्यवस्थापनेन शेषभूत', तद्वत् शाखान्तरश्रुतस्याप्युपायनवाक्यस्य शाखान्तरश्रुतहानिवाक्यशेषत्वमभ्युपगन्तव्यमिति भावः। एवं समुच्चयमनभ्युपगम्य हान्यादिचिन्तनानां विकल्पाभ्युपगमे दोषमाह तदुक्तं इति ॥

पूर्वमीमांसायां पर्युदासाधिकरणे [9]"अपि तु वाक्यशेष स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशत्वात्" इत्यत्रोक्तमित्यर्थ। [10]"यजेषु येयजामहं करोति, नानुयाजेषु" इति कर्मकाण्डे श्रूयते। तत्र सामान्यतो यज्ञेषु येयजामहस्य विधिः, अनुयाजरूपविशेषे निषेध इति पूर्वपक्षे प्राप्ते, अनेन सूत्रेण सिद्धान्त उच्यते। अयं भाव—[10]"यज्ञेषु येयजामहं करोति" इति

1 2 3 4 5 6 तै. स. ६-६-११.
7 8 9 पू. मी १०-८-४. 10

शास्त्रस्य अनुयाजमन्तर्भाव्य येयजामहविधेः, अनुयाजेषु तन्निषेधस्य चाश्रयणे, विहितस्य निषेधायोगेन अनुयाजेषु येयजामहस्य विकल्पः स्यात् । यथा [1]“अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाति” इति अतिरात्रे षोडशिग्रहणाग्रहणयोर्विकल्पस्तद्वत् । षोडशी–ग्रहापरनामधेयपात्रविशेषः । स च विकल्पः अष्टदोषदुष्टत्वादन्याय्यः ॥

तथा हि अनुयाजेषु येयजामहप्रयोगे तद्विधिशास्त्रस्य प्रामाण्यस्वीकारः, अप्रामाण्यत्यागः, निषेधशास्त्रस्याप्रामाण्यस्वीकारः, प्रामाण्यत्याग एव चत्वारो दोषाः, प्रयोगान्तरे येयजामहाकरणे तद्विधिशास्त्रस्य स्वीकृतप्रामाण्यत्यागः, त्यक्ताप्रामाण्यस्वीकारः; निषेधशास्त्रे स्वीकृताप्रामाण्यत्यागः, त्यक्तप्रामाण्यस्वीकारश्च इत्यष्टौ दोषाः । इत्यष्टदोषदुष्टत्वाद्विकल्पस्य गत्यन्तरसत्त्वे तदाश्रयणमयुक्तम् । इह तु “नानुयाजेषु” इत्यत्र नञः पर्युदासार्थकत्वं; तच्छब्दस्यानुयाजातिरिक्तत्वस्य यज्ञविशेषणत्वं चाश्रित्य यज्ञेष्वनुयाजव्यतिरिक्तेषु येयजामहकरणस्य विध्याश्रयणे न विकल्पप्रसङ्गः, एकस्य विधिनिषेधयोरभावात्। षोडशिग्रहणशास्त्रे तु गत्यन्तरविरहात् विकल्पाश्रयणमिति ॥

इत्थं च प्रकृते हानिचिन्तनोपायनचिन्तनोभयचिन्तनाना विकल्पाश्रयणे उक्तदिशा अष्टदोषप्रसङ्गात् हानिचिन्तनोपायनचिन्तनयोस्समुच्चय एवोचितः । एवं च सर्वासु ब्रह्मविद्यासु समुच्चयसिद्धौ कौषीतकिनामुपनिषद्युभयचिन्तनविधानम् विशेषपुनश्श्रवणरूपतयाऽध्येतृभेदेन परिहर्तव्यम् ॥

यद्विद्याफलभर्ता यो यन्निष्ठस्य सुकृतदुष्कृतयोः ।
निश्शेषतया हानिस्तन्मित्रामित्रयोः प्रवेशश्च ॥ ११७ ॥
द्वावेतयोर्द्वयोरपि चिन्तनमखिलासु विद्यासु ।
यच्चिन्तनरत्कार्यं तद्ब्रह्म श्रीनिवासनाम भजे ॥ ११८ ॥

1

अर्थः । यस्मिन्नुस्य—श्रीनिवासापरनामधेयब्रह्मोपासकस्य, सुकृतदुष्कृतयोर्निश्शेषतया, हानिः—त्याग, तस्य-ब्रह्मोपासकस्य, मित्रामित्रयोः सक्रमश्चेति यद्विद्याफलभूतौ, श्रीनिवासापरनामधेयब्रह्मोपासनफलभूतौ यो द्वौ, एतयोर्द्वयोश्चिन्तनं अखिलास्वपि, यस्य विद्यासु श्रीनिवासापरनामधेयब्रह्मण उपासनासु, यच्चिन्तनवत्—श्रीनिवासापरनामधेयब्रह्मचिन्तनवत्, कार्यं तद्ब्रह्म इति पूर्ववत् ॥

अत्र हानिप्रवेशयो ब्रह्मविद्याफलत्वकथन तयोश्चिन्तनीयत्वसिद्ध्यर्थम् । अत्र सर्वास्वानन्दमयादिविद्यासु चिन्तनीयस्य ब्रह्मण श्रीनिवासरूपत्व पूर्वमेव निर्धारितम् ॥

९२ ॥ इति हान्यधिकरणम् ॥ ११ ॥

---

## २६ ॥ सांपरायाधिकरणम् ॥ १२ ॥

पूर्वाधिकरणे विदुषा त्यज्यमानयो पुण्यपापयोर्हानिचिन्तन अन्यत्र सक्रमचिन्तन चोभय कर्तव्यमित्युक्तम् । तयो पुण्यपापयोर्हानिकालविशेष निर्धारणाय प्रवृत्तमिदमधिकरणम् ॥

## सांपराये तर्तव्याभावात् तथा ह्यन्ये ॥ ३-३-२७ ॥

[छन्दत उभयाविरोधात् ॥ २८ ॥
गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोध ॥ २९ ॥
उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥
यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३१ ॥]

विदुषः सांपराये-देहादुत्क्रान्तिसमये, सुकृतदुष्कृते निश्शेषं हीयेते इत्यङ्गीकार्यमित्यर्थः। तत्र हेतुमाह तर्तव्याभावात् इति । सुकृतदुष्कृताभ्यां तदूर्ध्वं प्राप्तव्यफलाभावादिति सूत्रार्थः ॥

अत्रैवं पूर्वपक्षः—छान्दोग्ये [1]"अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि" इत्यत्र विदुषः पुण्यपापयोर्देहान्निष्क्रान्तिकाल एव हानिः श्रूयते । शाट्यायनकेऽपि [2]"तस्य पुत्रा दायमुपयन्ति सुहृदस्साधुकृत्यां द्विषन्तः पापकृत्या" इति विदुषः पुत्रेषु दायसङ्क्रमकाले पुण्यपापयोरन्यत्र सङ्क्रमश्रवणाद्देहान्निष्क्रमणकाल एव पुण्यपापयोर्हानिस्सिद्ध्यति । कौषीतक्युपनिषदि तु [3]"स एतं देवयानं पन्थानमापद्य" इत्युपक्रम्य, "स आगच्छति विरजां, तां मनसाऽत्येति । तत्सुकृतदुष्कृते धूनुते" इत्यत्र विदुषो देहादुत्क्रम्य देवयानमार्गेण प्रस्थितस्यार्चिरादिमार्गमध्ये तयोर्हानिः श्रूयते । एवं सुकृतदुष्कृतहानिकालस्योभयथा श्रवणात्, उभयोपपत्त्यर्थं देहादुत्क्रमणकाले केषांचित् कर्मणां नाशः, अवशिष्टानां मार्गमध्ये नाश इति स्वीकार्यमिति ॥

सिद्धान्तः ।

छान्दोग्ये सद्विद्याप्रकरणे [4]"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति विदुषो देहादुत्क्रान्तिसमनन्तरमेव ब्रह्मप्राप्तिश्रवणात्, तत्रैव दहरविद्याप्रकरणे [5]"एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यत्र देहादुत्थितस्य विदुषः तदानीमेव ब्रह्मप्राप्तिश्रवणाच्च मध्ये सुकृतदुष्कृतफलभूतसुखदुःखभोगाभावसिद्ध्या देहादुत्क्रान्तस्य विदुषः कंचित् कालं सुकृतदुष्कृतयोरनुवृत्तौ प्रयोजनविरहेण देहादुत्क्रान्तिसमय एव तयोर्निश्शेषहानिरिति निर्धार्यते ॥

[1] छा ८-१३-१. [2] शाट्यायनके [3] कौषी १-४. [4] छा. ६-१४-२. [5] छा ८-३-४.

नन्वेवं तर्हि कौषीतक्युपनिषदि मार्गमध्ये तयोर्हानिश्रवणविरोध इति चेत्, देहादुत्क्रान्त्यनन्तरं सुकृतदुष्कृतयोः कतिपयकालानुवृत्तौ प्रयोजनाभावरूपार्थस्वभावस्य कौषीतकिश्रुतेश्चाविरोधनिर्वाहाय कौषीतक्युपनिषदि पर्यङ्कविद्याप्रकरणे [1]"स आगच्छति विरजां, तां मनसाऽत्येति ; तत्सुकृतदुष्कृते धूनुते " इत्यत्र श्रुतं 'तत्सुकृतदुष्कृते धूनुते' इति वाक्यं तत्स्थानादुत्कृष्य [2]"स एतं देवयानं पन्थानं " इत्यतः प्राङ्निवेशनीयम् । ततश्च विदुषो देवयानमार्गप्रस्थानात्प्रागेव सुकृतदुष्कृतयोर्निश्शेषहानिलाभात्, न पूर्वोक्तविरोधप्रसङ्गः ॥

ननु विदुषो देहादुत्क्रमणसमय एव निश्शेषकर्मक्षयाङ्गीकारे कर्मारब्धदेहस्य नाशप्रसङ्गात जीवात्मनस्ससारदशायां शरीरसयोगमन्तरा प्रयत्नाद्यनुपपत्त्या देवयानमार्गेण प्रस्थानानुपपत्तिः । ततश्च तत्प्रतिपादकश्रुतेर्बाधितार्थकत्वप्रसङ्गः । अतो विदुष कर्मणामेकदेशस्य देहादुत्क्रमणसमये हानिः शेषस्य मार्गमध्ये हानिरित्येवाश्रयणीयम् । इत्थं च सूक्ष्मदेहारम्भककर्मणो नाशाभावेन तदारब्धशरीरस्य सत्त्वात् अर्चिरादिमार्गेण प्रस्थानोपपत्त्या तादृशगतिप्रतिपादकश्रुतेरबाधितार्थकत्वोपपत्तिरिति चेत्, उच्यते—यथा लोके केनचित्पुरुषेण सस्यादिप्रयोजनोद्देशेनारब्धस्य तटाकस्य तत्प्रयोजनसमाप्तावपि पुरुषान्तरेण पानीयपानादिप्रयोजनान्तरोद्देशेन तस्य स्थापनं, एवमिहापि सुखदुःखानुभवार्थं कर्मभिरारब्धस्य शरीरस्य तत्प्रयोजनसमाप्तावपि ब्रह्मविद्यया ब्रह्मविदोऽर्चिरादिगमनरूपस्वफलप्रदानोद्देशेन कर्मारब्धसूक्ष्मशरीरस्य स्थापनमुपपद्यते । क्षीणकर्मणोऽपि मुक्तस्य [3]"स एकधा भवति त्रिधा भवति " इत्यादिश्रुतिषु शरीरवत्त्वप्रतिपादनदर्शनेन कर्मक्षये देहवत्त्वं न सम्भवतीति नियमाभावात् येषां ब्रह्मविदां देहादुत्क्रमणानन्तरमर्चिरादिगतिरासन्ना, तेषामेव देहादुत्क्रान्तिसमये निश्शेषकर्मक्षय । अतो

[1] कौषी १-३७. [2] कौषी १-४. [3] छा. ७-२६-२.

वसिष्ठादीनामाधिकारिकाणा अधिकारसमाप्त्यनन्तरमेव अर्चिरादिगतिप्राप्त्या तत्पूर्वं तेषा यत्किंचिद्देहादुत्क्रान्तिसमये निश्शेषकर्मक्षयाभावात् देहान्तर-सम्बन्धस्य सुखदु खानुभवस्य च पुराणादिप्रसिद्धस्य न विरोध ॥

यद्विद्याफलभूतो विदुषोऽखिलपुण्यपापविश्लेषः ।
देहान्निर्गमकाले तद्ब्रह्म श्रीनिवासनाम भजे ॥ ११९ ॥

स्पष्टोऽर्थ ॥

पर्यङ्कविद्यानिष्ठप्राप्यतयोक्तस्य पर्यङ्कविशेषस्थस्य ब्रह्मण [1] "तस्य श्रीरुपबर्हण" इत्यनेन 'लक्ष्मी पादोपधान' इत्यर्थकेन तत्रत्यवाक्येन, श्रिय पतित्वावगमात्, [2] "अपराजितमायतन" इति तत्रत्यवाक्येन, [3] "अप राजिता पू" इति छान्दोग्यदहरविद्याप्रकरणस्थवाक्यस्य दहरविद्यावेद्य ब्रह्मस्थानप्रतिपादकस्य प्रत्यभिज्ञानेन, पर्यङ्कविद्यावेद्यस्य ब्रह्मण दहरविद्या-वेद्यस्य ब्रह्मणश्च ऐक्यावगमात्, तस्य श्रीनिवासापरनामधेयनारायणत्वस्य दहराधिकरणे निर्णीतत्वाच, अत्र यद्विद्याफलभूत इत्युक्तम् ॥

९३ ॥ इति सापरायाधिकरणम् ॥ १२ ॥

॥ २७ ॥ अनियमाधिकरणम् ॥ १३ ॥

पूर्वस्मिन्नधिकरणे अर्चिरादिगते प्रस्तुतत्वात्, तस्यास्सर्वब्रह्मविद्या-साधारणता व्यवस्थापयितु प्रवृत्तमिदमधिकरणम् ॥

## अनियमस्सर्वेषामविरोधश्शब्दानुमानाभ्याम् ॥ ॥ ३-३-३२ ॥

सर्वेषा ब्रह्मोपासकानामर्चिरादिमार्गेणैव ब्रह्मप्राप्ते श्रुतिस्मृतिसिद्ध-तया उपकोसलादिविद्यानिष्ठानामेवार्चिरादिगतिरिति, नियमो न सभवति ।

[1] कौषी १ ५० [2] कौषी १ २६ [3] छा ८ ५ ३

तया नियमाभावाभ्युपगम एव श्रुतिस्मृतिभ्यामविरोध उपपद्यते इति सूत्रार्थः॥

पूर्वपक्षः।

यासु ब्रह्मविद्यास्वर्चिरादिगति श्रुता, तद्विद्यानिष्ठानामेवार्चिरादिमार्गेण गमनं, न तदितरविद्यानिष्ठानाम्; तत्प्रकरणे अर्चिरादिगतेरश्रुतत्वात्। न चैवं नियमाभ्युपगमे सर्वब्रह्मविद्यानिष्ठानामर्चिरादिगतिप्रतिपादकश्रुतिविरोधप्रसङ्गः। वाजसनेयके पञ्चाग्निविद्याप्रकरणे [1]"य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते, तेऽर्चिषमभिसमवन्ति" इत्यत्र सत्यशब्देन, छान्दोग्ये तद्विद्याप्रकरणे [2]"तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति" इत्यत्र तपश्शब्देन च ब्रह्म निर्दिश्य तदुपासननिष्ठानां सर्वेषामर्चिरादिगतिविधानादिति वाच्यम्। उदाहृतश्रुतिवाक्यस्थयोस्सत्यतपश्शब्दयोस्सत्यवचनकायक्लेशरूपप्रसिद्धार्थपरित्यागे बीजाभावेन सत्यतपश्शब्दाभ्यां ब्रह्मणो निर्दिष्टत्वस्यैवासिद्धेः। उक्तरीत्या सर्वब्रह्मनिष्ठानिष्ठानामत्रार्चिरादिगतिविधानाभ्युपगमे छान्दोग्ये उपकोसलविद्याप्रकरणे तद्विद्यानिष्ठस्यार्चिरादिगतिविधानवैयर्थ्यप्रसङ्गाच्च इति॥

सिद्धान्तः।

अर्चिरादिमार्गेण ब्रह्मप्राप्तिफलकोपासनविषयवाचिनोरुदाहृतश्रुतिवाक्यस्थयोस्सत्यतपश्शब्दयो सत्यवचनकायक्लेशरूपार्थपरत्वं न सम्भवदुक्तिकम्, सत्यवचनकायक्लेशनिष्ठतारूपतदुपासनस्य ब्रह्मविद्यात्वाभावेन ब्रह्मप्राप्तिफलकत्वायोगात्। अतस्सत्यशब्दस्य [3]"सत्यं त्वेव विजिज्ञासितव्यं" इत्यादौ, तपश्शब्दस्य [4]"परमं यो महत्तप" इत्यादौ ब्रह्मण्यपि प्रयोगदर्शनेन ब्रह्मप्राप्तिफलकोपासनविषयवाचिनोरुदाहृतश्रुतिवाक्यस्थयो सत्यतपश्शब्दयोः ब्रह्मपरत्वमेवाऽऽश्रित्य सर्वब्रह्मोपासननिष्ठानामत्रार्चिरादिगतिविधानमवश्याश्रयणीयम्॥

[1] बृ. ८-२-१५. [2] छा. ५-१०-१. [3] छा. ७-१६-१. [4] भारत. आनु.

उपकोसलविद्यायामर्चिरादिगतिश्रवणं त्वनुवाद इति च वक्तव्यम् । इत्थं चात्र सर्वब्रह्मविद्यानिष्ठानां अर्चिरादिगतिविधानात्, अर्चिरादिगतिः कतिपयब्रह्मविद्यानिष्ठानामेवेति नियमाभ्युपगमे उक्तश्रुतिविरोधो दुरुद्धरः ॥

एवं [1]"अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणं । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" इति श्रीगीतासु सर्वेषां ब्रह्मविदामर्चिरादि-गतिप्रतिपादनेन तद्विरोधप्रसङ्गादप्युक्तनियमो न संभवतीति ॥

अस्मिन्नधिकरणे सर्वेषां ब्रह्मविदामर्चिरादिगमनव्यवस्थापनं तेषां सर्वेषामर्चिरादिगतिचिन्तनार्थम् । अत्र सूत्रे सगुणब्रह्मविदामेवार्चिरादिगति-रिति व्यवस्थाप्यत इति सूत्राभिप्रायवर्णनं तु सूत्रस्थसर्वशब्दसंकोचप्रसङ्गात्, आनन्दाद्यधिकरणे सर्वासु ब्रह्मविद्यासु आनन्दत्वादिब्रह्मगुणानामुपसंहर्तव्यत्वं स्थापयद्भिस्सूत्रकारैर्निर्गुणब्रह्मविद्याया निरस्तत्वाच्चानादरणीयम् ॥

ये चेमेऽरण्य इति श्रुतिरियमाहार्चिरादिगतिं ।
अखिलयदुपासकानां तद्ब्रह्म श्रीनिवासनाम भजे ॥ १२० ॥

अर्थः । [2]"ये चेमेऽरण्य श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति" इत्यादिश्रुतिः, अखिलानां यस्य श्रीनिवासस्य उपासकानामर्चिरादि-गतिमाह तद्ब्रह्म इति पूर्ववत् ॥

[3]अन्तराधिकरणे अर्चिरादिना ब्रह्मप्राप्तिफलकोपासनविषयस्य ब्रह्मणः श्रीनिवासाख्यदेवताविशेषरूपताया निर्णीतत्वात्, तदभिप्रायेणात्र यदुपास-कानां इत्युक्तम् ॥

९४ ॥ अनियमाधिकरणम् ॥ १३ ॥

---

[1] गी. ८-२४. [2] छा. ५-१०-१. [3] १-२-३ अ.

२८ ॥ अक्षरध्यधिकरणम् ॥ १४ ॥

पूर्वाधिकरणे सर्वेषा ब्रह्मविदामर्चिरादिगतिरुक्ता । तद्वत् सर्वासु ब्रह्मविद्यासु अस्थूलत्वादिगुणानामनुसन्धेयतानिरूपणाय प्रवृत्तमिदमधिकरणम् ॥

## अक्षरधियां त्ववरोधस्सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३-३-३३ ॥

[इयदामननात् ॥ ३४ ॥]

अर्थः । अक्षरधियां अक्षरब्रह्मसम्बन्ध्यस्थूलत्वादिगुणानुसन्धानाना, अवरोधः-सर्वविद्यासु सग्रह कार्य । तत्र हेतुमाह सामान्यतद्भावाभ्या इति । सर्वासु ब्रह्मविद्यासु उपास्यस्य ब्रह्मणोऽनुवर्तमानतया अस्थूलत्वादि-तदीयगुणानामप्यनुवृत्ते इत्यथ । गुणाना प्रधानानुवर्तित्वेन प्रधाने ब्रह्मणि अनुवर्तमाने तद्गुणानामप्यनुसन्धेयतयाऽनुवृत्ते इति भाव । गुणाना प्रधानानुवर्तित्वे दृष्टान्तमाह औपसदवत् इति । उपसन्नामकहोमाङ्ग-मन्त्रवत् इत्यर्थ । दृष्टान्तस्य पूर्वमीमासासिद्धतामाह तदुक्तं इति । पूर्व मीमासाया [1]"गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसयोग" इति सूत्रे उक्तमिति सूत्रार्थ ॥

बृहदारण्यके गार्गिब्राह्मणे, [2]"एतद्वै गार्गि ब्राह्मणा अभिवदन्ति, अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसम गन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमसुखममात्रमनन्तरमबाह्य, न तदश्नाति किञ्चन, एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत " इत्यादि, तथा अथर्वणे, [3]"अथ परा यया तदक्षरमधिगम्यते

[1] पू मी ३ ३ २ ९ [2] बृ ५ ८ ८ [3] मु १ १ ५

यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भूतयोनिं परिपश्यन्ति धीराः " इत्यादि श्रूयते ।

अत्र श्रुतानामस्थूलत्वादीनां ब्रह्मगुणानां न सर्वासु ब्रह्मविद्यासूपसंहारः, उपसंहारे हेत्वभावात् । ब्रह्मगुणत्वेनोपसंहाराङ्गीकारे सर्वकामत्वसर्वगन्धत्व-सर्वरसत्वादीनामपि ब्रह्मगुणानां सर्वत्रोपसंहार्यत्वप्रसङ्गेन, अनुसन्धानस्य दुश्शकताप्रसङ्गात् । न चानन्दत्वादीनामिव अस्थूलत्वादीनामपि ब्रह्मस्वरूप-कत्वेनोपसंहार्यत्वं, सत्यकामत्वादीनामतथाविधत्वेन नोपसंहारप्रसङ्ग इति वाच्यं, अस्थूलत्वादीनां निरूपितस्वरूपविशेषणत्वौचित्येन स्वरूपनिरूपकत्वा-संभवात् । [1]" लब्धरूपे कचित् किञ्चित् तादृगेव निषिध्यते " इति न्यायेन निषेधरूपाणामेतेषामितरव्यावृत्तब्रह्मस्वरूपसिद्धिसापेक्षत्वादिति पूर्व-पक्षः ॥

## सिद्धान्तः ।

अचेतनात् त्रिविधचेतनाच्च विजातीयं ब्रह्म सर्वासु ब्रह्मविद्यासूपा-स्यम् । तत्र तत्तद्विजातीयतयाऽनुसन्धान एव विजातीयं ब्रह्मानुसंहितं भवति । तत्र अचेतनाद्वैजात्यं स्वरूपतो विकारराहित्यं, स्थूलत्वादिविकार-रहितस्वरूपत्वमिति फलितम् । इदमेवामलत्वमित्युच्यते । स्वभावान्यथाभाव-रहितत्वं संसारिचेतनाद्विजातीयत्वं, तच्च सङ्कोचविकासरूपावस्थाद्वयज्ज्ञान-रहितत्वपर्यवसितम् । कदाचिदपि सङ्कोचरहितज्ञानवत्त्वं मुक्तचेतनाद्वैजात्यं, तच्च सङ्कोचविकासरूपावस्थाद्वयवद्विलक्षणज्ञानवत्त्वरूपम् । अनन्तत्वं देशकाल-वस्तुपरिच्छेदरहितत्वरूपं नित्यचेतनाद्विजातीयत्वम् । अपरिच्छिन्नानन्द-स्वरूपत्वं तु उक्तसर्ववैसादृश्यम् । एतादृशवैजात्यानुसन्धानेन विना तत्तद्विजातीयत्वेन ब्रह्मस्वरूपानुसन्धानासिद्ध्या एषां पञ्चानां सर्वासु

ब्रह्मविद्यासु अनुसन्धेयता, तेषामेव चेतनाचेतनविजातीयब्रह्मस्वरूपनिरूपकत्वात्; नान्येषां ब्रह्मगुणानां, तेषामतथात्वात्। यद्यपि देशपरिच्छेदरहितत्वस्य वस्तुपरिच्छेदरहितत्वस्य वा सर्वस्याव्यावर्तकतया तदनुसन्धानमात्रेण सकलेतरविजातीयब्रह्मस्वरूपानुसन्धानसिद्धिः। तथाऽपि अचेतनस्य त्रिविधचेतनानां च स्वरूपे स्वभावे च ये ये दोषाः, तेषां ब्रह्मस्वरूपे स्वभावे च सद्भावशङ्काव्यावर्तनाय पञ्चाप्यते धर्मा अनुसन्धेयाः। तत्र ब्रह्मणि स्वरूपविकारसद्भावशङ्काव्यावर्तनाय अमलत्वस्य, स्वभावविकारशङ्काव्यावर्तनाय सत्यत्वस्य, कादाचित्कस्वभावविकारशङ्काव्यावर्तनाय सर्वदा सङ्कोचरहितज्ञानवत्त्वस्य, देशकालवस्तुपरिच्छिन्नत्वशङ्काव्यावर्तनाय अनन्तत्वस्य, स्वरूपस्यानानन्दत्वपरिच्छिन्नानन्दत्वशङ्काव्यावर्तनाय अपरिच्छिन्नानन्दत्वस्य अनुसन्धानमावश्यकमिति ॥

[1] जन्माद्यधिकरणश्रीभाष्ये [2] "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुतिव्याख्यानावसरे सत्यत्वविशेषणेन अचेतनस्य बद्धचेतनस्य च व्यावृत्त्यभिधानं तु अमलत्वस्यापि सत्यत्वशरीरे अन्तर्भावाभिप्रयेण। आनन्दाद्यधिकरणे [3] "इतरे त्वर्थसामान्यात्" इति सूत्रश्रीभाष्ये, अस्मिन्नधिकरणे "इयदामननात्" इतिसूत्रश्रीभाष्ये च सत्यत्वादिगुणानां पञ्चानामपि पृथक्पृथगनुसन्धेयत्वभाषणात्, सर्वासु ब्रह्मविद्यासु तथैव अनुसन्धानं कर्तव्यमिति द्रष्टव्यम्। एतेषां पञ्चानां गुणानां प्रागुक्तरीत्या ब्रह्मस्वरूपनिरूपकत्वेन प्रधानस्य ब्रह्मणः सर्वासु ब्रह्मविद्यासु अनुवृत्त्या, गुणानां प्रधानानुवर्तित्वन्यायेनानुवृत्तिः सूचिता। तादृशन्यायस्य पूर्वमीमांसायां निरूपितत्वज्ञापनाय सूत्रे औपसदवत्तदुक्तं इत्युक्तम् ॥

तस्यायं भावः—जामदग्न्यचतूरात्रस्याङ्गभूतेषु उपसत्सु द्वादशाहोमान् विधाय तेषु द्वादशमन्त्रा विहिताः। ते च मन्त्राःसामवेदोत्पन्नाः। अतः

[1] १-१-२. [2] तै. आन १. [3] ३-३-१३.

तेषां 'उच्चैः साम्ना' इति विधानेन उच्चैःस्वरः प्राप्तः । अङ्गितया प्रधानभूतानामुपसदां याजुर्वेदिकत्वेन तदाङ्गतया प्राप्तानां मन्त्राणां "उपांशु यजुषा" इति विधानेन, उपांशुस्वरः प्राप्तः । एवमुभयोर्विरुद्धयोस्स्वरयोः प्राप्तौ, अनेन सूत्रेण व्यवस्था क्रियते प्रधानभूतयाजुर्वेदिकोपसदनुरोधेन सामवेदोत्पन्नानामप्युपसदङ्गभूतानां मन्त्राणां याजुर्वेदिक एव स्वर इति । सूत्रार्थस्तु, गुणमुख्ययोः अङ्गप्रधानयोर्मन्त्रोपसदोः, व्यतिक्रमे— विरोधे प्राप्ते, मुख्येन—प्रधानभूतोपसदनुरोधेन, वेदसंयोगः—स्वरविधायकवेदसंबन्धः। यजुर्वेदविहितोपांशुस्वरसंबन्ध इत्यर्थः । अत्र हेतुमाह तदर्थत्वादिति । गुणानां प्रधानानुवर्तित्वादित्यर्थः ॥

हेयप्रतिभटतात्मकममलत्वं यस्य सर्वविद्यासु ।
उपसंहार्यं रूपं तद्ब्रह्म श्रीनिवासनाम भजे ॥ १२१ ॥

अर्थः । हेयप्रतिभटता-हेयप्रत्यनीकत्वं, हेयसंबन्धानर्हत्वमिति यावत् । शिष्टं स्पष्टम् ॥

मुण्डकोपनिषदि श्रुताया अक्षरविद्यायाः [1]द्युभ्वाद्यधिकरणे, बृहदारण्यकश्रुताक्षरविद्याया [2]अक्षराधिकरणे च श्रीनिवासापरनामधेयनारायणविषयताया निर्णीततया तदभिप्रायेणात्र अमलत्वस्य श्रीनिवासस्वरूपनिरूपकधर्मत्वोक्तिः ॥

९५ ॥ इति अक्षरध्यधिकरणम् ॥ १४ ॥

---

## २९ ॥ अन्तरत्वाधिकरणम् ॥ १५ ॥

पूर्वस्मिन्नधिकरणे हेयप्रत्यनीकत्वस्य ब्रह्मस्वरूपनिरूपकतया ब्रह्मासाधारणत्वमुक्तम् ; तत्प्रयुक्तशङ्काविशेषवारणाय प्रवृत्तमिदमधिकरणम् ॥

---

[1] १-३-१. [2] १-१-३.

## अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथाभेदादनुपपत्तिरिति चेन्नोपदेशवत् ॥ ३-३-३५ ॥

बृहदारण्यके [1]"यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्व" इत्युपस्तिप्रश्नस्य [1]"यः प्राणेन प्राणिति" इत्यारभ्य [1]"स त आत्मा सर्वान्तर" इति याज्ञवल्क्यप्रतिवचनम्; पुनश्च तत्रैव कहोलब्राह्मणे [2]"यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्व" इति कहोलप्रश्नस्य [2]"योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति" इति याज्ञवल्क्यस्य प्रतिवचनं च श्रूयते। अत्र प्रतिवचनद्वयोक्तयोर्विषयोर्भेदोऽवर्जनीयः वेद्यभेदात्। तथा हि—उपस्तिप्रश्नस्य प्रतिवचने [1]"यः प्राणेन प्राणिति" इत्यादिना प्राणाधीनप्राणवतस्सर्वान्तरत्वोक्त्या तत्रोक्तः सर्वान्तरः प्रत्यगात्मा। कहोलप्रश्नस्य प्रतिवचने [2]"योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति" इत्यशनायाद्यतीतस्य सर्वान्तरत्वोक्त्या स परमात्मा, जीवात्मनः अशनायाद्यतीतत्वासंभवात्। एवं प्रतिवचनयोर्भिन्नविषयत्वेन वेद्यभेदेऽवगते उपस्तिप्रश्नप्रतिवचनोक्तप्रत्यगात्मनस्सर्वान्तरात्मत्वं, अचेतनवर्गरूपभूतग्रामाद्यन्तर्यामितयोपपादनीयमिति पूर्वपक्षमनुवदन् परिहरति अन्तरा भूतग्रामवत् इति।

अन्तरा-सर्वान्तरत्वेन निर्देशः, भूतग्रामवत्स्वात्मनः-भूतग्रामवान् अचेतनवर्गान्तर्यामी यः स्वात्मा-प्रत्यगात्मा, तस्येति प्रतिपत्तव्यम्। अन्यथा-एवमनभ्युपगम्य सर्वान्तरस्य परमात्मन एवान्तरात्मत्वोक्तिः इत्यभ्युपगमे, एकरूपयोर्द्वयोः प्रश्नयोः प्रतिवचनभेदादनुपपत्तिः इत्यर्थः॥

---

[1] बृ. ५-४-१. [2] बृ. ५-५-१.

भावः । कहोलप्रश्नप्रतिवचनं अशनायाद्यतीतविषयकत्वेन परमात्मविषयकमिति स्फुटम् । उषस्तिप्रश्नप्रतिवचनस्यापि परमात्मविषयकत्वे एकरूपप्रश्नस्य प्रतिवचनभेदो न घटते । अतः प्रतिवचनभेददर्शनात् उषस्तिप्रश्नप्रतिवचनं प्रत्यगात्मविषयमित्यवगन्तव्यम् । तस्य सर्वान्तरत्वोक्तिस्त्वचेतनवर्गापेक्षयाऽन्तरत्वाभिप्रायेणेति उषस्तिप्रश्नवाक्यस्थब्रह्मशब्दोऽपि प्रत्यगात्मविषय एव । प्रत्यगात्मन्यपि कचित् कचित् ब्रह्मशब्दप्रयोगदर्शनात् । अतो वेद्यभेदाद्विद्ययोर्भेद इति सूत्रे तमिमं पूर्वपक्षं चेत् इत्यन्तेनानूद्य परिहरति न इति । न विद्याभेद इति तदर्थः ॥

अयं भावः—प्रश्नस्तावदुभयत्र परमात्मविषय एव । उषस्तिप्रश्ने साक्षाद्ब्रह्म इति ब्रह्मशब्दमुख्यार्थस्यैव पृष्टत्वावगमात् । तस्यापरोक्षत्वोक्तिस्तु सर्वदेशकालसन्निहितत्वादुपपद्यते । कहोलप्रश्ने 'यदेव' इत्येवकारेण उषस्तिना यत्पृष्टं तदेव कहोलेनापि पृच्छ्यत इति प्रतीयमानतयाऽपि उषस्तिप्रश्नः परमात्मविषय एव । उभयत्र प्रतिवचनमपि परमात्मविषयमेव । [1]"यः प्राणेन प्राणिति" इत्यसङ्कोचेन सर्वास्ववस्थासु सर्वप्राणिप्राणयितृत्वप्रतीतेः । प्रत्यगात्मनस्सुषुप्तिमूर्छाद्यवस्थासु उपरतसर्वेन्द्रियव्यापारतया प्राणयितृत्वासंभवात्, [2]"को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्" इति परमात्मन्येव निरुपाधिकसर्वप्राणिप्राणयितृत्वश्रवणाच्च [3]"न दृष्टेर्द्रष्टारं पश्येः" इति वाक्यशेषे चक्षुरादीन्द्रियाधीनदर्शनादिकर्तारं प्रत्यगात्मानं न मदुक्तसर्वान्तरात्मानं मन्वीथाः इति प्रत्यगात्मनः स्वोक्तान्तर्यामित्वनिषेधाच्च । अत उभयत्र प्रतिवचनं परमात्मविषयमेव ।

इदं पुनरवशिष्यते— पृष्टस्यैव पुनः प्रश्नः प्रतिवचनभेदश्च कथं घटत इति । अभिप्रायभेदादुभयं घटते । पुनः प्रश्नस्यायमभिप्रायः—[1]"यः प्राणेन

[1] बृ. ५-४-१. [2] तै. आन. ७-१. [3] बृ. ५-४-२.

प्राणिति" इति उषस्तिप्रश्नप्रतिवचनोक्तं प्राणितृत्वं न सर्वात्मना प्रत्यगामव्यावर्तनक्षमम्, तस्यापि यथा कथञ्चित्प्राणितृत्वादिसम्भवात्। अतस्सर्वात्मना प्रत्यगात्मन्यसम्भावितेनाऽऽकारेण सर्वान्तरात्माऽवगन्तव्यः इत्यभिप्रायेण कहोलस्य पुनः प्रश्नः प्रत्यगात्मन्यसम्भावितेन अशनायाद्यतीतत्वेनाकारेण प्रतिवचनं चेति। एकस्मिन्नेव विषये पुनःप्रश्नं प्रतिवचनभेदं च दृष्टान्तेनोपपादयति उपदेशवत् इति। यथा सद्विद्यायां, [1]"सदेव, सोम्येदमग्र आसीत्" इत्यदिना प्रस्तुतस्य ब्रह्मणस्तदुत्तरेषु नवसु खण्डेषु माहात्म्यविशेषबुभुत्सया [2]"भूय एव मा भगवान् ब्रवीतु" इति पुनः पुनः प्रश्न तन्माहात्म्यविशेषपरप्रतिवचनं च तद्वदिति भावः॥

नन्वेवमप्येकस्यां विद्यायां परमात्मनस्सर्वप्राणिप्राणयितृत्व वेद्याकारः, अन्यस्यां तु अशनायाद्यतीतत्वमिति रूपभेदाद्विद्याभेदो दुर्वार इति शङ्का परिहर्तुं प्रवृत्तमिदं सूत्रम्।

व्यतिहारे विंशिषन्ति हीतरवत्॥ ३-३ ३६॥
[सैव हि सत्यादय॥ ३७॥]

व्यतिहारः-उपस्तिकहोलयो॰ परम्परबुद्धिव्यतिहार परम्परबुद्धयोर्विनिमयः कर्तव्य; हि-यत, याज्ञवल्क्यप्रतिवचनानि सर्वान्तरात्मान सर्वप्राणिप्राणनहेतुत्वाशनायाद्यतीतत्वरूपधर्मद्वयविशिष्ट बोधयन्तीत्यर्थ। इतरवत्-यथा सद्विद्यायामेकमेव ब्रह्म तैस्तैर्धर्मै॰ पुन॰ पुन विशिष्टतया प्रतिपाद्यते, तद्वत् इति सूत्रार्थ॰॥

अयं भाव॰-प्रश्नयो॰ प्रतिवचनयोश्च सर्वान्तरत्वविशिष्टब्रह्मविषयकत्वेन वेद्यभेदविरहात् कहोलप्रश्नप्रतिवचने, [3]"बाल्येन तिष्ठासेत्" इत्यत्र

[1] छा. ६-२-१ [2] छा. ६-१-७. [3] बृ ५-५ १.

'तिष्ठासेत्' इत्यनेन, 'ब्रह्मणि तिष्ठासेत्-ब्रह्मोपासीत' इत्यर्थकेन उपासनविधिनेन चोदनाभेदविरहाच्च विद्यैक्यम्। प्रतिवचनयोः परमात्मनः सर्वप्राणिप्राणनहेतुत्वाशनायाद्यतीतत्वरूपधर्मद्वयोक्तिस्तु परमात्मनो जीवात्मव्यावर्तकधर्मभूयस्त्वेन जीवात्मतो व्यावृत्तिबुद्ध्यतिशयोत्पादनार्थाः; न तु तयोरुपास्यत्वप्रतिपादनार्थाः। अत उपस्तिकहोलाभ्यां उभाभ्यामपि जीवात्मतो व्यावर्तकधर्मभूयस्त्वेन व्यावृत्तिबुद्ध्यतिशयसिद्ध्यर्थं परमात्मनि धर्मद्वयमप्यनुसन्धेयम्। उपास्याकारस्तु सर्वान्तरात्मत्वमेकमेव। अत उपास्यैक्यान्न विद्याभेदः॥

यथा सद्विद्यायां सच्छब्देन प्रक्रान्तपरमकारणीभूतपरदेवताया एकस्या एव नवसु खण्डेषु पुनः पुनः प्रश्नप्रतिवचनैरनेकधर्मकथनेऽपि [1] "तत्सत्यं" इत्यादिना परमकारणत्वस्य प्रतिपर्यायमुपपादनेन परमकारणत्वस्यैकस्यैवोपास्याकारत्वावगमात् परमकारणत्वरूपोपास्याकारविशिष्टपरदेवतारूपोपास्यैक्यान्न विद्याभेदः, तद्वत्॥

उपस्तिकहोलप्रश्नप्रत्युक्त्योर्भेददर्शनेऽपि तयोः।
सर्वान्तरत्वमेकं प्रष्टृप्रतिवक्त्रभिप्रेतम्॥ १२२॥

इतरद्व्यावृत्त्यर्थमिति प्रतीतेर्विवक्षिता तत्र।
यद्विपया विद्यैका तद्ब्रह्म श्रीनिवासनाम भजे॥ १२३॥

अर्थः। [2] "यत्साक्षादपरोक्षात् ब्रह्म" इत्यादिरूपे उपस्तिकहोलप्रश्ने-[2] "यः प्राणेन प्राणिति योऽशनायापिपासे" इत्यादिरूपयोः प्रतिवचनयोः भेददर्शनेऽपि, तयोः प्रतिवचनयोः सर्वान्तरात्मत्वमेकमेवोपास्यगुणः; इतरत्-अशनायाद्यतीतत्वं तु, व्यावृत्त्यर्थं-परमात्मनः प्रत्यगात्मतो व्यावृत्त्यतिशयसिद्ध्यर्थमिति प्रतीयमानत्वात् तत्र विवक्षिता

[1] छा. ६-८-७. [2] बृ. ५-४-१.

यद्विद्या-यस्य विद्या, श्रीनिवासविषयिणी विद्येत्यर्थः, एका-अभिन्ना, तद्ब्रह्म इति पूर्ववत् ॥

अत्र सर्वान्तरात्मत्वगुणेन [1]"एष सर्वभूतान्तरात्मा" इत्यस्य [2]"अशनायापिपासे शोकं मोहं" इत्यादिना अपहतपाप्मत्वसहचरितेन [3]"अपहतपाप्मा" इत्यस्य च प्रत्यभिज्ञानेन [1]"एष सर्वभूतान्तरात्मा अपहतपाप्मा" इति सुबालोपनिषदुक्तनारायणस्य प्रत्यभिज्ञानात् [4]"यः प्राणेन प्राणिति" इत्यादिना, [5]"को ह्येवान्यात् कः प्राण्यात्" इत्यत्रोक्तानन्दमयपुण्डरीकाक्षप्रत्यभिज्ञानाच्च श्रीनिवास एवायं सर्वान्तरात्मेति निर्धार्यत इति भावः ॥

८३ ॥ इति अन्तरत्वाधिकरणम् ॥ १५ ॥

---

३० ॥ कामाद्यधिकरणम् ॥ १६ ॥

पूर्वाधिकरणे सर्वप्राणयितृत्वाशनायाद्यतीतत्वयोर्धर्मिण एकत्वान्न विद्याभेद इत्युक्तम् । दहरविद्ययोस्तु धर्मिभेदाद्विद्ययोर्भेदः स्यात् इति शङ्कापरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## कामादीतरत्र तत्र चाऽऽयतनादिभ्यः ॥

## ॥ ३-३-३८ ॥

हृदयायतनत्वसेतुत्वविधरणत्वादिभिर्विद्याद्वयाम्नातैः प्रत्यभिज्ञापकैर्धर्मैः छान्दोग्यदहरविद्याया वाजसनेयोक्तदहरविद्याया सैवेयमिति प्रत्यभिज्ञायमानतया, इतरत्र तत्र च छान्दोग्यवाजसनेयोक्तयोर्दहरविद्ययोः, कामादि-सत्यकामत्वादिविशिष्टमेवोपास्यमिति सूत्रार्थः ॥

---

[1] सुबाल. ७ [2] बृ. ५-५-१. [3] छा. ८-७-१. [4] बृ. ५-४-१.
[5] तै. आन. ७-१.

## पूर्वपक्षः ।

छान्दोग्ये [1]"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं" इत्युपक्रम्य, [2]"एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इत्यादिना दहरविद्या आम्नायते । बृहदारण्यके [3]"तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत" इत्युपक्रम्य, [3]"स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानस्सर्वस्याधिपतिः स न साधुना कर्मणा भूयान् नो एवासाधुना कर्मणा कनीयान् एष सर्वेश्वर एष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" इत्यादिना दहरविद्या आम्नायते ॥

अत्र छान्दोग्यश्रुतदहरविद्यायां [2]"एष आत्मा अपहतपाप्मा" इत्यादिना आकाशस्योपास्यत्वं प्रतीयते । वाजसनेयके तु [3]"य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते" इत्याकाशे शयानस्य उपास्यत्वं प्रतीयते । एवं छान्दोग्ये [2]"एष आत्मा अपहतपाप्मा" इत्यादिना अपहतपाप्मत्वादिगुणाष्टकविशिष्टस्य उपास्यत्वमुक्तम् । वाजसनेयके तु [3]"सर्वस्य वशी सर्वस्येशानः" इत्यादिना सर्ववशित्वसर्वेशानत्वादिगुणविशिष्टस्योपास्यत्वमुक्तम् । एवमुपास्यधर्मिणोरुपास्यधर्माणां च भेदादनयोर्विद्ययोर्भेद इति ॥

## सिद्धान्तः ।

छान्दोग्ये दहरविद्यायां [1]"दहरोऽस्मिन्नन्तर आकाश" इत्यत्र श्रुतस्याऽऽकाशस्य अन्वेष्टव्यगुणाधारत्वोक्त्या परमात्मत्वं दहराधिकरण एव निरूपितम् । वाजसनेयके तु श्रुतस्याऽऽकाशशब्दस्य प्रसिद्धार्थत्यागे मानाभावेन हृदयपुण्डरीकाकाशपरतया, तस्मिन्नाकाशे शयानः परमात्मा । अत उभयत्र परमात्मैवोपास्य इति न धर्मिभेदः । वाजसनेयोक्तसर्ववशित्वादेः

[1] छा. ८-१-१. [2] छा. ८-१-५. [3] बृ. ६-४-२१, २२.

छान्दोग्योक्तसत्यसंकल्पत्वकार्यत्वेन तद्वितितिरूपतया तेन तत्सहचरितानामपहतपाप्मत्वादीनामपि सिद्ध्या अपहतपाप्मत्वादिगुणाष्टकमेव वाजसनेयकेऽप्युपास्यरूपमित्युभयत्र न धर्मभेदः । एवं रूपैक्यं सिद्धम् ।

एवं छान्दोग्ये [1]"अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसपद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यत्र श्रुतस्य 'परंज्योतिरुपसपत्ति'शब्दितब्रह्मप्राप्तिरूपफलस्यैव [2]"अभयं वै ब्रह्म भवति" इति वाजसनेयकेऽपि प्रकृतविद्याफलत्वकीर्तनात् फलैक्यमपि सिद्धम्। [3]"तदन्वेष्टव्यं" [4]"प्रज्ञां कुर्वीत" इति चोदनाऽप्यविशिष्टा; 'दहरविद्या' इति आख्याऽप्यविशिष्टा । एवं संयोगरूपचोदनाख्यनामविशिष्टत्वात् उभयत्र श्रुतेः हृदयायतनत्वसेतुत्वविधरणत्वादिभिर्धर्मैः सैवेयं विद्येति प्रत्यभिजायमानतया विद्यैक्यमिति ॥

ननु वाजसनेयके उक्तप्रकरणे [5]"सर्वस्य वशी सर्वस्येशान" इत्यादिना गुणान् प्रतिपाद्य, अनन्तरं [6]"स एष नेति नेत्यात्मा" इत्यनेन पूर्वोक्ता वशित्वादयो गुणा प्रकृतस्य आत्मनो निषिद्ध्यन्ते । एष आत्मा, इति न–पूर्वोक्तवशित्वादिगुणवान् न इति हि तदर्थः । एवं पूर्वमपि तद्विद्योपक्रमे [6]"नेह नानास्ति किञ्चन मृत्यो स मृत्युमाप्नोति य इह नानेव पश्यति एकधैवानुद्रष्टव्यं" इति ब्रह्मणि धर्मान् प्रतिषिध्य एकत्वेन द्रष्टव्यत्वविधानादपि ब्रह्मणो निर्गुणत्वं सिद्धम् । अतो वाजसनेयके उक्ता विद्या निर्गुणब्रह्मविद्या । तस्याः फलमपि [2]"अभयं वै ब्रह्म भवति" इति ब्रह्मभाव इति श्रुतम् । अतो ब्रह्मणो निर्गुणत्वाभिधानात् वाजसनेयोक्ता वशित्वादय, छान्दोग्योक्ता अपहतपाप्मत्वादय, एवं विद्यान्तरोक्ताः सर्वेऽप्यपरमार्थाः । अतो मोक्षार्थोपासनेषु एतेषां लोपः–अनुपास्यत्वापरपर्यायो लोप एवेत्याशङ्कां परिहर्तुं प्रवृत्तमिदं सूत्रम् ।

[1] छा. ८-३-४. [2] बृ. ६-४-२५ [3] छा. ८-१-१. [4] बृ ६-४-२१. [5] बृ. ६-४-२२. [6] बृ. ६-४-१९.

आदरादलोपः ॥ ३-३-३९ ॥

उदाहृतेषु सर्ववशित्वादिषु गुणेषु श्रुतेरादरातिशयदर्शनात् न मोक्षार्थोपासनेषु एतेषां लोप-अनुपास्यत्वं ; एते गुणा उपास्या एवेति सूत्रार्थः ॥

अयं भावः । [1]"सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः" इत्यादिना ब्रह्मणो भूयोभूयो गुणविशेषकीर्तनेन तेषु श्रुतेरादरातिशयः प्रतीयते । अतस्तेषां गुणानां ब्रह्मणि वस्तुतस्सद्भावे मोक्षार्थोपासनेषु उपास्यत्वे च श्रुतेस्तात्पर्यं निश्चीयते । [1]"एष नेति नेत्यात्मा" इत्युत्तरवाक्येऽपि नोक्तगुणानां निषेधः क्रियते, तथा सति पूर्वं गुणविधिविरोधप्रसङ्गात् । न हीयं [1]"सर्वस्य वशी" इत्याद्युक्तिः गुणान् निषेद्धुमनुवाद इति वक्तुं शक्यम् । वशित्वादिगुणानां प्रत्यक्षादिप्रमाणान्तरागोचरतया प्राप्तिविरहेणानुवादत्वासम्भवात् । श्रुतिविहितगुणानामेव निषेध इत्यभ्युपगमे स्वयं विधाय स्वयमेव निषेधकरणेन श्रुतेरुन्मत्तत्वप्रसङ्गात् ।

निषेधार्थविध्याश्रयणे [1]"स एष नेति नेत्यात्मा" इति निषेधवाक्ये 'इति'पदेन निषेध्योपस्थापकेन पूर्वविहितानां सर्ववशित्वादीनामेवोपस्थापनसम्भवेन तावन्मात्रनिषेधसिद्धावपि गुणसामान्यनिषेधासिद्ध्या विवक्षितनैर्गुण्यसिद्ध्यसम्भवात् । नैर्गुण्यस्य विधित्सितत्वे 'इति न' इति एकेनैव निषेधेन सामञ्जस्ये, 'इति न, इति न' इति द्विरुक्तिवैयर्थ्यप्रसङ्गात् । 'स एषः' इति पदद्वयेन पूर्वप्रकृतवशित्वाद्याकारविशिष्टस्यैव परामर्शेन इतिशब्देन तादृशाकारं परामृश्य वशित्वादिविशिष्टे तद्वैशिष्ट्यनिषेधायोगेन वाक्यार्थासङ्गतिप्रसङ्गाच्च । अत्र नैर्गुण्यस्य विधित्सितत्वे उत्तरत्र "स वा एष महानज

[1] बृ. ६-४-२२.

आत्मा अन्नादो वसुदान" इत्यत्र पुन अन्नदत्वसुमद्रत्वरूपार्थगुण-विधिनिरोधप्रसङ्गाच । अतो "नेति नेत्यात्मा" इति वाक्यस्य गुण निषेधपरत्वाश्रयणे एवमादिनहुतरदोषप्रसङ्गात् गुणनिषेधपरत्वमस्य वाक्यस्य न युक्तम् ।

वस्तुतस्तु [1]"तमेव धीरो विज्ञाय प्रज्ञा कुर्वीत ब्राह्मण" इत्यत्रोपासन विधाय उपास्यगुणाकाङ्क्षाया [2]"सर्वस्य वशी सर्वस्येशान" इत्या दिना अपेक्षितगुणान् विधाय अन्वयमुखेनोक्ताना गुणाना व्यतिरेकमुखेन दृढीकार [2]'स एष नेति नेत्यात्मा" इत्यनेन क्रियते । 'एष आत्मा, इति नेति न—पूर्वोक्तगुणवान् नेति न, अपि तु गुणवानेवेति । 'द्वौ नञौ प्रकृतमर्थं गमयत' इति न्यायेन पूर्वोक्तगुणवत्त्व दृढीकृत भवति । इत्थ सति [2]"सर्वस्य वशी" इत्यादिना अपेक्षितगुणविधान नञ्द्वयोपादान स एष इत्यनेन गुणविशिष्टपरामर्श उत्तरत्र आदर्यगुणनिधान [2]"सर्वस्य वशी" इत्यादिना भूयो भूयो गुणकथनसिद्धतदादरातिशयसिद्ध तेषु श्रुतेस्तात्पर्यं च सर्वमुपपन्नम् ।

अथवा उपास्यतया प्रस्तुतस्य परमात्मन प्रत्यगात्मस्वसभावितान् गुणान् प्रतिपाद्य तत्रत्यदोषनिषेधेन तेभ्यो वैलक्षण्य ज्ञापयितु प्रापञ्चिकधर्मोऽत्र निषिध्यते । अत्र 'इति'शब्देन प्रपञ्चदृष्टो विकार परामृश्यते । तथा च यादृशाकार प्रपञ्च, परमात्मा तादृशाकारवान्न इत्युक्त भवति । तदेव वैलक्षण्य [2]"अग्राह्यो न हि गृह्यत" इत्याद्युत्तरवाक्ये स्पष्टीक्रियते । तत्र हि 'अग्राह्य' इत्यनेन प्रमाणान्तरग्राह्यविजातीयत्व, 'अशीर्य' इत्यनेन विशरणस्वभावविजातीयत्व, 'असङ्ग' इत्यनेन तत्तद्वस्तुसंसर्ग-जनितदोषवद्विजातीयत्व इत्यादिक वैजात्य स्पष्टीक्रियत इति । एव पूर्वमपि [3]"मनसैवानुद्रष्टव्य नेह नानास्ति किञ्चन" इत्यत्र धर्माणा

[1] बृ ६ ४ २१ [2] बृ ६-४-२२ [3] बृ ६ ४ १९

न निषेधः, अपि तु प्रपञ्चस्य स्वातन्त्र्यनिषेधः क्रियते। तथा हि—पूर्वं [1]"यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः। तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतं" इत्यत्र इन्द्रियाणामाकाशादिभूतानां तत्कार्याणां च ब्रह्मणि प्रतिष्ठितत्वोक्त्या ब्रह्मैकाश्रितत्वेन तत्पारतन्त्र्यमुक्तम्। तदेव ब्रह्मपारतन्त्र्यं [2]"नेह नानास्ति किञ्चन" इति प्रपञ्चस्य स्वातन्त्र्यनिषेधमुखेन दृढीक्रियते। अत्र नानाशब्दः भावप्रधानः। इह–प्रपञ्चे, किञ्चन–न किञ्चिदपि, नानात्वं–भेदः, नास्ति; भेदलेशोऽपि नास्तीत्यर्थः। अत्र पूर्ववाक्ये [1]"यस्मिन् पञ्च पञ्चजनाः" इत्यत्र सर्वस्य प्रपञ्चस्य ब्रह्माश्रितत्वमुक्त्वा [2]"नेह नानास्ति किंचन" इत्यत्र प्रपञ्चे नानात्वं निषिध्य, उत्तरत्र [3]"एकधैवानुद्रष्टव्यं" इत्यभिधानेन द्रष्टव्यतयोक्तः प्रकारो ब्रह्माश्रितत्वमिति लाभात्, तत्प्रतिकोटिभूतं नानात्वं ब्रह्मानाश्रितत्वपर्यवसितं 'तत्तद्वस्तु तत्तन्निष्ठं' इत्येवंविधभ्रान्तिसिद्धं तत्तद्वस्तुनिष्ठत्वरूपं [2]"नेह नाना" इत्यनेन निषिध्यते इति निर्णीयते। ततश्च कृत्स्नं जगत् ब्रह्माश्रितत्वस्वरूपेणैकप्रकारेण द्रष्टव्यं, न तु तत्तद्वस्तु तत्तन्निष्ठं इत्येवं भिन्नभिन्नप्रकारेण इत्यर्थः फलितः॥

अथवा [2]"नेह नानास्ति किंचन" इत्यत्र, इह—प्रपञ्चाधारे, नानात्वं—भेदलेशोऽपि, नास्ति; एकधैव-एकत्वेनैव द्रष्टव्यम्, कृत्स्नजगदाधारभूतं ब्रह्म एकमेवेति द्रष्टव्यमित्यर्थः॥

ननु एकस्य ब्रह्मण कथं कृत्स्नजगदाधारत्वमुपपद्यत इत्यत्राह [3]"एतदप्रमेयं ध्रुवं" इति। एतत्-ब्रह्म, अप्रमेयं-अपरिच्छेद्यप्रभावं इति अर्थः। ततश्च ब्रह्मणः प्रभावस्यापरिच्छेद्यत्वात्, एकस्य ब्रह्मणः कृत्स्नजगदाधारत्वेन नानुपपत्तिरित्यर्थः॥

[1] बृ. ६-४-१७. [2] बृ. ६-४-१९. [3] बृ. ६-४-२०.

इदं च सर्वस्य ब्रह्मैकाश्रितत्वं योगपरिशुद्धेन मनसा एकेन द्रष्टुं शक्यमित्ययों [1]"मनसैवानुद्रष्टव्यं" इत्यनेनाभिधीयते । एवमर्थमनभ्युपगम्य [1]"नेह नानास्ति किंचन" इत्यस्य प्रपञ्चनिषेधपरत्वाङ्गीकारे [2]"यस्मिन् पञ्च पञ्चजनाः" इति मन्त्रे आकाशादीनां सर्वेषां वस्तूनां ब्रह्मणि प्रतिष्ठितत्वोक्तिविरोधः । उत्तरत्र [3]"एष सर्वेश्वर एष भूताधिपतिः एष भूतपालः" इत्यादिना प्रपञ्चस्य परमात्मनियाम्यत्वतत्पाल्यत्वाद्युक्तिविरोधश्च दुरुद्धरः स्यात् । तत्रोभयत्र जगतः पारमार्थ्याभ्युपगमसिद्धेः । न च [2]"यस्मिन् पञ्च पञ्चजनाः" इति मन्त्रे प्रपञ्चस्य ब्रह्मण्यध्यस्तत्वमेवाभिप्रेतमिति न तद्विरोध इति वाच्यम् । [4]"मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" इति श्रीगीतावचनैकार्थ्येन सूत्रेण मणिगणस्येव परमात्मना प्रपञ्चस्य अन्तःप्रविश्य धार्यमाणत्वस्यैव विवक्षितत्वावगमात् । सर्वमिदमभिसन्धायैव सूत्रकारैः छान्दोग्यश्रुतदहरविद्याम्नातानां सत्यकामत्वादीनां वाजसनेयोक्तदहरविद्यायामुपसंहारः सूत्रितः । अनन्तरं च वाजसनेयाम्नातदहरविद्याश्रुतानां वशित्वादीनां तदुत्तर [3]"नेति नेति" इति निषिद्धत्वेन तेषामेवोपास्यत्वलोपे का कथा छान्दोग्यदहरविद्याम्नातसत्यकामत्वादीनामुपसंहारस्य इति शङ्कां परिहर्तुमेव [5]"आदरादलोप" इति सूत्रं प्रणीतमिति युक्तं अनयोः सूत्रयोरैकाधिकरण्यम् ॥

ननु छान्दोग्योक्तदहरविद्याया वाजसनेयोक्तदहरविद्यायाश्च फलभेदात् न विद्यैक्यं; न वा सत्यकामत्वादिगुणानामुपसंहारः; छान्दोग्यश्रुतदहरविद्याफलं हि [6]"सर्वेषु लोकेषु कामचारो भवति" इत्यादिना श्रुतमैश्वर्यविशेषप्राप्तिरूपं; वाजसनेयोक्तदहरविद्याफलं तु [7]"अभयं वै ब्रह्म भवति" इत्युक्तब्रह्मभावप्राप्तिरूपम् । अतः फलभेदान्न विद्यैक्यमिति शङ्कां परिहर्तुं प्रवृत्तमिदं सूत्रम्—

---

[1] बृ. ६-४-१९. [2] बृ. ६-४-१७. [3] बृ. ६-४-२२. [4] गी.
[5] ३-३-३९. [6] छा. ७-१-६. [7] बृ. ६-४-२५.

उपस्थितेऽतस्तद्वचनात् ॥ ३-३-४० ॥

उपस्थिते-उपसंपन्ने ; प्रत्यगात्मनि परं ब्रह्म उपसंपन्ने सति, अतः-ब्रह्मोपसंपत्तेः, तद्वचनात्-सर्वलोककामचारादिफलोक्तेः, सर्वलोककामचारादिकं न सांसारिकफलमिति सूत्रार्थः ॥

अयं भावः—छान्दोग्ये [1] "अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते, स तत्र पर्येति जक्षत्क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा" इति दहरोपासकस्य परब्रह्मप्राप्तिमभिधाय परब्रह्मप्राप्त्या अपहतपाप्मत्वादिसत्यसङ्कल्पत्वान्तस्वरूपाविर्भावमुक्त्वा सर्वलोककामचारादिफलस्य स्वरूपाविर्भावानन्तरभावित्वाभिधानेन छान्दोग्यदहरविद्याया अपि ब्रह्मप्राप्तिरेव फलम् । सर्वलोककामचारादिकं तु ब्रह्मानुभवान्तर्गतमिति चतुर्थाध्यायचतुर्थपादे वक्ष्यमाणत्वान्न फलभेदः । वाजसनेयदहरविद्याया निर्गुणोपासनमिति तु पूर्वमेव निरस्तम् । तत्र [2] "अभयं वै ब्रह्म भवति य एवं वेद" इत्यत्र 'अभयं वै ब्रह्म भवति' इत्यस्य ब्रह्मणा अत्यन्तसदृशो भवति इत्यर्थः । [3] "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति, एवं मुनेर्विजानत आत्मा भवति गौतम" इत्यादिश्रुत्यन्तरैकार्थ्यात् । ततश्च ब्रह्मप्राप्त्या आविर्भूतसत्यसङ्कल्पत्वादिब्रह्मगुणाष्टको भवतीत्यर्थलाभात्, अत्रापि [1] "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रुत्युक्तस्वरूपाविर्भाव एव फलमुक्तं भवति इति न फलभेदः । अतो विद्ययोरभेदात् उक्तगुणोपसंहारः कार्य एवेति । एवं "आदरादलोपः," "उपस्थितेऽतस्तद्वचनात्" इति सूत्रयोर्दर्शितरीत्या "कामादीतरत्र" इत्यादिसूत्रानन्तर्यतादर्थ्ययोः सत्त्वात् त्रयाणामेकाधिकरण्यमेव युक्तम् ॥

१ ... २ ... ३ ...

वाजसनेये साम्नि च यद्विषये दहरविद्ये ये ।
सेतुत्वविधरणाद्यैः मेयमिति प्रतीयमानतया ॥ १२४ ॥
"सर्वस्य वशी" त्याद्यैर्गुणादेकस्यात्र वेद्यतावगमात् ।
मिथ्येते न मिथस्ते तद्ब्रह्म श्रीनिवासनाम भजे ॥ १२५ ॥

इद पद्यद्वय सूत्रव्याख्यानेनेव व्याख्यातम् ॥

छान्दोग्ये दहरविद्याया अपहतपाप्मत्वादिप्रत्यभिज्ञापकलिङ्ग सुबालोपनिषदाम्नातश्रीनिवासापरनामधेयनारायणविषयत्वस्य पूर्वं दहराधिकरणे निरूपितत्व तु यद्विषये दहरविद्ये ये इत्युक्तम् ।

८४ ॥ इति कामाद्यधिकरणम् ॥ १६ ॥

३१ ॥ तन्निर्धारणानियमाधिकरणम् ॥ १७ ॥

पूर्वाधिकरणे सत्यकामत्वादीनामुपसहार उक्त । तत्प्रसङ्गात् क्रतुषु उद्गीथाद्युपासन नियमेनोपसहार्यमिति शङ्काव्यावर्तनाय प्रवृत्तमिदमधिकरणम् ॥

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ३-३-४१ ॥

'क्रतुषु' इत्यध्याहार्यम् । क्रतुषु तन्निर्धारणस्य उद्गीथोपासनस्य, अनियमः उपादेयतानियमो नास्तीत्यर्थ । तत्र हेतुमाह, यत क्रतुफलात् पृथग्भूतमप्रतिबन्धरूप फल श्रूयते, अतो नाङ्गत्वमिति सूत्रार्थ ॥

पूर्वपक्ष ।

छान्दोग्ये "'ओमित्येतदक्षरमुद्गीथमुपासीत" इत्युद्गीथाङ्गप्रणवोपासन विहितम् । तदिदमुपासन क्रतुप्रकरणवत् प्रकरणान्तरविहितमपि

क्रत्वङ्गोद्गीथविषयत्वादुद्गीथद्वारा क्रत्वङ्गं भवति । यथा [1]"यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इति प्रकरणान्तरविहिताऽपि जुह्वाः पर्णता क्रत्वङ्गजुहूद्वारा क्रत्वङ्गं भवति, तद्वत् ॥

न च [2]"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इत्युद्गीथोपासनस्य क्रतुफलात् स्वर्गात् भिन्नस्य वीर्यवत्तरत्वरूपफलस्य श्रवणेन पुरुषार्थत्वावगमात् न क्रतुपूपादाननियमः । यथा [3]"गोदोहनेन पशुकामस्य प्रणयेत्" इति विहितस्य गोदोहनशब्दनिर्दिष्टस्य कांस्यपात्रेणापां प्रणयनस्य क्रतुफलात् स्वर्गात् भिन्नपशुरूपफलसाधनताश्रवणेन पुरुषार्थत्वावगमात्, पशुकामनायां सत्यां गोदोहनेन प्रणयनं, कामनाविरहे तु न तेन प्रणयनमित्यनियमः, तद्वदिति वाच्यम् । दृष्टान्ते [3]"गोदोहनेन पशुकामस्य प्रणयेत्" इति विधिप्रत्ययश्रवणेन गोदोहनेन प्रणयनस्य पशुरूपफलान्तरसाधनतायाः पुरुषार्थतायाश्चावश्याङ्गीकर्तव्यत्वेऽपि प्रकृते [2]"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इत्यत्र विधिप्रत्ययाश्रवणेनार्थवादोक्तवीर्यवत्तरत्वस्य उद्गीथोपासनफलतायां मानाभावात् न क्रतुफलात् पृथक्फलसाधनत्वासिद्धिः । ततश्च [1]"यथा यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इत्यर्थवादोक्तपापश्लोकाश्रवणस्य पर्णताफलत्वे मानाभावेन पर्णतायाः क्रत्वर्थत्वात् जुहूद्वारा क्रतुपूपादाननियम, तद्वत् प्रकृतेऽपि क्रत्वर्थस्योद्गीथोपासनस्य उद्गीथद्वारा क्रतुपूपादाननियम इति ॥

## सिद्धान्तः ।

छान्दोग्ये [4]"तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद" इति उद्गीथोपासनवतः तद्रहितस्य च प्रणवेन क्रतुकरणवचनात् उद्गीथोपासनस्य क्रतुषु उपदानानियमो नास्तीत्यवगम्यते । उद्गीथोपासनस्य क्रत्वङ्गत्वे

1 4 छा. १-१-१०. 3

तद्रहितस्य क्रत्वनुष्ठानोक्त्ययोगात् । एवमुद्गीथोपासनस्य क्रत्वङ्गत्वाभावे निश्चिते तस्य क्रतुफलेन फलवत्त्वासंभवात् [1]"ओमित्येतदक्षरमुद्गीथमुपासीत" इति विहितस्योपासनस्य फलाकांक्षायां [2]"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इत्यर्थवादोक्तवीर्यवत्तरत्वरूपफले *विधेस्तात्पर्यमङ्गीकरणीयम् ।* [3]"*यथा रात्रीरुपेयात्*" इति विहितस्य रात्रिसत्रस्य फलाकांक्षायां, [3]"प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ति" इत्यर्थवादोक्ते प्रतिष्ठारूपे फले विधेस्तात्पर्यं, तद्वत् । एवं च उद्गीथोपासनस्य क्रतुफलात् स्वर्गात् क्रतोर्वीर्यवत्तरत्वरूपपृथक्फलसाधनत्वेन पुरुषार्थत्वात् गोदोहनेन अपां प्रणयनवत् क्रतुषु नोपादाननियम । *क्रतोर्वीर्यवत्तरत्वं नाम प्रबलकर्मफलेन सफलस्य प्रतिबन्धाभाव* । प्रबलकर्मणो यावता कालेन फलानुभवसमाप्ति, तावन्तं काल उद्गीथोपासनपूर्वकमनुष्ठितक्रतोः फलानुभवरूपप्रतिबन्धो न भवतीति ॥

उद्गीथवेदनस्याभावेऽपि क्रत्वनुष्ठितेः श्रवणात् ।
तद्वेदनस्य नियमाभावस्य क्रतुषु लाभेन ॥ १२६ ॥
तद्वेदनसहिता वा रहिता वा तेऽखिलाः क्रतवः ।
यदुपासनाङ्गभूतास्तद्ब्रह्म श्रीनिवासनाम भजे ॥ १२७ ॥

श्रवणात् इति। [2]"तेनोभौ कुरुतो यश्चैवं वेद यश्च न वेद" इति श्रुतौ श्रवणादित्यर्थः ॥

[4]"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुत्या यज्ञाना दहरविद्यावेद्यपरमात्मोपासनाङ्गत्वबोधनात्, तस्य दहरविद्यावेद्यस्य श्रीनिवासाख्यदेवताविशेषरूपताया *दहराधिकरणादिषु निर्धारितत्वात्, अत्र यदुपासनाङ्गभूता इत्युक्तम् ॥*

८९ ॥ इति तन्निर्धारणानियमाधिकरणम् ॥ १७ ॥

---

[1] छा. १-१-१. [2] छा. १-१-१०. [3] [4] बृ. ६-४-२२.

## ३२ ॥ प्रदानाधिकरणम् ॥ १८ ॥

कामाद्यधिकरणे दहरविद्या चिन्तिता ; तन्निर्धारणानियमाधिकरणं प्रसङ्गात् प्राप्तम् । इदानीं दहरविद्यायामेव अर्थान्तरं विचारयितुं प्रवृत्तमिदमधिकरणम् ॥

# प्रदानवदेव तदुक्तम् ॥ ३-३-४२ ॥

यथा प्रदानस्य आवृत्तिः क्रियते, तद्वत् चिन्तनस्याऽऽवृत्तिः कर्तव्येत्यर्थः । प्रदानस्याऽऽवृत्तौ प्रमाणमाह तदुक्तं इति । सूत्रभावस्तु सिद्धान्ते स्पष्टीभविष्यति ॥

### पूर्वपक्षः ।

छान्दोग्ये दहरविद्याप्रकरणे [1]"तद्य इह आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्" इति दहराकाशशब्देन निर्दिष्टस्य परमात्मनोऽपहतपाप्मत्वादितदीयगुणानां च पृथगुपासनस्य विहितत्वेऽपि, परमात्मनः सर्वविद्यानुयायिसत्यत्वज्ञानत्वादिस्वरूपनिरूपकधर्मवैशिष्ट्येनोपासनादेव परमात्मरूपधर्मिचिन्तनस्य सिद्धत्वादपहतपाप्मत्वादिगुणविशिष्टतयाऽपि तच्चिन्तनं न कार्यम् । अपि तु गुणिनं परमात्मानमनन्तर्भाव्य गुणमात्रचिन्तनमेव कार्यम् । [1]"एतांश्च सत्यान् कामान्" इति गुणचिन्तनस्यैव विधानादिति ॥

### सिद्धान्तः ।

सत्यत्वादिस्वरूपनिरूपकधर्मवैशिष्ट्येन स्वरूपचिन्तनं, अपहतपाप्मत्वादिविशिष्टतया तच्चिन्तनं च पृथक् कार्यम् । अपहतपाप्मत्वाद्यविशेषितपरमात्मस्वरूपचिन्तनात् तद्विशेषितपरमात्मस्वरूपचिन्तनस्योपास्याकारभेदेन भेदात् ॥

---

[1] छा. ८-१-६.

[1]"अपहतपाप्मा विजरो विमृत्युः" इत्यस्मिन् वाक्ये धर्मिविशेषणतया प्रस्तुतानामेव [2]"एतांश्च सत्यान् कामान्" इत्यत्र चिन्तनीयत्वोक्त्या धर्मिणः परमात्मनोऽपि तच्चिन्तनेऽन्तर्भावस्याऽऽवश्यकत्वात्। ततश्च यथा [3]"इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेत्, इन्द्रायाधिराजाय, इन्द्राय स्वराज्ञे" इति विहितेषु हविरुद्देश्यस्येन्द्रस्यैकत्वेऽपि, राजत्वाधिराजत्वस्वराट्त्वरूपोद्देश्यविशेषणाकारभेदेनोद्देश्यभेदात् हविष्प्रदानावृत्तिः क्रियते, तद्वत् प्रकृतेऽप्युपास्याकारभेदेनोपास्यभेदात् तच्चिन्तनस्याऽऽवृत्तिः कर्तव्या। प्रदानावृत्तिश्च पूर्वमीमांसायां सकर्षकाण्डे [4]"नाना वा देवता पृथक्त्वात्" इति सूत्रे उक्ता। द्रव्याणां भेदात्, विशिष्टरूपाणां देवतानां च भेदात्, त्रिभिर्द्रव्यदेवतासंबन्धैः कल्प्यानां त्रयाणां यागानां भेदात् तत्तद्देवतोद्देशेन क्रमिकाणि प्रदानानि भवन्तीति सूत्रार्थः॥

दहरोपासननिर्दिष्टगुणवैशिष्ट्यस्वरूपाभ्यां।
यत्पृथगनुसन्धेयं तद्ब्रह्म श्रीनिवासनाम भजे॥ १२८॥

अर्थः। गुणवैशिष्ट्यस्वरूपाभ्यां इति। अपहतपाप्मत्वादिगुणवैशिष्ट्येन, सत्यत्वादिस्वरूपनिरूपकधर्मविशिष्टस्वरूपेण च यत् श्रीनिवासाख्यं परं ब्रह्म पृथगनुसन्धेयं तद्ब्रह्म इति पूर्ववत्॥

अत्र दहरविद्यायामुपास्यतयोक्तैरपहतपाप्मत्वादिभिर्गुणैः [1]"एष सर्वभूतान्तरात्माऽपहतपाप्मा" इति सुबालोपनिषच्छ्रुतश्रीनिवासापरनामधेयनारायणस्य प्रत्यभिज्ञायमानतामभिप्रेत्य यत्पृथगनुसन्धेयं इत्युक्तम्॥

८९॥ इति प्रदानाधिकरणम्॥ १८॥

---

[1] छा. ८-१-५ [2] छा ८-१-६ [3] तै स २-३-६ [4] सकर्ष

## २२ ॥ लिङ्गभूयस्त्वाधिकरणम् ॥ १९ ॥

पूर्वाधिकरणे दहरविद्या चिन्तिता, तत्प्रकरणपठितस्य नारायणानुवाकस्य तच्छेषत्वनिराकरणाय प्रवृत्तमिदमधिकरणम् ॥

# लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि ॥ ॥ ३-३-४३ ॥

**लिङ्गानां** चिह्नानां, चिह्नभूतवाक्यानामित्यर्थः, **भूयस्त्वात्** बहुलत्वात् सर्वविद्यावेद्यवस्तुनिर्धारणपरत्वमेव नारायणानुवाकस्य युक्तं इत्यध्याहारेण योजनीयम्। वाक्यान्निर्धारणीयत्वे हेतुमाह **तद्धि बलीयः** इति। तत् वाक्यं, हि-यतः, प्रकरणात् बलीय इत्यर्थः। प्रकरणात् वाक्यस्य बलीयस्त्वे हेतोरुक्ततामाह **तदपि** इति। [1]"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति पूर्वमीमांसासूत्रे प्रकरणाद्वाक्यस्य बलीयस्त्वं सहेतुकमुक्तमित्यर्थः ॥

### पूर्वपक्षः।

तैत्तिरीयके "दह्रं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम्। तत्रापि दह्रं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्" इति दहरविद्यां प्रक्रम्य, [2]"सहस्रशीर्षं" इत्युपक्रम्य, [3]"परम स्वराट्" इत्यन्तं श्रूयते। तत्र पूर्वप्रकृतदहरविद्यायामुपास्यनिर्धारणाय प्रवृत्तोऽयमनुवाक इत्येव युक्तम्, प्रकरणेन तदेकवाक्यत्वावगमात्। न च "सहस्रशीर्षं देवं" इत्यादिद्वितीयान्तपदोपस्थाप्यस्योपासितव्यं इति पूर्ववाक्यस्थधातूपस्थाप्योपासनेन समन्वयसंभवे तदेकवाक्यता स्यात्। स एव न संभवति। 'उपासितव्यं' इत्यत्र कृत्प्रत्ययेनोपासनकर्मणोऽभिहितत्वेन "सहस्रशीर्षं

1 पू मी ३-३-१४ 2 तै ना १० 3 तै ना ११

देवं" इत्याद्युपास्यवाचिपदोत्तरं द्वितीयानुपपत्तेः क्रियाकर्मणोऽनभिधान एवानभिहिताधिकारस्थेन [1]"कर्मणि द्वितीया" इति सूत्रेण द्वितीयाविधानात्, इति वाच्यम्। [2]"येनावृतं खं च दिवं महीं च" इत्यादाविव प्रथमार्थे द्वितीयानिर्देशसंभवात्, क्रियावाचिपदान्तराश्रवणेन द्वितीयान्तार्थानां कस्यचिदप्यनन्वयप्रसङ्गेन विभक्तिव्यत्ययाश्रयणस्याऽऽवश्यकत्वाच्च। ततश्च [3]"तस्मिन् यदन्तस्तदुपासितव्यं" इत्यत्र प्रथमान्ततच्छब्देन एकशेषसमासरूपेण उपस्थापितयोर्गुणाष्टकतदाश्रयात्मनोर्मध्ये आत्मनि 'सहस्रशीर्ष' इत्यादिप्रथमान्तपदोपस्थाप्यस्य नारायणस्यान्वयेन यत् गुणाष्टकं यश्च तदाश्रयो नारायणाभिन्न आत्मा तदुभयमुपासितव्यं इत्यर्थलाभादेकवाक्यतासंभवः। [4]"पद्मकोशप्रतीकाशं हृदयं चाप्यधो मुखं" इत्यादिना हृदयपुण्डरीकोपस्थानेन पूर्वप्रस्तुतदहरविद्यावेद्यनिर्धारणपरत्वावगमाच्च नारायणानुवाकस्य दहरविद्यावेद्यनिर्धारणपरत्वमेव युक्तमिति॥

सिद्धान्तः।

नारायणानुवाके [5]"नारायण परं ब्रह्म तत्त्वं नारायण परः। नारायणपरो ज्योतिरात्मा नारायण पर" इत्यादिवाक्यरूपप्रमाणैः अस्य नारायणानुवाकस्य सर्वपरविद्यावेद्यनिर्धारणपरत्वमवगम्यते। तेषु वाक्येषु तत्तत्परविद्यासु 'परब्रह्म" परतत्त्व" परज्योतिः" परमात्मा 'दिशब्दैः निर्दिष्टमुपास्यवस्त्वनूद्य तस्य नारायणत्वविधानात्। यथा [6]"ब्रह्मविदाप्नोति परं" इत्यादौ ब्रह्मशब्दवाच्यो नारायण, [7]"अथ यदतः परो दिवो ज्योतिर्दीप्यते" इत्यादौ ज्योतिश्शब्दनिर्दिष्टो नारायणः [8]"आत्मा वा अरे द्रष्टव्यः" इत्यादौ आत्मशब्दनिर्दिष्टो नारायणः, [9]"यया तदक्षरमधिगम्यते" इत्यादौ अक्षरशब्दवाच्यो नारायणः, [10]"शम्भुराकाशमध्ये ध्येयः" इत्यादौ शंभुशिवादिशब्दवाच्योऽपि नारायणः इत्येवमादि॥

1 2 3 तै. ना १२. 4 तै. ना. १३. 5 तै. ना. ११.
6 तै. आन. १. 7 छा. ३-१३-७ 8 बृ. ४-४-५ 9 [illegible] 10

अस्यानुवाकस्य [1]"नारायण पर ब्रह्म" इत्यादिषु बहुषु वाक्येषु नारायणपदावृत्त्या तत्तत्परविद्यावेद्यवस्तूद्देशेन नारायणत्वविधानपरत्वावगमात्, [1]"शाश्वत शिवमच्युत। विश्व नारायण देवमक्षर परम प्रभु" इत्यादावपि शिवाक्षरादिशब्दवाच्योद्देशेन नारायणत्वविधाने तात्पर्यनिर्णयेनोक्तार्थलाभो बोद्धव्य। यत्तु [1]"नारायण पर ब्रह्म" इत्यत्र 'नारायणात् पर नारायणपर' इति पञ्चमीतत्पुरुषमाश्रित्य ब्रह्म नारायणादुत्कृष्टमित्यर्थवर्णन तदुत्तरवाक्यविरोधादनुपादेयम्। [1]"यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्व व्याप्य नारायण स्थित" इत्युत्तरवाक्ये हि नारायणव्यतिरिक्ताना सर्वेषा नारायणेन अन्त प्रविश्य नियन्तृतया व्याप्तत्वमभिहितम्। अन्तर्यामिब्राह्मणे [2]"य पृथिवीमन्तरो यमयति, य आत्मानमन्तरो यमयति" इत्यादा अन्तर्व्याप्तस्तन्नियमनार्थत्वश्रवणात्, अन्तर्यामिब्राह्मणस्य सुबालोपनिषदैकार्थ्येन नारायणविषयत्वावगमात्॥

इत्थ च नारायणव्यतिरिक्तस्य सर्वस्य नारायणनियाम्यतासिद्ध्या तस्मादुत्कृष्टत्वासभवात् ब्रह्म नारायणादुत्कृष्टमित्यर्थवर्णनस्य उत्तरवाक्यविरुद्धत्व स्फुटम्। अत [1]"नारायण पर ब्रह्म" इत्यत्र नारायणपदोत्तर 'सुपा सुलुक्' इत्यादिसूत्रेण सुविभक्तेर्लोप प्रतिपत्तव्य। एव प्रकरणाद्बलीयसा वाक्यप्रमाणेन तस्यानुवाकस्य सर्वपरविद्यावेद्यवस्तुविशेषनिर्धारणपरत्वे निर्णीते दुर्बल प्रकरण दहरविद्यावेद्यमात्रपरत्वनिर्धारणाय नालम्॥

[3]"पद्मकोशप्रतीकाश" इत्यादिना दहरविद्यावेद्यनिर्धारण तु सामान्येन सर्वविद्यावेद्यनिर्धारणस्य विशेषे उपसहार। यथा सद्विद्याया [4]"ऐतदात्म्यमिद सर्व"इति सामान्येनोपदिष्टस्य ब्रह्मात्मकत्वस्य [4]"तत्त्वमसि" इति विशेषे उपसहार, तद्वत्। अत सर्वपरविद्यावेद्यनिर्धारणपरत्वमस्यानुवाकस्य युक्तमिति॥

[1] तै ना ११ [2] बृ ५ ७-२२ [3] तै ना १३ [4] छा ६ ८ ७

नारायणानुवाके तत्तद्विद्यासु शिवपदाद्युक्तम् ।
*यदिति निरणायि वाक्यैस्तद्ब्रह्म श्रीनिवासनाम भजे ॥ १२९ ॥*

वाक्यैः-वाक्यप्रमाणैरित्यर्थ । शिष्टं स्पष्टम् ॥

नन्वस्याधिकरणस्य नारायणानुवाकस्य सर्वपरविद्यावेद्यवस्तु-निर्धारणार्थताव्यवस्थापनपरत्वे अधिकरणारम्भवैयर्थ्यप्रसङ्ग , दहरविद्या-वेद्यवस्तुविशेषनिर्धारणेन दहरवाक्यशेषत्वेऽपि दहरविद्याया नारायणस्यो-पास्यत्वसिद्धौ सर्वास्वपि परविद्यासु नारायणस्यैव वेद्यतासिद्धे । सर्वासा मपि परविद्याना मोक्षसाधनताया [1]"विकल्पोऽविशिष्टफलत्वात्" इति सूत्रे वक्ष्यमाणतया मोक्षसाधनविद्यासु जगत्कारणस्यैव ध्येयतया [2]"कारण तु ध्येय " इति श्रुतिसिद्धत्वेन नारायणस्य परविद्यान्तर्गतदहरविद्यावेद्यत्व-सिद्धौ तस्यैव जगत्कारणत्वासिद्ध्या सर्वास्वपि परविद्यासु तस्यैव नारायण-स्य ध्येयतासिद्धे । एव गुणोपसहारनिरूपणपरेऽस्मिन् पादे अस्याधि-करणस्य सङ्गत्यभावश्च प्रसज्यते । न ह्यस्मिन्नधिकरणे केषाञ्चिद्गुणानामुप सहार्यता वा, तत्प्रयोजक विद्यैक्य वा व्यवस्थाप्यते । अतोऽधिकरणा-रम्भवैयर्थ्यं पादासङ्गतिश्चेति दोषद्वय दुर्वारमिति चेत्---उच्यते । न्याय-निरूपणमन्तरेण श्रुत्यैव सर्वपरविद्यावेद्यनिर्धारणसभव तत्परित्यागानौ-चित्यात्, *श्रुत्यैव तन्निर्धारणसिद्धिव्यवस्थापनार्थत्वेन नाधिकरणारभ-वैयर्थ्यम्* ॥

एव [3]"आनन्दादय प्रधानस्य" इत्यधिकरणे सर्वासु परविद्यासु उपास्यस्य ब्रह्मणोऽभेदात् आनन्दत्वादितत्स्वरूपनिरूपकधर्माणा सर्वासूप-सहार्यत्वमुक्तम् । तच्च सर्वासु परविद्यासूपास्याभेदमन्तरा न घटते । पर-विद्यासु च कासुचित् अक्षरस्य, कासुचित् परज्योतिष , कासुचित् शिवस्य,

---

[1] ३ ३-५७ [2] अथर्व [3] ३ ३ ११

कासुचित् चतुर्मुखस्य कासुचिदिन्द्रस्य चोपास्यत्वश्रवणात् उपास्याभेदो न संभवति ।.अतो न्यायनैरपेक्ष्येण श्रुत्यैव सर्वासु परविद्यासु उपास्याभेदसिद्धिव्यवस्थापनाय नारायणानुवाकस्य प्रकरणप्राप्तं दहरवाक्यशेषत्वं निराकृत्य सर्वपरविद्यावेद्यनिर्धारणार्थत्वस्य अस्मिन् पादे क्वचित् व्यवस्थापनीयतया स्वरूपनिरूपकधर्मान्तर्गतस्य अमलत्वस्य सङ्गतिविशेषप्राप्ततत्तदर्थचिन्तानन्तरं अक्षरध्यधिकरणे चिन्तनवत् सङ्गतिविशेषप्रसक्ततत्तदर्थचिन्तानन्तरं कामाद्यधिकरणे प्रदानाधिकरणे च दहरविद्याचिन्तनस्य प्रस्तुततया नारायणानुवाकस्य प्रकरणप्राप्तं दहरवाक्यशेषत्वं निराकृत्य सर्वपरविद्यावेद्यनिर्धारणार्थत्वं व्यवस्थापितमित्यतोऽस्य अधिकरणस्य न पादसङ्गतिविरहः, न वा अधिकरणसङ्गतिविरहः इति ॥

८६ ॥ इति लिङ्गभूयस्त्वाधिकरणम् ॥ १९ ॥

३४ ॥ पूर्वविकल्पाधिकरणम् ॥ २० ॥

पूर्वाधिकरणे नारायणानुवाकस्य प्रकरणाद्बलीयसा वाक्यप्रमाणेन दहरवाक्यशेषत्वं निराकृतम् । मनश्चिदाद्यग्नीनां प्रकरणेन क्रियामयक्रतुशेषत्वाङ्गीकारे बाधकविरहेण क्रियामयक्रतुशेषत्वमेवास्त्विति शङ्कावारणाय प्रवृत्तमिदमधिकरणम् ॥

## पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत्॥ ॥ ३-३-४४ ॥

[अतिदेशाच्च ॥ ४५ ॥]

इदं सूत्रद्वयं पूर्वपक्षविषयम् । 'मनश्चिदादय' इत्यध्याहार्यम् । मनश्चिदादयोऽग्नयः क्रियामयक्रतुप्रकरणात् क्रियामयक्रत्वङ्गभूताः पूर्वेण इष्टकाचिताग्निना विकल्पः स्यात् । मानसग्रहासादनादीनामिव क्रियामयक्रत्वनुप्रवेश उपपद्यत इति सूत्रार्थः ॥

अय भाव —वाजसनेयके अग्निरहस्ये इष्टकचिताग्निप्रकरणे मनश्चिदादयोऽग्नय श्रूयन्ते। मनोव्यापारैश्चयमता अग्नयो मनश्चित इत्युच्यन्ते। एव वाक्चिदादयोऽप्यग्नयो द्रष्टव्या । कर्मचित —वागतिरिक्तकर्मेन्द्रियव्यापारैरग्नित्वदृष्टया निष्पन्ना अग्नय । तेषामिष्टकचिताग्निप्रकरणे विधानात् इष्टकचिताग्नयश्च क्रियामयक्रतुसम्बन्धित्वेन, क्रियामयक्रतोरपि तत्र सन्निहितत्वात् इष्टकचिताग्नीना क्रियामयक्रतूपकारकत्वेन यथा तदङ्गत्वेन तत्प्रवेश, एव मनश्चिदादीनामप्यग्नीना क्रत्वन्वयसाकाङ्क्षाणा इष्टकचिताग्न्युपस्थापितक्रियामयक्रतावेव प्रवेश । क्रियामयक्रतोरिष्टकचिताग्निभिनिराकाङ्क्ष्येऽपि मनश्चिदादीनामग्नीना तैरिष्टकचिताग्निभि सम विकल्पोऽस्तु । अतो मनश्चिदाद्यग्नय क्रियामयक्रत्वङ्गभूता, न तु विद्यामयक्रत्वङ्गभूता, विद्यामयक्रतोर्विध्यदर्शनेन तस्यैवाभावात् । द्वादशाहनिष्पाद्यक्रतौ दशमदिने मनसा कल्पितत्वेन मनोमयाना ग्रहतदासादनस्तोत्रशस्त्रादीना द्वादशाहक्रतावङ्गतयाऽनुप्रवेशवत् मानसानामपि मनश्चिदाद्यग्नीना क्रियामयक्रतावनुप्रवेशोपपत्ते । [1] "तेषामेकैक एव तावान् यावानसौ पूर्व " इति मनश्चिदाद्यग्निषु एकैकस्मिन् इष्टकचिताग्निकार्यातिदेशेन तत्समानदेशत्वावगमाच्च क्रियामयक्रत्वङ्गभूता एव मनश्चिदाद्यग्नय इति ॥

विद्यैव तु निर्धारणाद्दर्शनाच्च ॥ ३ ३-४६ ॥

[श्रुत्यादिबलीयस्त्वाच्च न बाध ॥ ४७ ॥

अनुबन्धादिभ्य प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ४८ ॥

न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्ति ॥ ४९ ॥

परेण च शब्दस्य ताद्विध्य भूयस्त्वात्त्वनुबन्ध ॥ ५० ॥]

एतानि सिद्धान्तसूत्राणि ॥

---

1

तुशब्दः पक्षव्यावृत्त्यर्थः। मनश्चिदादयोऽग्नय, विद्येव-विद्यामय-क्रत्वङ्गभूता एवेत्यर्थः। तत्र हेतुः निर्धारणाद्दर्शनाच्च इति। [1]"ते हैते विद्याचित एव," [2]"विद्यया हैवैत एवंविदश्चिता भवन्ति" इत्युभयत्रावधारणश्रवणात्, [3]"यत् किञ्च यज्ञे कर्म क्रियते, यत् किञ्च यज्ञीयं कर्म मनसैव तेषु मनोमयेषु मनश्चित्सु मनोमयमक्रियत" इत्यत्र विद्यामयक्रतोर्दर्शनाच्च इति सूत्रार्थः॥

भाव्र। [1]"विद्याचित एव" इत्यत्र तद्विवरणरूपे [2]"विद्यया हैवैत एवंविदश्चिता भवन्ति" इत्यत्र चोभयत्रावधारणं श्रूयते। अनेनावधारणेन मनश्चिदादीना विद्यामयक्रत्वङ्गत्वं निश्चीयते। इष्टिरूपाणां मनश्चिदादीना विद्यारूपत्वे सिद्धे पुनरवधारणस्य प्रयोजनान्तरानुपलंभात्। एवं विद्यामयाना ग्रहस्तोत्रशस्त्रादीनां यज्ञाङ्गानामत्र श्रवणात् विद्यामयक्रतुश्चात्र प्रतीयते। अतोऽवधारणेनाङ्गिनो विद्यामयक्रतोरत्र प्रतीयमानतया च मनश्चिदाद्यग्नयो विद्यामयक्रत्वङ्गभूता एवेति निर्णीयते॥

ननु विद्यामयक्रतोरत्र विध्यदर्शनात्, विधिकल्पकस्य फलसंबन्धस्याश्रवणाच्च मनश्चिदाद्यग्नीना क्रियामयक्रत्वङ्गताग्राहकेण प्रकरणेन तेषां विद्यामयक्रत्वङ्गत्वाबाधात्, तदङ्गतानिर्णयो न युक्त इति चेत्, मैवं--विद्यामयक्रत्वङ्गताग्राहकाणा श्रुतिलिङ्गवाक्यानामत्रोपलभ्यमानत्वात्, तेषां प्रकरणात् बलीयस्त्वाच्च, दुर्बलेन प्रकरणेन तदङ्गत्वबाधायोगात्। अत्र हि [2]"विद्यया हैवैत एवंविदश्चिता भवन्ति" इत्यत्र 'विद्यया' इति तृतीयाश्रुत्या मनश्चिदादीनां विद्यामयक्रत्वङ्गत्वं बोध्यते। प्रयोजनरूपहेत्वर्थिकया तृतीयया मनश्चिदादीना विद्यामयक्रत्वर्थताबोधनात्। [4]"तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते" इत्यत्र सर्व. भूतैः

1 2 3 4

सर्वदा क्रियमाणमनोव्यापारसाधारणमनोव्यापारत्वरूपसामान्यधर्मावच्छिन्ने अध्यस्तस्याग्नेः सर्वभूतकर्तृकसार्वकालिकचयनकर्मत्वमत्राभिधीयते । ततश्च सर्वभूतकर्तृकसार्वकालिकचयनकर्मत्वात्मकवस्तुसामर्थ्यरूपलिङ्गेन मनश्चिदग्नेर्विद्यामयक्रत्वङ्गताऽवसीयते । तथाविधस्याग्नेः परिमितकालकर्तृकचयनवत् क्रियामयक्रतावनुप्रवेशासम्भवात् ॥

[1]"एवंविदे चिन्वन्ति" इति समभिव्याहाररूपवाक्यादपि मनश्चिदाद्यग्नीनां विद्यामयक्रत्वर्थत्वं गम्यते । अनेन वाक्येन मनश्चिदादीनां पुरुषद्वारा विद्यासम्बन्धप्रतीतेः । यथोक्तविद्यावत्पुरुषस्य कृते ह्येतानग्नींश्चिन्वन्ति इति हि तदर्थः ॥

एवं मनश्चिदादीनां विद्यामयक्रत्वङ्गताग्राहकैरुक्तश्रुत्यादिभिरनुवादरूपवाक्यावगतैः अहस्तोलदास्रादिभिर्यज्ञाङ्गैश्च क्रियामयक्रतौ दहरविद्यादिवत पृथग्भूतस्य विद्यामयक्रतोरुन्नीयमानत्वात् अदृष्टोऽपि विधिः कल्प्यते । यथा "सर्वत परिहारमाश्विनं भक्षयति" इत्याद्यनुवादरूपेषु वचनेषु सोमभक्षणस्याप्राप्तत्वेन भक्षणविधिः कल्प्यते तद्वत्। सोमेऽवचनाद्भक्षो न विद्यत इति पूर्वतन्त्राधिकरणे [2]"वचनानि त्वपूर्वत्वात्" इति सिद्धान्तसूत्रेण तद्विधिकल्पनस्योक्तत्वात् । [3]"तेषामेकैक एव तावान् यावानसौ पूर्वः" इति इष्टकचिताग्नितुल्यत्वातिदेशस्य वीर्यवत्त्वरूपफलांशे साम्येनाप्युपपत्त्या इष्टकचिताग्निवत् क्रियामयक्रत्वनुप्रवेशस्यातिदेशेन प्राप्त्यसम्भवात् । यथा [4]"स एष एव मृत्युः" इत्यादित्ये मृत्युत्वातिदेशेऽपि आदित्यस्य संहर्तृत्वमात्रेण मृत्युसादृश्योपपत्त्या न मृत्युलोकप्राप्तिसिद्धिः, तद्वत् ॥

एवमुत्तरब्राह्मणे लोकं पृणाग्निविषयविद्याविशेषविधानदर्शनात् तत्साहचर्येण अस्मिन्नपि ब्राह्मणे मनश्चिदाद्यग्निविषयविद्यैव विधीयते इति निश्चीयते ।

---

1    2 पू. मी. ३-५-२१.    3    4

विद्याया बृहदारण्यके वक्तव्यत्वेऽपि, मनश्चिदाद्यग्निषु संपादनीयानां अग्न्यङ्गानां बहूनामत्र अग्निरहस्ये उपदेशात् तत्सन्निधौ तदुक्तिरिति ॥

> याश्चिन्मनश्चिदाद्याश्चीयन्ते यत्कृते क्रतोस्तस्य ।
> भवति हि यदेव फलदं तद्ब्रह्म श्रीनिवासनाम भजे ॥ १२० ॥

याश्चिन्मनश्चिदाद्याः अग्नयः यस्य विद्यामयस्य क्रतोः सिद्धयर्थं चीयन्ते तस्य विद्यामयस्य क्रतोः, यत्-श्रीनिवासाख्यं ब्रह्मैव फलदं तद्ब्रह्म इति पूर्ववत् ॥

[1]"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति भगवतः श्रीनिवासस्यैव सर्वयज्ञसमाराध्यत्वतत्फलप्रदत्वयोः स्मरणात्, अत्र यदेव फलदं इत्युक्तम् ॥

८७ ॥ इति पूर्वविकल्पाधिकरणम् ॥ २० ॥

---

६५ ॥ शरीरेभावाधिकरणम् ॥ २१ ॥

पूर्वं लिङ्गभूयस्त्वाधिकरणे सर्वासु परविद्यासु परमात्मनो नारायणस्यैव उपास्यत्वमुक्तम् । अनन्तराधिकरणं प्रासङ्गिकम् । सर्वासु परविद्यासु यथा परमात्मा उपास्यः, तथा तासु सर्वासु परविद्यासु प्रत्यगात्माऽपि शुद्धावस्थ उपास्य इति निरूपणाय प्रवृत्तमिदमधिकरणम् ॥

## एक आत्मनः शरीरे भावात् ॥ ३-३-५१ ॥

इदं पूर्वपक्षसूत्रम् । आत्मनः-उपासकस्य प्रत्यगात्मनः, शरीरे भावात्-सशरीरत्वादित्यर्थः; सशरीरस्य यादृशं रूपं तादृशं रूपमेवानुसन्धेयमिति एके मन्यन्ते इति सूत्रार्थः ॥

---

[1] गी. ९.

अयं भाव.—सर्वासु परविद्यासु प्राप्यः परमात्मा यथा उपास्य, तथा प्राप्ता प्रत्यगात्माऽप्युपास्य इति [1]"तथाणमेव चैवमुपन्यास. प्रश्नश्च" इति सूत्रे उक्तम्। [2]"आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति सूत्रे च वक्ष्यते। तत्र प्रत्यगात्मन· ससारदशाया यादृशो ज्ञातृत्वकर्तृत्वभोक्तृत्वादिराकारः तादृशाकारविशिष्टतया तस्यानुसन्धानादेव स्वर्गादिफलसिद्धिवत् मोक्षफलस्यापि सिद्धिसंभवात् ज्ञातृत्वाद्याकारविशिष्ट एवानुसन्धेय। न हि यागादिफलप्राप्तिदशायां प्रत्यगात्मनो यादृशं रूपं तादृशं रूपं तत्फलसाधनयागादिकर्मानुष्ठानदशायामनुसन्धेयम्। न च [3]"यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति यथोपासनमेव फलप्राप्तिश्रवणात् प्रत्यगात्मा अपहतपाप्मत्वादिस्वप्राप्याकारविशिष्ट एवोपासनदशायामनुसन्धेय इति वाच्यम्। यथाक्रतुश्रुतेः तत्समानार्थकेन [4]"तं यथा यथोपासते तथैव भवति" इति श्रुत्यन्तरेण परमात्मविषयत्वावगमात्॥

व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत्॥ ३-३-५२॥

इदं सिद्धान्तसूत्रम्। अस्योपासकस्य प्रत्यगात्मन ससारदशाया यो ज्ञातृत्वाद्याकार स नोपासितव्य·; किन्तु ससारदशापेक्षया यो मोक्षदशाया व्यतिरेकः-अपहतपाप्मत्वादिविशिष्टतारूप स उपासनदशायामनुसन्धेयः; तथाविधाकारविशिष्टप्राप्तेस्तथाविधाकारविशिष्टतयाऽनुसन्धानादेव सभवात्। यथा यथावस्थितपरमात्मस्वरूपानुसन्धानादेव तत्प्राप्तिसभवेन यथावस्थितस्वरूप एव परमात्मोपास्यते, तद्वदिति सूत्रार्थ॥

अयं भाव—[4]"तं यथा यथोपासते तथैव भवति" इति श्रुतिर्न परमात्ममात्रविषया, अपि तु प्रत्यगात्मविशिष्टपरमात्मविषया, प्रत्यगात्मनोऽपि परमात्मगुणानामिव तद्विशेषणतया प्राप्यान्तर्गतत्वात्। अत प्राप्याकारविशिष्टतया परमात्मन इव प्रत्यगात्मनोऽप्युपासन एव प्राप्याकारविशिष्ट-

[1] १-४-६ [2] ४-१-३ [3] छा. ३-१४-१. [4] मुद्गल. ३.

प्राप्तिसंभवस्य तत्क्रतुश्रुतिसिद्धत्वात् अपहतपाप्मत्वादिरूपप्राप्याकारविशिष्ट एव स्वात्मा उपासकेनानुसन्धेयः। यागादिकर्मकर्तुः जीवस्य देहातिरिक्तत्वज्ञानं विना देहान्तरानुभाव्यफलभोक्तृत्वनिर्णयासंभवेन यागादौ प्रवृत्त्यसंभवात् तादात्विकज्ञातृत्वकर्तृत्वाद्याकारनिर्णयमात्रमपेक्षितं, न त्वपहतपाप्मत्वादिरूपतत्स्वरूपनिर्णयोऽपीति ॥

इदमत्रावधेयं–तत्क्रतुश्रुतेः प्रकृतसूत्रस्यश्रीभाष्यस्य च अनुपासिताकारस्य प्राप्त्यसंभवात् प्रत्यगात्मनोऽपहतपाप्मत्वादिरूपप्राप्याकारोऽनुसन्धेय इत्यत्र न तात्पर्यम्। [1]"विकल्पोऽविशिष्टफलत्वात्" इति सूत्रे सर्वाभिः परविद्याभिः तत्तत्प्रकरणश्रुतब्रह्मगुणमात्रविषयिणीभिः सकलकल्याणगुणविभूतिविशिष्टब्रह्मानुभवरूपमोक्षफलप्राप्त्यभिधानेन तद्विरोधप्रसङ्गात्। अपि तूपासिताकारस्य फलदशायां प्राप्तिरवश्यंभाविनीत्यत्र तात्पर्यम्। अतश्चोपासकेन प्रत्यगात्मना स्वस्य संसारदशायां यो ज्ञातृत्वकर्तृत्वभोक्तृत्वादिरौपाधिकाकारः तद्विशिष्टतयाऽनुसन्धाने मोक्षदशायां तत्प्राप्तेरवर्जनीयतया तद्विपरीतस्वाभाविकाकारप्राप्त्यसंभवात् प्राप्याकार एवानुसन्धेय इत्यत्रैव तात्पर्यम् ॥

परविद्यासूपास्यो जीवात्मा यद्विशेषणत्वेन।
शुद्धाकार उपास्यः तद्ब्रह्म श्रीनिवासनाम भजे ॥ १३१ ॥

परविद्यासु यद्विशेषणत्वेनोपास्यो जीवात्मा शुद्धाकार उपास्यः, तद्ब्रह्म इत्यन्वयः ॥

नारायणानुवाके सर्वासु परविद्यासु भगवतः श्रीनिवासस्यैव उपास्यताया निर्धारितत्वेन, अत्र यद्विशेषणत्वेन इत्युक्तम् ॥

८८ ॥ इति शरीरेभावाधिकरणम् ॥ २१ ॥

---

[1] ३-३-५७.

३६ ॥ अङ्गावबद्धाधिकरणम् ॥ २२ ॥

पूर्वस्मिन्नधिकरणे यत्र यत्र परमात्मोपासनं तत्र तत्र परिशुद्धप्रत्यगात्मस्वरूपोपासनं कर्तव्यमिति निर्णीतम्। तद्वत् यत्र यत्र शाखायामुद्गीथं समन्य, तत्र तत्रोद्गीथोपासनमस्तीति निर्णयाय प्रवृत्तमिदमधिकरणम् ॥

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ३-३-५३ ॥

[मन्त्रादिवद्वाऽविरोधः ॥ ५४ ॥]

तुशब्दः पक्षव्यावृत्त्यर्थः। अङ्गावबद्धाः कर्माङ्गोद्गीथविषया उपासनाः, शाखासु-तत्तच्छाखासु, न व्यवतिष्ठन्ते, अपि तु शाखान्तरेष्वपि सम्बध्यन्ते, हि यतः, सर्वासु शाखासु उद्गीथाः सन्निहिताः इति सूत्रार्थः ॥

अत्रैव पूर्वपक्षः — [1]" ओमित्येतदक्षरमुद्गीथमुपासीत " इति विहितानि कर्माङ्गोद्गीथविषयाण्युपासनानि तस्याः शाखायाः विहितानि, तानि तस्याः शाखायामेव व्यवस्थितानि। [1]" उद्गीथमुपासीत " इति श्रुतस्योद्गीथशब्दस्य उद्गीथसामान्यवाचित्वेऽपि व्यक्तिवाचिना शब्दानां सन्निहितव्यक्तिविशेषवाचितायाः 'गामानय' इत्यादौ दृष्टत्वात्, प्रकृते उद्गीथशब्दस्य तत्तच्छाखासन्निहितोद्गीथमात्रविषयतायाः आवश्यकत्वात् तत्तच्छाखागतोद्गीथानां च स्वरभेदेन भिन्नत्वादिति ॥

सिद्धान्तः।

'गामानय' इत्यादौ सामान्यवाचिना गोशब्देन उपस्थितानां सर्वासां गोव्यक्तीनामानयनासंभवेन सन्निहितव्यक्तिविशेषपरतया सङ्कोचस्याऽऽवश्यकत्वेऽपि प्रकृते उद्गीथशब्दस्य यत्किञ्चिदुद्गीथमात्रविषयतया सङ्कोचे प्रमाणाभावेन उद्गीथशब्दः उद्गीथसामान्यविषय एव ॥

---

[1] छा १११

न च सन्निहितत्वमेव व्यक्तिविशेषपरतया सङ्कोचकमस्तीति वाच्यं ; सन्निहितत्वं हि बुद्धिस्थत्वम्। तच्च सर्वोद्गीथव्यक्तिसाधारणम्। उद्गीथशब्देन सर्वासामेवोद्गीथव्यक्तीनामुपस्थापनात्। किञ्च तत्तच्छाखासु विहितानां क्रतूनां सर्वशाखाप्रत्ययन्यायेन एकत्वात् तदङ्गोद्गीथविषये उपासने विधीयमाने उपासनस्य तत्तच्छाखाविहितक्रत्वङ्गोद्गीथविषयतासिद्ध्या सर्वास्वपि शाखासु उपासनस्यानुप्रवेशनसिद्धेः। कस्याचिदेव शाखायां तदुपासनमिति न व्यवस्था। तथाविधव्यवस्थाश्रयणे कचिच्छाखायामाम्नातमन्त्रादेः शाखान्तरेऽनुप्रवेशो न स्यात्। दृश्यते च कचिच्छाखायामाम्नातस्य मन्त्रादेः शाखान्तरेऽनुप्रवेशः। यथा वेदान्तरे आम्नातानां [1]"अग्नेर्वैहोत्रं वेरध्वर" इत्यादिमन्त्राणां वेदान्तरविहिते कर्मण्यनुप्रवेशः। अतः सर्वास्वपि शाखासु उद्गीथोपासनानि भवन्त्येवेति ॥

सर्वासां व्यक्तीनां उद्गीथपदेन धीस्थत्वात्।
तत्तद्व्यक्तिविशेषैः सर्वैः संबद्ध्यमानानि ॥ १३२ ॥
तदुपासनानि तद्वत् संबद्ध्यन्तेऽखिलासु शाखासु।
यद्यजनरूपकर्मसु तद्ब्रह्म श्रीनिवासनाम भजे ॥ १३३ ॥

[2]"उद्गीथमुपासीत" इत्यत्र उद्गीथसामान्यवाचिनोद्गीथशब्देन सर्वासां एव उद्गीथव्यक्तीनां उपस्थापनेन सर्वासां एव तासां धीस्थत्वेन, ताभिः संबद्ध्यमानानि उपासनानि तत्तदुद्गीथव्यक्तिवत् सर्वेषु तत्तच्छाखाविहितेषु कर्मसु संबद्ध्यन्ते, तानि कर्माणि यद्यजनरूपाणि-श्रीनिवासाराधनरूपाणि इति भावः ॥

यद्यजनरूपत्वे प्रमाणं पूर्वमेव निरूपितम् ॥

८९ ॥ इति अङ्गावबद्धाधिकरणम् ॥ २२ ॥

---

1

2 छा. १-१-१.

## ३६ ॥ भूमज्यायस्त्वाधिकरणम् ॥ २३ ॥

पूर्वाधिकरणे उद्गीथस्योपासनं प्रस्तुतम्। तस्योद्गीथस्य व्यस्तस्य समस्तस्य च उपासनं श्रुतिसिद्धम्। तद्वत् वैश्वानरविद्यायामपि व्यस्तस्य समस्तस्य चोपासनप्रतीते व्यस्तस्य, अथवा समस्तस्य, उभयस्यैव वा, वैश्वानरस्योपासनं कर्तव्यमिति शङ्कापरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ॥ ३-३-५५ ॥

भूम्नः-विपुलस्येत्यर्थ, समस्तावयवविशिष्टवैश्वानरोपासनस्येति यावत्; ज्यायस्त्वं प्रामाणिकत्वमित्यर्थः। क्रतुवत्-[1]"वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" इति विहितस्य द्वादशकपालस्य क्रतो [1]"यदष्टाकपालो भवति" इत्यादौ यथा एकदेशानुवादः, तद्वत् इत्यर्थः। तथा हि दर्शयति-समस्तोपासनस्य प्रामाणिकत्वमेव श्रुतिर्दर्शयति इति सूत्रार्थः ॥

### पूर्वपक्षः।

छान्दोग्ये वैश्वानरविद्याप्रकरणे औपमन्यवादिषु षट्सु वैश्वानरात्मजिज्ञासया वैश्वानरात्मविदं केकयस्य समीपमागतेषु केकयेन तेषां प्रत्येकमुपासनप्रकारं पृष्ट्वा, तत्तैः स्वस्वोपासनप्रकारे प्रत्येकमभिहिते, औपमन्यवादीन् प्रति 'त्वदुपास्यमानः स्वर्लोको वैश्वानरात्मनो मूर्धा अस्य सेतुजा इति नाम तदुपासनस्येदं फलम्, त्वदुपास्यमान आदित्यो वैश्वानरात्मनश्चक्षुः, तस्येदं नाम, तदुपासनस्येदं फलम्, त्वदुपास्यमानो वायुर्वैश्वानरस्य प्राणः, तस्येदं नाम, तदुपासनस्येदं फलम्, त्वयोपास्यमान आकाशो वैश्वानरात्मनो मध्यकायः, तस्येदं नाम, तदुपासनस्येदं फलम्; त्वयोपास्यमाना आपः वैश्वानरात्मनो नाभिरूपः प्रदेशः, तस्येदं नाम, तदुपासनस्येदं फलम्;

[1] तै सं. २-२-५

त्वयोपास्यमाना पृथिवी वैश्वानरात्मनः पादौ, तस्या इदं नाम, तदुपासनस्येदं फलं' इत्यभिधाय स्वर्लोकादिपृथिव्यन्तावयवकस्य वैश्वानरात्मन उपासनं तत्फलं चोपदिष्टमित्युक्तम् । अत्र वैश्वानरात्मन एकैकावयवोपासनस्य तत्फलस्य चोपदिष्टत्वात्, उत्तरत्रावयवानां समस्ततयोपासनस्य तत्फलकथनस्य चानुवादत्वोपपत्तेः व्यस्तस्यैव उपासनं कर्तव्यम् । अथवा समस्तोपासनस्य तत्फलस्य च श्रवणात् व्यस्तस्य समस्तस्य चोपासनं कर्तव्यमिति ॥

सिद्धान्तः ।

वैश्वानरात्मनो व्यस्तस्य उपासने अङ्गीक्रियमाणे वाक्यभेदप्रसङ्गः । स च उपक्रमोपसंहाराभ्यामेकवाक्यतायाः प्रतीयमानतयाऽनुपपन्नः । ननु भूमविद्याप्रकरणे नामाद्युपासनं तत्फलम् चोपदिश्य भूमोपासने तत्फले चोपदिश्यमाने वाक्यभेदमनादृत्य यथा नामाद्युपासने तत्फले च तात्पर्यमङ्गीक्रियते । तथा प्रकृतेऽपि व्यस्तोपासने समस्तोपासने च तात्पर्यमङ्गीक्रियतामिति चेदुच्यते—तत्र नामाद्युपासनापेक्षया भूमोपासनस्यातिशयितफलवत्त्वं वक्तुं तदुपयोगितया नामाद्युपासनं तत्फलं चाभिहितम् । [1]"एष तु वा अतिवदति यस्सत्येनातिवदति" इति विहितभूमोपासनस्य नामाद्युपासनादतिशयितफलत्वं हि नामाद्युपासनफलादतिशयितफलत्वरूपमिति अतिशयोपपादनाय नामाद्युपासनेषु तत्फलेषु च तात्पर्यमङ्गीक्रियते । प्रकृते तु व्यस्तोपासनानां तत्फलानां च समस्तोपासनातिशयोपपादकत्वाभावात् वाक्यभेदेन तत्र तात्पर्यकल्पनमन्याय्यम् । अतः समस्तोपासनफलस्य एकदेशो व्यस्तोपासने अनुवादः । यथा [2]"वैश्वानरं द्वादशकपालं निर्वपेत्" इति विहितक्रतोः फलस्य [2]"यदष्टाकपालो भवति" इत्यादिनाऽष्टाकपालादिष्वनुवादः, तद्वदित्येव युक्तम् । किञ्च व्यस्तोपासनस्य [3]"मूर्धा ते

[1] छा. ७-१६-१. [2] तै. स. २-२-५. [3] छा. ५-१२-२.

व्यपतिष्यत यन्मां नागमिष्य" इत्यादिना निन्दादर्शनादपि न तत्र तात्पर्यमिति गम्यते । भूमविद्याप्रकरणे नामाद्युपासनानां निन्दाया अदर्शनात् तत्र तात्पर्याङ्गीकारः । अतः समस्तोपासनमेव प्रामाणिकमिति ।

वैश्वानरविद्यायां त्रैलोक्यशरीरमेव यदुपास्यम् ।
न त्वेकैकावयवं तद्वाच्य श्रीनिवासनाम भजे ॥ १३४ ॥

स्पष्टोऽर्थः ॥

वैश्वानरविद्योपास्यस्य श्रीनिवासापरनामधेयनारायणरूपतया वैश्वानराधिकरणे निर्णीतत्वात्, अत्र वैश्वानरविद्यायां यदुपास्यं इत्युक्तम् ॥

९० ॥ इति भूमज्यायस्त्वाधिकरणम् ॥ २३ ॥

---

३७ ॥ शब्दादिभेदाधिकरणम् ॥ २४ ॥

पूर्वाधिकरणे वैश्वानरविद्यायां व्यस्तोपासनानामप्रामाणिकत्वेन वैश्वानरविद्याया नानात्वं निराकृतम् । ब्रह्मविद्यानानात्वव्यवस्थापनाय प्रवृत्तमिदमधिकरणम् ॥

## नाना शब्दादिभेदात् ॥ ३-३-५६ ॥

सद्विद्याऽऽनन्दमयविद्यादिब्रह्मविद्या, नाना-परस्परभिन्नाः; शब्दादिभेदात् चोदनाभेदात्, रूपभेदाच्चेति सूत्रार्थः ॥

पूर्वपक्षः ।

सद्विद्या-आनन्दमयविद्या-उपकोसलविद्यादिपरविद्यासु वेद्यस्य ब्रह्मण एकत्वेन रूपैक्यात्, [1]'विद्यात्,' [2]'उपासीत' इति चोदनाया अप्यैक्यात् सर्वासां ब्रह्मविद्यानामैक्यमिति ॥

---

1 2

सिद्धान्तः ।

तत्तद्विद्याप्रकरणे उपास्यतया श्रुतानामानन्दमयत्वादीनां गुणानां भेदात्, तद्भेदेन तद्विशिष्टविषयस्मृतिसन्ततिवाचिनां [1]"ध्यायीत" [2]"उपासीत" इत्यादिविद्याविधायकशब्दानां च भेदात् 'यजति" ददाति" जुहोति' इत्यादिचोदनाविहितयागदानहोमादीनां कर्मणामिव ब्रह्मविद्यानां परस्परं भेद । यद्यपि दृष्टान्ते यजिधातुर्देवतोद्देशेन द्रव्यत्यागवाची, दाधातुश्च स्वद्रव्यस्य परस्वत्वापादनरूपदानवाची, हुधातुश्च अग्नौ हविःप्रक्षेपवाची, ततश्च तत्तदर्थविधानरूपचोदनानां भेदात् तत्कर्मणां भेदो युक्तः; प्रकृते तु [3]"विद्यात्" [2]"उपासीत" [1]"ध्यायीत" इत्यादीनां शब्दानां सामान्यविशेषन्यायेन निरन्तरस्मृतिसन्ततिरूपध्यानवाचितया अर्थभेदविरहात् चोदनाभेदो न सभवति, तथाऽप्यर्थविशेषानवगाहिन्याः स्मृतेरसंभवात् 'उपासीत' इत्यादिविद्याविशेषप्रकरणश्रुतोपासिधातोस्तत्प्रकरणश्रुततत्तद्गुणविशिष्टब्रह्मविषयकस्मृतिवाचकत्वस्यावश्याङ्गीकार्यत्वात् धात्वर्थभेदोऽस्त्येव इत्यभिप्रायेण चोदनाभेदोक्तिः ॥

यद्यप्युक्तचोदनाभेदस्य रूपभेदप्रयुक्तत्वात् रूपभेद एव पर्यवसानमिति सूत्रे शब्दभेदग्रहणं व्यर्थं, तथापि ब्रह्मविद्यान्तर्गताया न्यासविद्याया अपि ब्रह्मविद्यान्तरात् भेदस्य वक्तव्यतया तद्विधायकशब्दस्य न्यासरूपार्थविशेषवाचित्वेन "ध्यायीत" "उपासीत" इति शब्दात् शब्दान्तरत्वं मुख्यमेव भवतीत्यभिप्रायेण सूत्रे शब्दभेदोपादानमिति द्रष्टव्यम् । अस्मिन् सूत्रे मोक्षफलानां ब्रह्मविद्यानां सर्वासां विधेयत्वलाभेनाविधेयज्ञानस्य मोक्षहेतुतावादिमतं निरस्तमिति बोद्धव्यम् ।

गुणचोदनादिभेदादानन्दमयादयो विद्याः ।
यद्विषया भिद्यन्ते तद्ब्रह्म श्रीनिवासनाम भजे ॥ १२५ ॥ स्पष्टोऽर्थः ॥

दहराधिकरणादिषु दहरविद्यादीनां पूर्वमेव श्रीनिवासविषयकत्वस्य निरूपितत्वात्, अत्र यद्विषया इत्युक्तम् ॥

९१ ॥ इति शब्दादिभेदाधिकरणम् ॥ २८ ॥

---

३२ ॥ विकल्पाधिकरणम् ॥ २५ ॥

पूर्वाधिकरणे ब्रह्मविद्यानां परस्परभेदो व्यवस्थापितः, तासां परस्परभेद-प्रयुक्तसमुच्चयशङ्कानिवारणाय प्रवृत्तमिदमधिकरणम् ॥

## विकल्पोऽविशिष्टफलत्वात् ॥ ३-३-५७ ॥

[काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ५८ ॥]

'ब्रह्मविद्यानां' इत्यध्याहार्यम्। ब्रह्मविद्यानां, विकल्पः- परस्पर-मसमावेशः; एकस्या ब्रह्मविद्याया ब्रह्मविद्यान्तरेण सममेकस्मिन् पुरुषे समावेशो न संभवति इत्यर्थः। तत्र हेतुमाह अविशिष्टफलत्वात् इति। अविशिष्टं-विशेषाभाववत् फलं यासां तासां भावः तत्त्वादिति सूत्रार्थः ॥

### पूर्वपक्षः।

स्वर्गसाधनभूतदर्शपूर्णमासादीनां फलभूयस्त्वाय एकस्मिन् पुरुषे समुच्चयवत्, ब्रह्मविद्यानामपि फलभूयस्त्वाय एकस्मिन् पुरुषे समुच्चय-संभवतीति ॥

### सिद्धान्तः।

ब्रह्मविद्यानां सर्वासां ब्रह्मानुभवप्रतिबन्धककर्मणां निश्शेषक्षयविशिष्ट-ब्रह्मानुभवः फलम्। मुण्डकोपनिषदि [1]"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं

---

[1] मु. ३-१-३.

साम्यमुपैति " इति श्रुतेः । अत्र हि ब्रह्मविद्यानिष्ठस्य ब्रह्मानुभवप्रतिबन्धक-पुण्यपापरूपकर्मणां निश्शेषक्षयं [1]" पुण्यपापे विधूय " इत्यनेन प्रतिपाद्य, [1]" निरञ्जनः परमं साम्यमुपैति " इत्यनेन ब्रह्मणा समं साम्यमाप्तिः श्रूयते। तच्च साम्यं कस्मिन्नंश इति जिज्ञासायां तैत्तिरीयके आनन्दमयविद्याप्रकरणे [2]" सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता " इति ब्रह्मविद्याफल-विशेषश्रवणात् सामान्यविशेषन्यायेन सामान्यतः श्रुतस्य साम्यस्य उक्तविशेष-रूपेण साम्ये पर्यवसानात् सकलकल्याणगुणविशिष्टब्रह्मानुभवविषये साम्य-मिति विज्ञायते। सः–पूर्वप्रकृतो ब्रह्मोपासकः, ब्रह्मणा सह सर्वा न् कामान्–तदीयान् सर्वान् कल्याणगुणान्, अश्नुते–अनुभवति इत्युक्तश्रुत्यर्थः । अत्र 'क्षीरेण सह ओदनं भुङ्क्ते ' इत्यादाविव [2]" ब्रह्मणा सह " इति सहशब्दः भोग्यब्रह्मसाहित्यपरः । कामशब्दश्च 'काम्यन्त इति कामाः ' इति व्युत्पत्त्या भोग्यभूतकल्याणगुणपरः । ततश्च अनया श्रुत्या ब्रह्मविद्यानिष्ठस्य सकल-कल्याणगुणानां ब्रह्मणश्चानुभवप्राप्तिः ब्रह्मविद्याफलमिति लभ्यते । अयं च ब्रह्मानुभवः ब्रह्मणो ब्रह्मविदश्च समान इति [2]" स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य " इति श्रुतिसिद्धम् ; अत्र आनन्दशब्दस्यानु-कूलतया अनुभवरूपानन्दपरत्वात्। इदमेव साम्यं [1]" परमं साम्यमुपैति " इति श्रुतौ साम्यशब्देन विवक्षितमिति निश्चीयते ॥

इत्थं च ब्रह्मानुभवप्रतिबन्धकनिश्शेषकर्मक्षयविशिष्टसकलकल्याण-गुणविशिष्टब्रह्मानुभवो ब्रह्मविद्याफलमिति [1]"तदा विद्वान् पुण्यपापे विधूय " इत्यादिश्रुतिसिद्धमिति सिद्धम् ॥

इत्थं च यस्या ब्रह्मविद्यायाः प्रकरणे ब्रह्मप्राप्तिमात्रं श्रूयते, तत्र ब्रह्मानुभवप्रतिबन्धककर्मणां निश्शेषक्षय, यत्र च कर्मणां निश्शेषक्षयरूप-प्रतिबन्धकनिवृत्तिमात्रं श्रूयते, तत्रोक्तविधब्रह्मानुभवश्चार्थसिद्धः । अयमेव

[1] मु. ३-१-३. [2] तै. आन. १.

प्रतिबन्धककर्मनिवृत्तिविशिष्टब्रह्मानुभव, अध्यात्मशास्त्रेषु मोक्षपुरुषार्थ इति उच्यते । इत्थ चेककया ब्रह्मविद्ययैव उक्तविधमोक्षपुरुषार्थसभवे प्रतिबन्धकनिवृत्त्यर्थं वा ब्रह्मानुभवसिद्ध्यर्थं वा ब्रह्मविद्यान्तरस्यानपेक्षितत्वात् ब्रह्म विद्यान्तरेण सम समुच्चयासभवात् ब्रह्मविद्याना परस्परासमावेशरूपो विकल्प एव । दर्शपूर्णमासादिकर्मणा तु तत्फले स्वर्गे देशकालपरिमाणेषु तारतम्यस्य श्रुतिसिद्धतया तेषा फलभूयस्त्वापेक्षया समुच्चयोऽपि समर्वात । ब्रह्मप्राप्तिव्यतिरिक्तफलाना विद्याना तु परिमितफलसाधनतया फलभूयस्त्वापेक्षाया समुच्चयोऽपि सभवति ॥

एकफलसाधनत्वात् यद्विद्यानां समस्तानाम् ।
निर्णीयते विकल्पस्तद्ब्रह्म श्रीनिवासनाम भजे ॥ १३६ ॥

सूत्रव्याख्यानेन व्याख्यातमिदम् ॥

सर्वासा ब्रह्मविद्याना श्रीनिवासविषयकताया पूर्वमेव निर्णीतत्वात् यद्विद्याना इत्युक्तम् ॥

१०७ ॥ इति विकल्पाधिकरणम् ॥ २५ ॥

---

४० ॥ यथाश्रयभावाधिकरणम् ॥ २६ ॥

पूर्वाधिकरणे काम्यफलाना विद्याना यथाकाम विकल्प समुच्चयो वा इत्यनियम उक्त । तद्वत् उद्गीथोपासनस्यापि कामनायामुपादान, तद्विरहे त्वनुपादान, अथवा उपादाननियम एवेति शङ्कावारणाय प्रवृत्तमिदमधिकरणम् ॥

यद्यपि तन्निर्धारणानियमाधिकरणे उद्गीथोपासनस्यानियम सिद्धान्तित, तथाऽप्यस्मिन्नधिकरणे व्यवस्थापयिष्यमाणमुद्गीथोपासनस्य पुरुषार्थत्व मुपजीव्य, तत्रानियम सिद्धान्तित । तस्य पुरुषार्थत्वव्यवस्थापनाय एत दधिकरणारम्भ इति न तेनाधिकरणेन गतार्थता ॥

# अङ्गेषु यथाश्रयभावः ॥ ३-३-५९ ॥

[शिष्टेश्च ॥ ६० ॥
समाहारात् ॥ ६१ ॥
गुणसाधारण्यश्रुतेश्च ॥ ६२ ॥]

एतानि पूर्वपक्षसूत्राणि । अङ्गेषु-क्रत्वङ्गेषु उद्गीथादिषु आश्रितानि यान्युपासनानि, तद्विषयाण्युपासनानि इत्यर्थः । तेषां तद्विषयोद्गीथवत्क्रतुष्वन्तर्भावः; क्रत्वर्थतया क्रत्वङ्गत्वमिति यावत् इत्युक्तसूत्रार्थः ॥

पूर्वपक्षसूत्राणामयं भावः—क्रत्वर्थत्वपुरुषार्थत्वसंशयविषयस्य यस्य स्वविधिवाक्ये फलसंबन्धो न श्रूयते, अपि तु वाक्यान्तरे, तत्र फलश्रुतेः अर्थवादतया तस्य क्रतुफलात् पृथक्फलसाधनत्वाभावेन क्रत्वर्थत्वमिति व्याप्तिः पर्णतादौ दृष्टा । [1]"यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इत्यत्र जुहूद्देशेन पर्णताविधायके [1]"यस्य पर्णमयी जुहूर्भवति" इति वाक्ये फलसंबन्धाश्रवणेन [1]"न स पापं श्लोकं शृणोति" इति वाक्यान्तर एव अपापश्लोकश्रवणरूपफलसंबन्धश्रवणेन फलश्रुतेरर्थवादत्वस्य, पर्णतायाः क्रतुफलात् स्वर्गात् पृथक्फलसाधनत्वेन अव्यभिचरितक्रतुसंबन्धवत् जुहूद्वारा क्रत्वर्थत्वस्य च दर्शनात् । यस्य तु स्ववाक्ये फलसंबन्धः श्रुत, तस्य क्रतुफलात् पृथक्फलसाधनत्वाभावेन पुरुषार्थत्वमिति व्याप्तिः गोदोहनादौ दृष्टा । गोदोहनं नाम कांस्यपात्रम् । [2]"गोदोहनेन पशुकामस्य प्रणयेत्" इत्यस्मिन् वाक्ये अपां प्रणयनोद्देशेन करणतया गोदोहनविधायके 'पशुकामस्य' इत्यनेन पशुरूपफलसंबन्धश्रवणेन गोदोहनस्य क्रतुफलात् पृथक्फलसाधनतया पुरुषार्थताया दर्शनात् । ततश्च प्रकृते

[1]"ओमित्येतदक्षरमुद्गीथमुपासीत" इत्युद्गीथोपासनविधिवाक्ये फलसंबन्ध श्रवणात् [2]"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति वाक्यान्तरे वीर्यवत्तरत्वरूपफलसंबन्धश्रुतेरर्थवादत्वात् उद्गीथोपासनस क्रतुफलात् पृथक्फलसाधनत्वाभावात् उद्गीथद्वारा क्रत्वर्थत्वमेवेति क्रतुष उद्गीथोपासनस्य नियमः ॥

[1]"ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यत्र द्वितीयाश्रुत्या उपासनस उद्गीथशेषत्वबोधनात् उद्गीथद्वारा क्रत्वङ्गत्वलाभादपि क्रत्वर्थत्वं निश्चीयते। यथा व्रीहीन् प्रोक्षतीत्यत्र प्रोक्षणस्य व्रीहिशेषतया व्रीहिद्वारा क्रत्वर्थत्वं तद्वत्। अतोऽपि क्रतुषूद्गीथोपासनं नियतम् ॥

एवं [3]"य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ" इत्यत्र उद्गात्रा प्रयुज्यमानस्य उद्गीथावयवस्य प्रणवस्य होत्रा शंसनीयानामृचामन्ते प्रयुज्यमानस्य ओंकारस्य च ऐक्यवेदनमुद्गात्रा होत्रा च कर्तव्यं इति विधाय उद्गात्रा उक्तवेदनाकरणे [4]"होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति" इत्यनेन दोषपरिहारप्रकारोऽभिधीयते। अपि दुरुद्गीथं—वेदनहीनमप्युद्गीथं; होतृषदनात्—होतृकर्तृकोद्गीथप्रणवैक्यज्ञानात्, अनुसमाहरति—समादधाति, अदुष्टं करोति इत्युक्तश्रुत्यर्थः। अत्र उद्गातुरुक्तैक्यज्ञानाभावेन प्राप्तवैगुण्यस्य होतृकर्तृकतदैक्यज्ञानेन परिहाराभिधानात्। उद्गातुरुक्तवेदनस्य आवश्यकतालाभादपि क्रतुषु उद्गीथोपासनस्य नियमसिद्धिः ॥

एवं [5]"तेनेयं त्रयीविद्या वर्तते ओमित्याश्रावयति ओमिति शंसति ओमित्युद्गायति" इत्युत्तरवाक्ये 'तेन' इति प्रकृतपरामर्शिना तच्छब्देन उपासनविषयत्वविशिष्टप्रणवस्य परामर्शादपि उपासनस्यावश्यकतालाभात् क्रतुषु उद्गीथोपासनस्य नियमसिद्धिरिति ॥

न वा तत्सहभावाश्रुतेः ॥ ३-३-६३ ॥

[दर्शनाच्च ॥ ६४ ॥]

इदं सिद्धान्तसूत्रम् । तत्सहभावाश्रुतेः-उपासनस्य नियतसहभावाश्रवणात्, अङ्गत्वाश्रवणादिति यावत् । न वा-उद्गीथोपासनस्य क्रतुषु उपादाननियमो नास्तीति सूत्रार्थः ॥

अयं भावः —फलसंबन्धस्य विधिवाक्ये श्रवणं वाक्यान्तरे श्रवणं वा न पुरुषार्थत्वक्रत्वर्थत्वयोः प्रयोजकम् । अपि तु फलतत्साधनत्वयोः द्वयोरपि विलम्बितप्रतीतिकत्वं क्रत्वर्थत्वे प्रयोजकम् । तयोः, अन्यतरस्य वा अविलम्बितप्रतीतिकत्वं पुरुषार्थत्वे प्रयोजकम् । पर्णताविधिवाक्ये फलस्य वाक्यान्तरस्थत्वेन प्रतीतिः विलम्बिता । तृतीयाविभक्त्यश्रवणेन साधनत्वप्रतीतिरपि विलम्बिता । अतः पर्णतायाः क्रत्वर्थत्वम् ॥

गोदोहनवाक्ये तु फलस्य स्ववाक्ये श्रवणेन तत्प्रतीतिरविलम्बिता । गोदोहनस्य क्रियारूपत्वाभावेन फलनिष्पादकत्वाभावात् अपां प्रणयनस्य द्वारतायाः कल्पनीयतया फलसाधनत्वप्रतीतिर्विलम्बिता । अतः अन्यतरप्रतीतेरविलम्बितत्वेन तत्र फलश्रुतेरर्थवादत्वाभावात् क्रतुफलात् पृथक्फलसाधनत्वेन गोदोहनस्य पुरुषार्थत्वम् ॥

प्रकृते तु [1] "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इत्यत्र 'विद्यया' इति तृतीयया विद्यायाः फलसाधनत्वप्रतीतिरविलम्बिता, तस्याः क्रियात्वेन साक्षात् फलसाधनत्वसंभवात् । फलस्य वीर्यवत्तरत्वस्य वाक्यान्तरे श्रवणेन तत्प्रतीतिर्विलम्बिता । अतोऽन्यतरप्रतीतेरविलम्बितत्वसाम्यात् फलश्रुतेरर्थवादत्वाभावात् क्रतुफलात् पृथक्फलसाधनत्वेन गोदोहनादिवत् उद्गीथोपासनस्य पुरुषार्थत्वमेव ॥

[1] छा. १-१-१०.

ततश्च [1]"यदेव विद्यया करोति" इति श्रुताया विद्याया विषयजिज्ञासायां [2]"ओमित्येतदक्षरमुद्गीथमुपासीत" इति वाक्यमुद्गीथरूपविषयसमर्पकमेव, न तूपासनस्य उद्गीथाङ्गताप्रतिपादकम्; अङ्गताविरोधिपृथक्फलसाधनत्वश्रवणात्। अत उद्गीथोपासनस्य न क्रतुषु उपादाननियमः॥

एवं [3]"एवं विद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति" इत्यत्र ब्रह्माख्यऋत्विक्कर्तृकप्रायश्चित्तविशेषवेदनेन उद्गातृप्रभृतीनामृत्विजां रक्षणोक्त्याऽपि उद्गीथोपासनस्यानियमः सिद्धः। एवंवित् — "यद्यृक्तो रिष्येत् भूः स्वाहेति गार्हपत्ये जुहुयात्" इत्याद्युक्तदोषपरिहारप्रकारवित् ब्रह्मा, यज्ञादीन् रक्षति इत्युक्तश्रुत्यर्थः। अत्र उच्यमानं यज्ञादीनां रक्षणं क्रतुफलाप्रतिबन्धरूपम्। एवंभूतरक्षणस्य उद्गीथवेदनमन्तरेण ब्रह्माख्यऋत्विक्कर्तृकवेदनेनैव सिद्धयुक्त्या उद्गीथोपासनस्यानियतत्वमनया श्रुत्या दर्शितं भवति॥

[4]"होतृषदनाद्धैवापि" इत्यादिश्रुत्युक्तदोषपरिहारस्तु उद्गीथोपासनसहितस्य क्रतोरनुष्ठानं सङ्कल्प्य आरब्धक्रतुविषयः इति, [5]"तेनेयं त्रयीविद्या वर्तते" इत्यादौ तच्छब्दः पूर्वप्रकृतोद्गीथमात्रपरामर्शीति च [6]"एवं विद्ध वै ब्रह्म" इत्यादिश्रुत्युक्तरक्षणेनैव ज्ञापितं भवति। अतो न तद्विरोधः। तदेवमुद्गीथोपासनस्य क्रतुष्वनियम सिद्ध इति॥

पुरुषार्थत्वावगतेर्नोद्गीथोपासनस्य नियमोऽस्ति।
यद्यजनरूपकर्मसु तद्ब्रह्म श्रीनिवासनाम भजे॥ १२७॥

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य वत्सप्रपूर्णस्य
श्रीदेशिकाचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालायां
तृतीयाध्यायस्य तृतीयः पादः।

[1] छा. १-१-१०. [2] छा. १-१-१. [3] छा. ४-१७-१०. [4] छा. १-५-५. [5] छा. १-१-९.

अर्थः । [1]"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति श्रुतौ क्रतुफलात् स्वर्गादुद्गीथोपासनस्य क्रतुवीर्यवत्तरत्वरूपपृथक्फलसाधनत्वप्रतीतेस्तस्य पुरुषार्थत्वावगमेन न क्रतुषु उपादाननियम इति तदुपासनसहिता रहिता वा क्रतवः सर्वेऽपि यस्य श्रीनिवासस्य आराधनभूताः तद्ब्रह्म इति । [2]"इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः" इत्यादिषु सर्वेषां क्रतूनां श्रीनिवासाराधनरूपत्वं सिद्धमिति भावः ॥

एवमस्मिन् पादे ब्रह्मविद्यासु एकैकस्या अनुष्ठानेऽपि मोक्षपुरुषार्थसिद्धचा एकां विद्यामनुतिष्ठता न विद्यान्तरमनुष्ठेयम् । सर्वासु ब्रह्मविद्यासु भगवान् श्रीनिवास उपास्यः । सत्यत्वं, ज्ञानत्वं, अनन्तत्वं, आनन्दत्वं, अमलत्वं इत्येते सर्वासु उपास्यगुणाः । इतरे सत्यकामत्वादयो यासु यासु विद्यासु श्रुताः, तासु तास्वेव उपास्याः । नानाशाखाविहिता अक्षरविद्या-दहरविद्या-वैश्वानरविद्याद्या अभिन्नाः । अतः तासु क्वचिदश्रुताः, अन्यत्र श्रुता गुणाः अनुसन्धानाय स्वीकार्याः । सर्वेषां ब्रह्मविदां शरीरावसाने पुण्यपापरूपकर्मणां निश्शेषक्षयो भवति । सर्वेषां तेषामर्चिरादिगतिरविशिष्टा इत्यादिकमवश्यज्ञातव्यं निरूपितम् । उद्गीथाद्युपासनानि च ब्रह्मविद्याङ्गभूतानामनभिसंहितफलानां क्रतूनां वीर्यवत्तरत्वापादनद्वारा ब्रह्मविद्योपकारकाणि इति च निरूपितम् । तेन उद्गीथोपासनानां तत्तत्क्रतुस्वरूपावगमसापेक्षतया ब्रह्मविचाररूपस्यास्य शास्त्रस्य कर्मविचारसापेक्षत्वं दर्शितम्॥ १०८ ॥ इति यथाश्रयभावाधिकरणम् ॥ २६ ॥

इति श्रीमत्कविकथककेसरिणः सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालाप्रकाशे तृतीयाध्यायस्य तृतीयः पादः ॥

[1] छा. १-१-१०.　[2] तै. ना. २.

## तृतीयाध्यायस्य चतुर्थः पादः ।

### ४१ ॥ पुरुषार्थाधिकरणम् ॥ १ ॥

तत्राऽऽदौ भगवतः श्रीनिवासस्य प्रथमाध्याये उत्तरोत्तरबलीयसीभिर्युक्तिभिः प्रत्यवस्थानेन पूर्वपक्षिभिर्निराचिकीर्षितस्य त्रिविधचेतनाचेतनवैलक्षण्यस्य तदुक्तयुक्तिजालतूलनिराकरणेन व्यवस्थापितत्वेऽपि ब्रह्मविद्याङ्गेषु निरूपयिष्यमाणेष्ववसरलाभेन पूर्वोक्तसर्वपूर्वपक्षयुक्त्यपेक्षया बलीयस्या युक्त्या प्रत्यवस्थानेन परनिराचिकीर्षितं भगवतश्चेतनाचेतनवैलक्षण्यं स्थूणानिखननन्यायेन दृढीकर्तुं पूर्वपक्षं.त्थापनाय सिद्धान्तमुपक्षिपति ॥

## पुरुषार्थोऽतश्शब्दादिति बादरायणः ॥ ३-४-१ ॥

अत्र 'अतः'शब्देन पूर्वपादप्रस्तुता ब्रह्मविद्या परामृश्यते । ततश्च ब्रह्मविद्यातः, पुरुषार्थः अपवर्गपुरुषार्थः सिद्ध्यति, "ब्रह्मविदाप्नोति परम्" इत्यादिश्रुते. इति भगवान् बादरायणो मन्यत इति सूत्रार्थः ॥

पूर्वस्मिन् पादे अङ्ग्यनुष्ठानाय वक्तव्यं सर्वं निरूपितं; अङ्गानुष्ठानाय वक्तव्यनिरूपणार्थं, कर्मणां फलद्वारा त्याज्यतया वैराग्यपादे निरूपितत्वेन तेषां स्वरूपेण उपादेयताज्ञापनार्थं च चतुर्थः पाद आरभ्यते। एवं प्रथमचतुर्थपादाभ्यां कर्मणां फलकामनयाऽनुष्ठाने बन्धनर्थावहत्व, ब्रह्मविद्याङ्गतयाऽनुष्ठानेऽभ्युदयावहत्वं च दर्शितं भवति । एवं च सति कर्मणां फलद्वारा हानार्थं, स्वरूपेणोपादानार्थं च तेषां स्वरूपावगमाय कर्मविचारस्यापेक्षितत्वसिद्ध्या तस्य पूर्ववृत्तत्वं शास्त्रारम्भे [1]"अथातो ब्रह्मजिज्ञासा" इति अथशब्दविवक्षितमुपपादितं भवति । सूत्रस्यायं भाव.—

[1] १-१-१

[1]"ब्रह्मविदाप्नोति परं," [2]"तमेवं विद्वानमृत इह भवति" इत्यादिषु भगवतः श्रीनिवासापरनामधेयस्य ब्रह्मणः उपासनेन मोक्षपुरुषार्थप्राप्तिप्रतिपादनात् ब्रह्मविद्यात एव मोक्षपुरुषार्थप्राप्तिः, न कर्मभिरिति भगवद्बादरायणमतमिति ॥

पूर्वपक्षमुत्थापयति—

शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ ३-४-२ ॥

[आचारदर्शनात् ॥ ३ ॥
तच्छ्रुतेः ॥ ४ ॥
समन्वारंभणात् ॥ ५ ॥
तद्वतो विधानात् ॥ ६ ॥
नियमात् ॥ ७ ॥] एतानि पूर्वपक्षसूत्राणि ॥

[1]"ब्रह्मविदाप्नोति परं" इत्यादिषु श्रुतस्य ब्रह्मशब्दवाच्यस्य कर्मशेषत्वात्, तेषु वाक्येषु फलश्रुतिः अर्थवादः—प्रशंसामात्रम्। अन्येषु-द्रव्यगुणादिषु यथा फलश्रुतिरर्थवादः, तद्वदिति जैमिनिः आचार्यो मन्यत इत्युक्तसूत्रार्थः।

पूर्वपक्षसूत्राणामयं भावः—[3]"आत्मा वाऽरे द्रष्टव्य" इत्यादिषु ज्ञातव्यतया श्रुत आत्मा यज्ञादिक्रियाकर्तृजीवादनतिरिक्तः, स एव ब्रह्मशब्देनोच्यते, [4]"तत्त्वमसि," [5]"अयमात्मा ब्रह्म" इत्यादिषु जीवब्रह्मणोरैक्यप्रतिपादनात्। यद्यपि [4]"तत्त्वमसि" इत्यादिसामानाधिकरण्यं न जीवब्रह्मणोः स्वरूपैक्यपरं, अपि तु शरीरात्मभावपरं इति [6]"अवस्थितेरिति काशकृत्स्नः" इत्यादिपूपपादितं, तथाऽपि वक्ष्यमाणैर्हेतुभिर्विद्यायाः कर्मशेषत्वावगमात्

[1] तै. आ. १. [2] पु. सूक्तं. [3] बृ. ४-४-५. [4] छा. ६-३-१. [5] बृ. ६-४-५. [6] १-४-२२.

तदन्यथानुपपत्त्या वेदितव्यस्याऽऽत्मनः कर्मकर्तुर्जीवादनतिरिक्तत्वमवगमनीयम्। तथा हि—वेदान्तेषु केश्चित् श्रुतिलिङ्गादिभिः विद्यायाः कर्मप्राधान्यसूचनात् तस्याः कर्माङ्गत्वं निश्चीयते। अतः [1]"आत्मा वाऽरे द्रष्टव्यः," [2]"तमेवैकं जानथाऽऽत्मानं" इत्याद्याः श्रुतयः क्रतुषु कर्तुर्जीवात्मनो यथावस्थितस्वरूपस्य वेदितव्यत्वोपदेशपराः। तद्याथात्म्यवेदनं च क्रतुकर्तुस्तस्य जीवात्मनः संस्काररूपं सत् तद्द्वारा क्रत्वङ्गम्। यथा "व्रीहीन् प्रोक्षति" इति विहितं प्रोक्षणमव्यभिचारितक्रतुसंबन्धिव्रीहिसंस्काररूपं सत् व्रीहिद्वारा क्रत्वङ्गं, तद्वदिति निश्चीयते। कर्मसु कर्तुर्जीवात्मनो नित्यत्वादिरूपयाथात्म्यवेदनेन संस्कार्यत्वं चावश्यापेक्षितम्। कर्तुरात्मनो नित्यत्वादिज्ञानेन विना देहान्तरानुभाव्यस्वर्गादिफलसाधनेषु क्रतुषु प्रवृत्त्यनुपपत्तेः। अतः [1]"आत्मा वाऽरे द्रष्टव्य" इत्याद्याः श्रुतयः कर्तुर्जीवात्मनो नित्यत्वादिरूपयाथात्म्यस्य वेदितव्यत्वोपदेशपरा एव। कर्मसु कर्ता जीव एव [3]"ब्रह्मविदाप्नोति" इत्यादौ ब्रह्मशब्देनोच्यत इति [4]"तत्त्वमसि" इत्यादिश्रुतिभिरवगम्यते। एतेन [5]"नेतरोऽनुपपत्तेः," [6]"अधिकं तु भेदनिर्देशात्" इत्यादिषु ब्रह्मणो जीवादर्थान्तरत्वव्यवस्थापनं, [2]"अवस्थितेरिति काशकृत्स्न" इत्यादिषु [4]"तत्त्वमसि" इत्यादिसामानाधिकरण्यस्य अन्यथोपपादनं च सर्वं निरस्तम्। [3]"ब्रह्मविदाप्नोति परं" इत्यादिषूपदिष्टस्य ब्रह्मवेदनस्योक्तरीत्या कर्तृद्वारा क्रतुशेषताया अवश्याभ्युपगन्तव्यत्वात्। एवं च ब्रह्मवेदनस्य कर्माङ्गत्वे क्रत्वङ्गस्य पर्णतादेरिव ब्रह्मवेदनस्य फलश्रुतिरर्थवादमात्रं, न तत्फले श्रुतेस्तात्पर्यमिति। अत्र 'अन्येषु' इत्यनेन द्रव्यगुणकर्माणि दृष्टान्ततया विवक्षितानि॥

---

[1] बृ. ४-४-५. [2] १-४-२२. [3] तै. आ. १. [4] छा. ६-३-१.
[5] १-१-१७. [6] २-१-२२.

[1]"यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इति पर्णतादिद्रव्येषु [2]"यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते" इत्यञ्जनादिसंस्कारेषु [1]"यत्प्रयाजानूयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते" इत्यादिषु कर्मसु फलश्रुतिरर्थवाद इति पूर्वमीमांसायां निर्णीतम् ॥

के ते हेतवः यैर्विद्यायाः कर्मशेषत्वमवगम्यत इति चेत्, उच्यते—ब्रह्मवित्तमानां केकयजनककेशिध्वजादीनां बहुशो यज्ञाचरणमेव श्रूयते। तत्र विद्याकर्मणोरुभयोः प्रसक्तौ कर्मणः प्राधान्येनानुष्ठानं तस्याङ्गित्वं सूचयति ॥

[3]"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति तृतीयाश्रुत्या विद्यायाः कर्मसु विनियोगो दृश्यते। श्रुतेः प्रकरणात् बलीयस्त्वात् 'विद्यया' इति तृतीयाश्रुतिर्विद्यासामान्यस्य कर्माङ्गत्वं दर्शयति। अतो विद्यायाः कर्मसु विनियोगदर्शनात् कर्मणोऽङ्गित्वं लभ्यते। [3]"तं विद्याकर्मणी समन्वारभेते" इति परलोकं प्रयान्तं प्रति विद्याकर्मणोरनुवर्तमानत्वश्रवणात् तयोः संबन्धः प्रतीयते। स च संबन्धोऽङ्गाङ्गिभावो वक्तव्यः। तत्र ब्रह्मविदां प्राधान्येन कर्मानुष्ठानदर्शनेन कर्मणोऽङ्गित्वमवगम्यते। [4]"आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः" इत्यादि श्रूयते। आचार्याद्वेदमधीत्य—गुरोर्नियमनमनतिक्रम्य, गुरोः कर्म-गुरवे कर्तव्यं गुरुदक्षिणादिकं अतिशेषेण-निश्शेषं अभिसमावृत्य-निर्वर्त्य, कुटुम्बे-गार्हस्थ्याश्रमकर्माणि स्थित इत्युक्तश्रुत्यर्थः। अत्र 'अधीत्य' इति ल्यपा अध्ययनस्य गृहस्थधर्मे विनियोगः प्रतीयते। अध्ययनं चार्थज्ञानपर्यन्तमिति पूर्वमीमांसायां स्थापितम्। अतोऽर्थज्ञानस्य कर्मसु विनियोगदर्शनात् विद्यायाः कर्माङ्गत्वं लभ्यते।

२ [1] छा. १-१-१०. [3] बृ. ६-४-२. [4] छा. ८-१५-१.

[1]"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इति ईशावास्योपनिषदि श्रूयते। शतं समाः शतवर्षाणि, जिजीविषेत्–जीवितुमिच्छेत् चेत्, कर्माणि कुर्वन्नेव जिजीविषेत् इति उक्तश्रुत्यर्थः। अत्र विदुषो यावदायुष कर्मकरणविधानात् कर्मणः प्राधान्यं, मध्ये प्राप्तस्य सर्वस्य तदङ्गत्वलक्षणमप्राधान्यं च लभ्यते। अतोऽपि विद्या कर्माङ्गम्। एतैर्हेतुभिः कर्माङ्गत्वमवगम्यत इति॥

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्॥ ३-४-८॥

[तुल्यं तु दर्शनम्॥ ९॥

असार्वत्रिकी॥ १०॥

विभागः शतवत्॥ ११॥

अध्ययनमात्रवतः॥ १२॥

नाविशेषात्॥ १३॥

स्तुतयेऽनुमतिर्वा॥ १४॥

कामकारेण चैके॥ १५॥

उपमर्दं च॥ १६॥

ऊर्ध्वरेतस्सु च शब्दे हि॥ १७॥

परामर्शं जैमिनिरचोदनाचापवदति हि॥ १८॥

अनुष्ठेयं बादरायणस्साम्यश्रुतेः॥ १९॥

विधिर्वा धारणवत्॥ २०॥]

तुशब्दः पक्षव्यावर्तकः, अधिकोपदेशात्–जीवादर्थान्तरस्य ब्रह्मणो ब्रह्मविद्यासु वेद्यत्वोपदेशात्, विद्यात एव पुरुषार्थ इति भगवद्बादरायणमतम्। उपासनविधिवाक्येषु जीवादर्थान्तरस्य उपास्यत्वविधानदर्शनात् इत्युक्तसूत्रार्थः।

[1] ईशा. २

सिद्धान्तसूत्राणामयं भावः—'व्रीहीन् प्रोक्षति' इत्यादौ विहितस्य प्रोक्षणस्य व्रीहिद्वारा क्रत्वङ्गत्ववत् [1]"ब्रह्मविदाप्नोति परं" इत्यादौ विहितस्य वेदनस्य प्रत्यगात्मद्वारा क्रत्वङ्गत्वं नोपपद्यते। प्रत्यगात्मतो विलक्षणस्यैव तत्र वेद्यत्वावगमेन प्रत्यगात्मनस्तत्रोपस्थितेरेवासंभवात्; उपस्थितत्वसंभवे हि तस्य वेदनं प्रति द्वारत्वसंभवः। तत्र हि वेद्यतया प्रक्रान्तं ब्रह्म वाङ्मनसापरिच्छेद्यानन्दवत्, संकल्पमात्रेण जगत्स्रष्टृ, वायुसूर्याग्नीन्द्रादीनां भीषयितृ, सर्वेषां स्वस्वेष्टप्रदानेनाऽऽनन्दयितृ, इत्येवमादिगुणविशिष्टं प्रतिपाद्यते। न हीदं गुणजातं कर्मसु कर्तुर्जीवात्मनो याथात्म्यमिति संभावनागन्धोऽपि संभवति। अपि च कर्मसु कर्ता जीवः स्वेनाप्राप्तस्य तत्तत्क्रतुफलस्य स्वर्गादेरर्थी; इदं तु ब्रह्म स्वतःसिद्धनिरतिशयानन्दवत्, इति स्वर्गसुखार्थिनो नात्र प्रत्यभिज्ञालेशस्याप्यवकाशः। अतोऽत्र विहितवेदनस्य क्रतुशेषतां प्रत्यनुपस्थितस्य तस्य कथं द्वारतासंभवः? किञ्च कर्मसु कर्तुर्जीवस्य देहान्तरानुभाव्यस्वर्गसुखानुभवहेतुभूतक्रतुषु प्रवृत्तिं प्रति देहातिरिक्तत्वज्ञानमात्रस्यापेक्षिततयाऽत्र विधीयमानस्य प्रागुक्तगुणविशिष्टविषयकवेदनस्य क्रतुषु प्रवृत्तिं प्रत्यनपेक्षितस्य क्रतुं प्रति शेषत्वं शङ्कितुमपि न शक्यम्। अतोऽत्र विहितवेदनस्य फलश्रवणं नार्थवादः, अतो विद्यात एव पुरुषार्थः॥

यत्तु ब्रह्मविदां कर्मानुष्ठानदर्शनं कर्मणां प्राधान्ये लिङ्गमिति, तदनुपपन्नम्। ब्रह्मविदां कर्मत्यागस्यापि [2]"किमर्था वयमध्येष्यामहे, किमर्था वयं यक्ष्यामहे" इत्यादिश्रुतिषु दर्शनेन कर्मणोऽङ्गित्वे, कथञ्चिदपि तत्त्यागानुपपत्तेः। अस्मत्पक्षे ब्रह्मविदामभिसंहितफलानां कर्मणां त्यागः, अनभिसंहितफलानां तेषामनुष्ठानमिति त्यागोऽनुष्ठानमुभयमप्युपपद्यते। भवत्पक्षे

[1] तै. आ. ९. [2] ?.

तु ब्रह्मविद्याफलस्यापवर्गस्यानभ्युपगमेन त्रिवर्गैकफलानामङ्गिनां कर्मणामनुष्ठानमननुष्ठानं च व्याहतं स्यात् ॥

यदप्युक्तं [1]"यदेव विद्यया करोति" इति प्रकरणाद्बलीयस्या विद्याश्रुत्या विद्यायाः क्रत्वर्थत्वं सिद्ध्यतीति, तदपि न; "यदेव" इति यच्छब्दस्यानुवादरूपतया प्रापकप्रमाणाकांक्षायां [2]"उद्गीथमुपासीत" इति प्रकृतोद्गीथोपासनेन क्रियमाणस्य कर्मणः परामर्शलाभात् विद्याशब्दस्य प्रकृतोद्गीथविद्यामात्रविषयतया सकोचावश्यंभावात् ॥

यदपि [3]"तं विद्या कर्मणी समन्वारभेते" इति परलोकं यान्तं विद्वांसमनुवर्तमानयोः विद्याकर्मणोः साहित्यप्रतीत्या विद्यायाः कर्माङ्गत्वं प्रतीयत इति, तदपि न; विद्याकर्मणोः स्वस्वफलप्रदानायानुवृत्तिपरतयाऽप्युपपत्त्या अङ्गाङ्गिभावासिद्धेः ॥

[4]"आचार्यकुलाद्वेदमधीत्य" इत्याद्युदाहृतश्रुतौ अध्ययनमात्रवत् कर्मविधानेन अध्ययनस्य कर्माङ्गत्वप्रतीतावपि विद्यायाः कर्माङ्गत्वाप्रतीतेः। अध्ययनविधेरर्थज्ञानपर्यन्तत्वाभावात् अर्थज्ञानपर्यन्तत्वाभ्युपगमेऽपि वेदान्तवाक्यजन्यशाब्दज्ञानादन्यस्य तन्मूलकस्मृतिसन्ततिरूपस्योपासनस्यैव वेदान्तेषु मोक्षसाधनताविधानेन तस्य कर्माङ्गत्वासिद्धेः ॥

[5]"कुर्वन्नेवेह कर्माणि" इति श्रुतेः विद्याङ्गभूतकर्मणो यावज्जीवमपरित्याज्यतापरतयाऽप्युपपत्त्या स्वतन्त्रकर्मपरताया मानाभावात्, विदुषा यथेष्टं कर्मकरणेऽपि कर्मफलं तस्मिन् न सबध्यत इति पूर्वमन्त्रप्रकृतब्रह्मविद्यामाहात्म्यप्रतिपादनपरत्वेन तस्याः श्रुतेः विद्यायाः निवर्त्य यावज्जीवं विदुषः कर्मानुष्ठाने प्रवर्तनपरत्वाभावाच्च नोक्तश्रुत्या विद्यायाः कर्माङ्गत्वलाभः। विषयविरक्तस्य विद्यानिष्ठस्य गृहस्थाश्रमधर्मत्यागवचनाच्च न

१ [illegible] २ [illegible] ३ [illegible] ४ [illegible] ५ ईशा २

विद्या कर्माङ्गम्। उच्यते हि [1]"एतद्ध स्म वै विद्वांस. प्रजा न कामयन्ते, किं प्रजया करिष्यामह इति" इति विषयविरक्तस्य प्रजाशब्दनिर्दिष्ट-गृहस्थाश्रमत्याग, तेन तत्कर्मत्यागसिद्ध्या विद्यायाः कर्माङ्गत्वे अङ्गिभूतो कर्मत्यागो नोपपद्यते। अपि च [2]"क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति ब्रह्मविद्यया दर्शनसमानाकारया कर्मणा नाश' श्रूयते। तच्च विद्याया कर्माङ्गत्वे अङ्गेनाङ्गिन स्वरूपनाशायोगात् नोपपद्यते। अतो विद्या न कर्माङ्गम्॥

अपि च [3]"त्रयो धर्मस्कन्धा यज्ञोऽध्ययन दानमिति प्रथम, तप एव द्वितीय, ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयेत्. सर्व एते पुण्यलोका भवन्ति, ब्रह्मसंस्थोऽमृतत्वमेति" इति श्रूयते। अयमर्थ—धर्मस्कन्धा -धर्माश्रया. आश्रमा इत्यर्थ। ते त्रय, यज्ञाध्ययनदानादिधर्माश्रयो गृहस्थाश्रम प्रथम। 'तप एव द्वितीय' इति। अत्र तपश्शब्देन कायक्लेशप्रधान वानप्रस्थसन्यासाश्रमद्वय गृह्यते, स द्वितीयाश्रम इत्यर्थ। 'ब्रह्मचार्याचार्यकुलवासी तृतीय' इति। ब्रह्मचर्याश्रमस्तृतीय इत्यर्थ। ब्रह्मचर्य—वेदाध्ययनाय गुरुकुलवास। 'सर्व एते पुण्यलोका भवन्ति' इति। एव गार्हस्थ्यवानप्रस्थसन्यासब्रह्मचर्य-भेदभिन्नेषु चतुर्ष्वाश्रमेषु केवलाश्रमधर्मनिष्ठास्तत्तत्पुण्यलोकान् प्राप्य, तत्तत्सुकृतफलमनुभवन्ति। 'ब्रह्मसंस्थोऽमृतत्वमेति'—तेषु चतुर्ष्वाश्रमेषु ये ब्रह्मविद्यानिष्ठास्ते मुक्तिं प्राप्नुवन्ति इति श्रुत्यर्थ। अत्र सन्यासाश्रम-निष्ठानामपि ब्रह्मविद्यानुष्ठानविधानात्, तेषां यज्ञदानादिकर्माभावेन अङ्गिन विहाय अङ्गानुष्ठानायोगेन, न ब्रह्मविद्याया कर्माङ्गत्वम्॥

[3]"त्रयो धर्मस्कन्धा" इत्याद्युदाहृतश्रुतौ विधिप्रत्ययाश्रवणेन नाश्रमाणा विधि, अपि तु पूर्वप्रकृतस्य प्रणवकरणकब्रह्मोपासनस्य

[1] बृ ६ ४-२२ [2] मु २-२-८ [3] छा २ २३ १

स्तुत्यर्थमाश्रमाणामनुवादमात्रमत्र क्रियत इत्यभ्युपगन्तव्यम् । अन्यथा गृहस्थाश्रमातिरिक्ताश्रमाङ्गीकारे [1]"वीरहा वा एष योऽग्निमुद्वासयते" इति गृहस्थाश्रमधर्मत्यागे प्रत्यवायश्रवणविरोधप्रसङ्गात् । अत आश्रमान्तरं नास्त्येवेति चेत्, उच्यते—उक्तश्रुतौ गृहस्थाश्रमस्याप्यनुवाद इत्यङ्गीकारे तद्विधायकप्रमाणप्राप्तस्यैवानुवादस्य वक्तव्यतया आश्रमविधायकप्रमाणप्राप्ततायाः चतुर्ष्वाश्रमेषु तुल्यतया गृहस्थाश्रमवत् प्रामाणिकत्वेन आश्रमान्तराण्यप्यनुष्ठेयान्येव ॥

वस्तुतस्तु [2]"त्रयो धर्मस्कन्धा" इत्युदाहृतश्रुतौ चतुर्णामाश्रमाणामप्राप्तत्वाविशेषात् विधिः कल्पनीयः । यथा [3]"अधस्तात् समिधं धारयन्ननुद्रवेत् उपरि हि देवेभ्यो धारयति" इत्यत्र उपरिधारणे विध्यश्रवणेऽपि तस्याप्राप्तत्वेन विधिः कल्प्यते, तद्वत् । उक्तं हि पूर्वमीमांसायां [4]"विधिस्तु धारणेऽपूर्वत्वात्" इति । उपरिधारणस्याप्राप्तत्वात् तत्र विधिः कल्पनीय इति सूत्रार्थः । अतश्च संन्यासाश्रमस्यापि प्रामाणिकतया तत्र च यज्ञादिकर्मणामभावात् विद्यायाः कर्माङ्गत्वे कर्मपरित्यागेन ब्रह्मविद्यानुष्ठानासंभवात्, न ब्रह्मविद्या कर्माङ्गमिति सिद्धम् । यद्यपि [5]"यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इति संन्यासाश्रमविधिर्जाबालश्रुतौ श्रूयते, तथापि तादृशविधिमसन्तं कृत्वा अत्र विधिकल्पनोक्तिरिति द्रष्टव्यम् ॥

तत्तत्कर्मोपकृतात् यदुपासनतः फलावाप्तिः ।
श्रुतिवाक्येभ्यस्सिद्धः तद्ब्रह्म श्रीनिवासनाम भजे ॥ १३८ ॥

यज्ञादिकर्माङ्गकात् यस्य श्रीनिवासस्य उपासनात् मोक्षफलावाप्तिः, श्रुतिवाक्येभ्यः—[6]"ब्रह्मविदाप्नोति परं," [7]"तमेवं विद्वानमृत इह भवति"

[1] तै. सं. १-५-२. [2] छा. २-२३-१. [3] [4] पू. मी. ३-४-१५.
[5] जाबाल. ४. [6] तै. आ. १. [7] पु. सू.

इत्यादिश्रुतिवाक्येभ्यः सिद्धा इत्यर्थः । ब्रह्मोपासनस्य मोक्षसाधनत्वं [1]"तमेवं विद्वानमृत इह भवति" इत्यादिश्रुतिसिद्धम् । तस्य कर्माङ्गकत्वं तु [2]"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुतिसिद्धम् ॥

[1]"तमेवं विद्वान्" इत्यादिश्रुतेः लक्ष्मीपतिविषयकत्वात् यदुपासनत इत्युक्तम् ॥

१०९ ॥ इति पुरुषार्थाधिकरणम् ॥ १ ॥

---

४२ ॥ स्तुतिमात्राधिकरणम् ॥ २ ॥

पूर्वाधिकरणे [3]"ब्रह्मसंस्थोऽमृतत्वमेति" इति ब्रह्मस्थस्तुत्यर्थमाश्रमानुवाद इति स्तुतिः प्रसक्ता । तद्वदुद्गीथेऽपि रसतमत्वाद्युक्तिः स्तुतिः स्यात् इति शङ्कावारणाय प्रवृत्तमिदमधिकरणम् ॥

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ ३-४-२१ ॥

[भावशब्दाच ॥ २२ ॥]

उपादानात्-[4]"स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथ" इत्यत्र क्रत्वङ्गभूतोद्गीथमुपादाय [4]"स एष रसानां रसतम" इति वचनात्, उद्गीथे रसतमत्ववचनं स्तुतिमात्रं इति चेत् इत्यन्तमाशङ्का; तां परिहरति न इति ; न स्तुतिमात्रम् । तत्र हेतुः अपूर्वत्वात् इति; अप्राप्तत्वात् इत्यर्थः इति सूत्रार्थः ॥

---

[1] पु सू. [2] बृ. ६-४-२२. [3] छा. २-२३-१. [4] छा. १-१-३.

पूर्वपक्षः ।

[1]"स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथ" इत्यत्र क्रत्वङ्गभूतमुद्गीथमुपादाय तस्य रसतमत्वोक्तिः स्तुतिरूपा । यथा [2]"इयमेव जुहूः" इत्यत्र क्रत्वङ्गभूतां जुहूमुपादाय, तस्याः पृथिवीत्वोक्तिः स्तुतिरूपा, तद्वत् ॥

सिद्धान्तः ।

उद्गीथे रसतमत्वस्य प्रमाणान्तराप्राप्तत्वेन तदुक्तेः स्तुतिरूपत्वं न संभवति । स्तुतिर्हि प्रमाणान्तरप्राप्तगुणानुवादेन भवति । अतोऽप्राप्तत्वात् रसतमत्वोक्तिः न स्तुत्यर्था ; अपि तु उद्गीथे रसतमत्वदृष्टिविधानार्थैव । [2]"इयमेव जुहूः" इति वचनस्य क्रतुविधिप्रकरणस्थत्वेन यथाकथञ्चित् क्रतुविधिवाक्यैकवाक्यतासंभवे, तत्परित्यज्य वाक्यभेदकल्पनस्यान्याय्यत्वात् 'इयमेव जुहूः' इत्यादौ अर्थवादत्वमाश्रितम् । इह तु उद्गीथविधेरसान्निहितत्वात्, अर्थवादरूपत्वमुक्तवाक्यस्यान्याय्यम् । [3]"उद्गीथमुपासीत" इत्युपासनविधिसन्निधानात् उद्गीथे रसतमत्वदृष्टिविधिरेवायमिति ॥

यज्ञाङ्गरूपकर्मण्युद्गीथो रसतमत्वेन ।
श्रुत्योपास्यो विहितस्तद्ब्रह्म श्रीनिवासनाम भजे ॥ १३९ ॥

सूत्रव्याख्यानेनैव व्याख्यातमिदं पद्यम् । सर्वेषां यज्ञानां श्रीनिवासाराधनपरत्वे प्रमाणं पूर्वमेव दर्शितम् ॥

११० ॥ इति स्तुतिमात्राधिकरणम् ॥ २ ॥

---

४३ ॥ पारिप्लवाधिकरणम् ॥ ३ ॥

पूर्वाधिकरणे [1]"स एष रसानां रसतमः" इत्यादेः स्तुतित्वं निराकृत्य उपासनार्थत्वं स्थापितम् । तद्वत् [4]"श्वेतकेतुर्हाऽऽरुणेय आस"

[1] छा. १-१-३. [2] तै. [3] छा. १-१-१. [4] छा. ६-१-१.

इत्याद्याख्यानानां किं विद्यास्तुत्यर्थत्वमुचितं, उत पारिप्लवार्थत्वमिति शङ्का-परिहाराय प्रवृत्तमिदमधिकरणम् ॥

# पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ ॥ ३-४-२३ ॥

[तथा चैकवाक्योपबन्धात् ॥ २४ ॥]

[1]"श्वेतकेतुर्हाऽऽरुणेय आस" इत्याद्युपाख्यानविशेषाः पारिप्लवार्थाः–[2]"आख्यानानि शंसन्ति" इति विहिताख्यानशंसनार्था इति चेत् इत्यन्तं शङ्का । तां परिहरति न इति । न-आख्यानशंसनार्था नेत्यर्थः । तत्र हेतुः विशेषितत्वात् इति । शंसनीयानामाख्यानानां विशिष्योक्तत्वादिति सूत्रार्थः ॥

पूर्वपक्षः ।

[2]"आख्यानानि शंसन्ति" इति सर्वेषामाख्यानानां पारिप्लवाख्ये शंसने विनियुक्तत्वात्, [1]"श्वेतकेतुर्हाऽऽरुणेय आस" इत्यादीन्याख्यानान्यपि शंसनार्थानीति ॥

सिद्धान्तः ।

[2]"आख्यानानि शंसन्ति" इत्युक्त्वा शंसनीयानामाख्यानानां [2]"मनुर्वैवस्वतो राजा" इत्यादिना विशिष्योक्तत्वात् [1]"श्वेतकेतुर्हाऽऽरुणेय आस" इत्याद्युपाख्यानानि सद्विद्याविधिवाक्यैकवाक्यतया निबद्धत्वात् विधित्सितविद्याविशेषस्तुत्यर्थानि, न शंसनार्थानीति ॥

सद्विद्यारम्भेष्वाख्यानैः श्वेतकेतुमुख्यानां ।
यद्विद्याः स्तूयन्ते तद्ब्रह्म श्रीनिवासनाम भजे ॥ १४० ॥

---

[1] छा. ६-१-१. [2]

ब्रह्मविद्यानामुपक्रमे [1]"श्वेतकेतुर्हाऽऽरुणेयः किलाऽऽस" इत्यादि-श्वेतकेतुत्वाद्याख्यानैर्यस्य भगवतः श्रीनिवासस्य विद्याः स्तूयन्ते तद्ब्रह्म इति पूर्ववत् ॥

सद्विद्यादीनां श्रीनिवासविषयकत्वं पूर्वमेव निरूपितम् ॥

१११ ॥ इति पारिप्लवाधिकरणम् ॥ ३ ॥

४४ ॥ अग्नीन्धनाद्यधिकरणम् ॥ ४ ॥

पुरुषार्थाधिकरणे संन्यासाश्रमनिष्ठानां ब्रह्मविद्याधिकारश्रवणेन तेषां यज्ञादिकर्माभावात् ब्रह्मविद्याया न कर्माङ्गत्वमिति निरूपितम् । अनन्तरं स्तुतिप्रसङ्गात् अधिकरणद्वयं प्रवृत्तम् । इदानीं सन्यासाद्याश्रमनिष्ठानां अग्न्याधानादिकर्मसापेक्षाया ब्रह्मविद्यायाः कथं सभव इत्याशङ्कापरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## अत एव चाग्नीन्धनाद्यनपेक्षा ॥ ३-४-२५ ॥

चशब्द उक्तशङ्कानिवृत्तिद्योतकः । यतः श्रुतिषु सन्यासाद्याश्रमनिष्ठानां ब्रह्मविद्यासबन्धः श्रूयते, अत एव तेषु ब्रह्मविद्या अग्न्याधानादिकर्मनिरपेक्षा इति सूत्रार्थः ॥

अयं भावः—सन्यासाद्याश्रमिणां स्वस्वाश्रमविहितधर्मैरेव विद्यानुग्रह-सभवात्, तेषां अग्न्याधानादिगृहस्थाश्रमधर्मविरहेऽपि न क्षतिः ॥

यज्ञाद्यनधिकृता ये त्वाश्रमिणस्तेषु यद्विद्या ।
नाकांक्षति यज्ञादींस्तद्ब्रह्म श्रीनिवासनाम भजे ॥ १४१ ॥

नाकांक्षति यज्ञादीन् इति । तत्तदाश्रमविहितधर्मैरेव ब्रह्मविद्योप-कारसभवादिति भावः । शिष्टं स्पष्टम् ॥

११२ ॥ इति अग्नीन्धनाद्यधिकरणम् ॥ ४ ॥

---

[1] छा. ६-१-१.

## ४५ ॥ सर्वापेक्षाधिकरणम् ॥ ५ ॥

पूर्वाधिकरणे संन्यासाद्याश्रमनिष्ठेषु ब्रह्मविद्याया अग्न्याधानादिपूर्वक-यज्ञादिनैरपेक्ष्यमुक्तम् । तर्हि गृहस्थाश्रमिष्वपि यज्ञादिनैरपेक्ष्यमस्त्वित्याशङ्का-परिहाराय प्रवृत्तमिदमधिकरणम् ॥

# सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥३-४-२६॥

अत्र चशब्दोऽवधारणार्थः । यज्ञादिकर्माधिकारवत्सु गृहस्थाश्रमिषु ब्रह्मविद्या यज्ञादिसर्वकर्मसापेक्षैव ; यज्ञादिश्रुतेः-यज्ञादिसाध्यत्वश्रुतेः । अश्ववत्-यथा गमनसाधनभूतोऽश्वः गमनसाधनत्वोपयुक्तसर्वपरिकरसापेक्षः, तद्वदिति सूत्रार्थः ॥

अयं भावः—[1]"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रूयते । तमेतं भगवन्तं श्रीनिवासं, ब्राह्मणाः-ब्रह्मविद्यानिष्ठाः, वेदानुवचनेन-वेदाध्ययनेन, यज्ञेन, दानेन, तपसा—कृच्छ्रचान्द्रायणादिव्रतेन, अनाशकेन-अनशनेन, उपवासव्रतेन इति यावत्; विविदिषन्ति-वेदितुमिच्छन्ति इति श्रुत्यर्थः । 'असिना जिघांसति' इत्यादौ यथा 'असिना' इति तृतीयया खड्गस्य हननक्रियासाधनत्वं बोद्ध्यते, तद्वत् अत्रापि 'यज्ञेन' इत्यादितृतीयया यज्ञादेः 'विविदिषन्ति' इति विदिधात्वर्थवेदनक्रियासाधनत्वं बोध्यते । न च 'विविदिषन्ति' इति सन्प्रत्ययान्तोपस्थाप्यवेदनविषयकेच्छायामेव 'यज्ञेन' इत्यादितृतीयया यज्ञादेः साधनत्वं बोद्ध्यतामिति वाच्यम्; वेदनेच्छायां यज्ञादेः साधनत्वे-नान्वययोग्यताविरहेण तथाऽन्वयबोधाङ्गीकारासंभवात् । तथा हि—स्वर्गादि-रूपफलेच्छां विना तदुपायभूतयागेच्छा नोत्पद्यते; यष्टुमिच्छां विना

[1] बृ. ६-४-२२.

तदुपायद्रव्यार्जनेच्छा नोत्पद्यत इत्यनुभवसिद्धम्। ततश्च प्रकृते यज्ञादेर्वेदनेच्छासाधनत्वाङ्गीकारे यज्ञादेर्वेदनेच्छा फलं; तस्याश्च वेदनं फलमिति लाभेन वेदनेच्छारूपफलेच्छां विना वेदनोपायभूतवेदनेच्छारूपोपायेच्छाया असंभवात्, तदसंभवे यज्ञादिरूपतदुपायेच्छाया असंभवात्, प्रथमं वेदनेच्छा; अनन्तरं वेदनेच्छारूपोपायेच्छा; ततस्तदुपायभूतयज्ञेच्छा उत्पद्यत इति वक्तव्यम्। ततश्च वेदनेच्छायामुत्पादनीयाया वेदनेच्छाया अपेक्षितत्वापत्त्या आत्माश्रयदोषप्रसङ्गः। अतो यज्ञादेर्वेदनेच्छासाधनत्वासंभवात् 'यज्ञेन' इत्यादौ तृतीयया यज्ञादेर्वेदनेच्छासाधनत्वबोधाङ्गीकारासंभवात् वेदन एव तदन्वयबोधो वक्तव्यः। अतो यज्ञादेर्वेदनं प्रति साधनताया उक्तश्रुतिसिद्धतया गृहस्थाश्रमिषु ब्रह्मविद्या यज्ञादितदाश्रमविहितनित्यनैमित्तिकसर्वकर्मसापेक्षेवेति ॥

यज्ञाधिकारवत्तु त्वग्न्याधानादिकान् सर्वान्।
आकांक्षति यद्विद्या तद्ब्रह्म श्रीनिवासनाम भजे ॥ १४२ ॥

अत्र तुशब्दो यज्ञादिनैरपेक्ष्यशङ्कानिवर्तकः। सर्वान्-नित्यनैमित्तिकसर्वधर्मानित्यर्थः ॥

[1]"तमेतं वेदानुवचनेन" इत्यादिश्रुतेः वाजसनेयकश्रुतदहरविद्यावेद्यविषयकत्वात् तस्याश्च विद्यायाः श्रीनिवासविषयकताया दहराधिकरणादिषु निर्णीतत्वात्, अत्र यद्विद्या इत्युक्तम् ॥

११३ ॥ इति सर्वापेक्षाधिकरणम् ॥ ५ ॥

---

## ४६ ॥ शमदमाद्यधिकरणम् ॥ ६ ॥

पूर्वाधिकरणे ब्रह्मविद्यानिष्ठैः गृहस्थाश्रमिभिः यज्ञादीनि नित्यनैमित्तिककर्माण्यनुष्ठेयानीत्युक्तम्। इन्द्रियव्यापाररूपाणां तेषामनुष्ठेयत्वे इन्द्रियव्यापार-

---

[1] बृ. ६-४-२२.

निवृत्तिरूपाणि शमदमादीनि तैरनुष्ठेयानि न वेत्याशङ्कापरिहाराय प्रवृत्त-मिदमधिकरणम् ॥

# शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ ३-४-२७ ॥

यद्यपि शमदमादीनीन्द्रियव्यापारोपरमरूपाणि, तथाऽपि अङ्गत्वेन तेषामपि विहिततयाऽवश्यानुष्ठेयत्वेन गृहस्थो विद्यानिष्ठ शमदमाद्युपेतः स्यात् इति सूत्रार्थ ॥

[1] "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत्" इति श्रुतौ शमदमादीनां ब्रह्मविद्याङ्गतया विधानात् गृहस्थै ब्रह्मविद्यानिष्ठैस्तान्यवश्यानुष्ठेयान्येव, शमदमादिविधीनां निषिद्धकर्मविषयत्वात् फलाभिसन्धिसहितकर्मविषयत्वाच्च, यज्ञादिविधीनां फलाभिसन्धिरहित-नित्यनैमित्तिककर्मविषयत्वाच्च विरोधाभावात्। नित्यनैमित्तिककर्मणामनुष्ठानस्य चित्तविक्षेपवासनाहेतुत्वेऽपि तैः कर्मभिराराधितपरमपुरुषानुग्रहेण चित्त-विक्षेपादिनिरासात् चित्तसमाधानोपपत्तेरिति भाव। एवंवित्-ब्रह्मविद्यानिष्ठ, शान्त-निगृहीतान्तरिन्द्रिय, दान्त निगृहीतबाह्येन्द्रिय, उपरत-निषिद्धकाम्यकर्मभ्यो निवृत्त, तितिक्षु-शीतोष्णसुखदुःखादिद्वन्द्वसहिष्णु, समाहित चित्तैकाग्र्यवान्, भूत्वा, आत्मन्येव-मनस्येव, आत्मानं परमात्मानं, पश्येत्-दर्शनसमानाकारं यथा स्यात् तथा ध्यायेत्, साक्षात्कुर्यादित्यर्थः। अत्र 'भूत्वा' इत्यनेन शमदमादीनामङ्गत्वमुक्तं भवति ॥

यज्ञाधिकारवत्स्वपि यद्विद्या शमदमादिमापेक्षा।
अङ्गतया विहितत्वात् तद्ब्रह्म श्रीनिवासनाम भजे ॥ १४३ ॥

स्पष्टोऽर्थः ॥

---

[1] बृ ६-४-२३.

ब्रह्मविद्यानां सर्वासां श्रीनिवासविषयकत्वस्य पूर्वमेव निरूपितत्वात् अत्र यद्विद्या इत्युक्तम् ॥

११४ ॥ इति शमदमाद्यधिकरणम् ॥ ६ ॥

---

४७ ॥ सर्वान्नानुमत्यधिकरणम् ॥ ७ ॥

पूर्वाधिकरणे ब्रह्मविद्यानिष्ठस्य शम आवश्यक इत्युक्तम् । तत्र भोजननियमरूपशमविशेषो ब्रह्मविदोऽस्ति न वेति विचाराय प्रवृत्तमिदमधिकरणम् ॥

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ३-४-२८ ॥

[अबाधाच्च ॥ २९ ॥
अपि स्मर्यते ॥ ३० ॥
शब्दश्चातोऽकामकारे ॥ ३१ ॥]

चशब्दोऽवधारणे । प्राणविद्यानिष्ठस्य सर्वान्नानुमतिः प्राणापद्दशाविषयैव, ब्रह्मविद्विषये प्राणापद्विषयत्वदर्शनात् इति सूत्रार्थः ॥

पूर्वपक्षः ।

छान्दोग्ये पञ्चमप्रपाठके प्राणविद्याप्रकरणे [1]"न ह वा एवंविदि किञ्चनानन्नं भवति" इति श्रुतौ 'प्राणविद्यानिष्ठस्य किमप्यनन्नमदनीयं न भवति' इत्युक्त्वा प्राणविद्यानिष्ठस्य सर्वदा निषिद्धान्नस्यापि भोजनानुमतिर्विद्यामाहात्म्यादिति प्रतीयते । एवमल्पशक्तेः प्राणविदो निषिद्धान्नानुमतौ ब्रह्मविद्यानिष्ठस्य सर्वदा निषिद्धान्नानुमतिः कैमुतिकन्यायसिद्धेति ॥

---

[1] छा ५-२-१

## सिद्धान्तः ।

ब्रह्मविद्यानिष्ठस्य उषस्तस्य प्राणापदृशाया हस्तिपकोच्छिष्टकुल्माषभक्षणस्य तेन लब्धप्राणधारणस्य तस्य हस्तिपकदत्तपानान्निवृत्तेश्च छान्दोग्ये प्रथमप्रपाठके नवमखण्डे उषस्तवृत्तान्तप्रकरणे श्रवणेन, महामहिमशालिनो ब्रह्मविदोऽपि निषिद्धान्नभक्षणस्याऽऽपद्विषयत्वावगमेन [1]"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" इत्याहारशुद्धेरावश्यकताश्रवणेन, [2]"प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" इति ब्राह्मणसामान्यस्याऽऽपदि सर्वान्नानुमतिस्मरणेन [3]"तस्माद् ब्राह्मणः सुरां पिबेत्" इति ब्राह्मणसामान्यस्य निषिद्धभक्षणान्निवृत्तेः श्रवणेन च ब्रह्मविदोऽपि सर्वान्नानुमतेरापद्विषयत्वसिद्धौ, अल्पशक्तेः प्राणोपासकस्य सर्वान्नानुमतिरापद्विषयैवेति किमु वक्तव्यम् ॥

प्राणविदोऽप्यतिशक्तेर्यन्निष्ठस्याऽपि भोजनानियमः ।
अत्यन्तापद्विषयस्तद्ब्रह्म श्रीनिवासनाम भजे ॥ १४४ ॥

प्राणविद्यानिष्ठादपि ब्रह्मविद्यामाहात्म्येन शक्त्यतिशयवतो यन्निष्ठस्य-श्रीनिवासोपासनारूपब्रह्मविद्यानिष्ठस्य, अन्नभोजननियमाभावः-निषिद्धान्नभोजनं, अत्यन्तापद्विषयः, तद्ब्रह्म इति पूर्ववत् ॥

११५ ॥ इति सर्वान्नानुमत्यधिकरणम् ॥ ७ ॥

---

### ४८ ॥ विहितत्वाधिकरणम् ॥ ८ ॥

"सर्वापेक्षा च" इत्यधिकरणे यज्ञादीनां ब्रह्मविद्याङ्गत्वमुक्तम् । तेषां विद्याङ्गत्वेऽमुमुक्षुभिर्गृहस्थाश्रमनिष्ठैर्यज्ञादिकर्माण्यनुष्ठेयानि न वेत्याशङ्कापरिहाराय प्रवृत्तमिदमधिकरणम् ॥

---

[1] छा ७-२६-२. [2] [3]

# विहितत्वाच्चाऽऽश्रमकर्माऽपि ॥ ३-४-३२ ॥

सहकारित्वेन च ॥ ३३ ॥
[सर्वथाऽपि त एवोभयलिङ्गात् ॥ ३४ ॥
अनभिभवं च दर्शयति ॥ ३५ ॥]

चशङ्कानिवृत्तौ । विद्याङ्गानि यज्ञादीनि आश्रमाङ्गान्यपि भवन्तीत्यर्थः । तत्र हेतुः विहितत्वाच्च इति । [1]"यावज्जीवमग्निहोत्रं जुहोति" इत्यादौ आश्रमनिष्ठानामप्यनुष्ठेयतया विहितत्वादित्यर्थ इति प्रथमसूत्रार्थः । विद्यास्वरूपोत्पादकतया विद्याङ्गत्वेन विहितत्वाच्चेति द्वितीयसूत्रार्थः ॥

## पूर्वपक्षः ।

यज्ञादीनां विद्याङ्गत्वे आश्रमाङ्गत्वं न सम्भवति; विद्याङ्गत्वे मुमुक्षूणामेव विद्यायामधिकारात् । मुमुक्षायां सत्यां यज्ञादीनामनुष्ठेयतया अनित्यता स्यात् । गृहस्थाश्रमाङ्गत्वे [2]"यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इति गृहस्थैर्यावज्जीवमनुष्ठेयताविधानात् नित्यता स्यात् । ततश्च नित्यत्वानित्यत्वयोर्विरुद्धधर्मयोः समावेशप्रसङ्गः । न चैकस्य कर्मणो नित्यत्वकाम्यत्वोभयसंभवात् अङ्गताग्राहकप्रमाणभेदरूपविनियोगपृथक्त्वन्यायेन उक्तविरोधः परिहर्तुं शक्य इति वाच्यम् । विद्याङ्गकर्मणामाश्रमाङ्गकर्मणां च भिन्नभिन्नप्रकरणविहितानां स्वरूपैक्ये प्रमाणाभावेन तेषां स्वरूपैक्यस्यासम्भवात् । विद्याङ्गकर्मणामाश्रमाङ्गत्वासंभवेन केवलाश्रमिभिः यज्ञादीन्यननुष्ठेयानीति ॥

## सिद्धान्तः ।

यथा [3]"अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादिशास्त्रैः स्वर्गकामनायां सत्यामनुष्ठेयतया विहितस्याग्निहोत्रादिकर्मणो [1]"यावज्जीवमग्निहोत्रं जुहोति" इत्यादिभिः नित्यतया विधानेन प्रसक्तः नित्यत्वानित्यत्वविरोधः

---

[1] आपस्तम्बश्रौत ३-१४-८. [2]

विनियोजकप्रमाणभेदरूपविनियोगपृथक्त्वन्यायेन परिह्रियते, तद्वत् इहापि [1]"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" इत्यादिशास्त्रैर्विद्याङ्गतया विहितानां यज्ञादीनां [2]"यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इत्यादिभिः गृहस्थाश्रमाङ्गतयाऽपि विधानात् य एव यज्ञादय आश्रमाङ्गतया विहितास्तानेव यज्ञादीन् [1]"यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुतौ यज्ञादिशब्दैः प्रत्यभिज्ञाप्य तेषां 'विविदिषन्ति' इति विद्योपत्त्यर्थतया विधानात्, [3]"धर्मेण पापमपनुदति" इत्यादिश्रुतिषु धर्मशब्दनिर्दिष्टैस्तैरेव यज्ञादिभिर्ब्रह्मविद्योत्पत्तिप्रतिबन्धकपापनिरसनद्वारेण विद्योत्पत्त्यर्थताया दर्शितत्वाच्च, आश्रमाङ्गविद्याङ्गकर्मणोः स्वरूपैक्यात् विनियोगपृथक्त्वन्यायेन नित्यानित्यसंयोगविरोधस्य सुपरिहरत्वात् विद्याङ्गानां यज्ञादीनामाश्रमाङ्गत्वे बाधकाभावेन मुमुक्षारहितैर्गृहस्थाश्रमनिष्ठैरपि यज्ञादीन्यनुष्ठेयान्येवेति ॥

यदुपासनाङ्गभूतं यज्ञादिकमङ्गमाश्रमस्यापि ।
भवति विनियोगभेदात् तद्ब्रह्म श्रीनिवासनाम भजे ॥ १४५ ॥

विनियोगभेदात्-अङ्गत्वग्राहकप्रमाणभेदादित्यर्थः ॥

११६ ॥ इति विहितत्वाधिकरणम् ॥ ८ ॥

---

## ४९ ॥ विधुराधिकरणम् ॥ ९ ॥

ब्रह्मचर्याद्याश्रमनिष्ठानां ब्रह्मविद्यायामधिकारोऽस्तीति निरूपितम् । आश्रमरहितानामाश्रमाङ्गकर्मासंभवात् तदङ्गकब्रह्मविद्यायामधिकारो नास्तीति पूर्वपक्षे प्राप्ते तत्परिहाराय प्रवृत्तमिदमधिकरणम् ॥

---

[1] बृ. ६-४-२२. [2] [3] तै. ना. ५०.

# अन्तरा चापि तु तद्दृष्टेः ॥ ३-४-३६ ॥

[अपि स्मर्यते ॥ ३७ ॥
विशेषानुग्रहश्च ॥ ३८ ॥
अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥]

अन्तरा-आश्रमान् विना वर्तमानानां मृतदारादीनां ब्रह्मविद्याया-मधिकारोऽस्ति ; तद्दृष्टेः—रैक्वभीष्मादीनां आश्रमरहितानां ब्रह्मविद्यानुष्ठान-दर्शनात् इति सूत्रार्थः ॥

[1]"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा अनाशकेन" इति श्रुतौ दानोपवासयोः [2]"जपेनापि च संसिद्ध्येत् ब्राह्मणो नात्र संशयः । कुर्यादन्यत्र वा कुर्यात् मैत्रो ब्राह्मण उच्यते" इति स्मृतौ जपस्य, [3]"तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्येत्" इति श्रुतौ तपःप्रभृतीनां च ब्रह्मविद्योत्पादकत्वाभिधानेन अनाश्रमिणां तेष्वधिकार-संभवात्, रैक्वादीनामनाश्रमिणां ब्रह्मविद्यानुष्ठानदर्शनाच्च अनाश्रमिणामप्य-धिकारोऽस्त्येव । परन्तु आश्रमेषु भूयसां धर्माणां सत्त्वात् अनाश्रमिणो धर्मस्य अल्पत्वात् अल्पैर्धर्मैरनुग्रहापेक्षया भूयोभिर्धर्मैरनुग्रहाधिक्यसंभवात्, [4]"अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विज" इत्यनापदि अनाश्रमित्व-निषेधाच्च आश्रमित्वमेव युक्तम् ॥

स्वार्हैर्दानजपाद्यैरपि सिद्धेस्संभवाद्विधुरः ।
यदुपास्तावधिकुरुते तद्ब्रह्म श्रीनिवासनाम भजे ॥ १४६ ॥

विधुरः-अनाश्रमी । सिद्धेः संभवात्-ब्रह्मविद्योत्पादनसंभवात् । शिष्टं स्पष्टम् ॥

११७ ॥ इति विधुराधिकरणम् ॥ ९ ॥

[1] बृ. ६-४-२२ [2] मनु २-८७ [3] प्रश्न १-१०. [4]

## ५० ॥ तद्भूताधिकरणम् ॥ १० ॥

पूर्वाधिकरणे विधुरादीनामुपवासादिभिरनुग्रहसंभवात् ब्रह्मविद्याया-मधिकारोऽस्तीति निरूपितम् । तद्वत् आश्रमभ्रष्टानामपि ब्रह्मविद्यायामधि-कारोऽस्त्विति शङ्कापरिहाराय प्रवृत्तमिदमधिकरणम् ॥

# तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्यः ॥ ३-४-४० ॥

[न चाधिकारिकमपि पतनानुमानात् तदयोगात् ॥ ४१ ॥
उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥ ४२ ॥
बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ ४३ ॥]

तुशब्दः पक्षव्यावृत्त्यर्थः । तद्भूतस्य-नैष्ठिकादिभावं प्राप्तस्य, अतद्भावः—नैष्ठिकत्वाद्यभावः, नैष्ठिकाश्रमादिभ्यश्च्युतिरिति यावत् ; न भवतीत्यर्थः । तत्र हेतुमाह नियमात् इत्यादिना । तेषां नैष्ठिकादीनां, यानि रूपाणि—धर्माः, तेषां अभावेभ्यः-परित्यागेभ्यः, नियमात्—व्यावर्तनादिति सूत्रार्थः ॥

अयं भावः—[1]"ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्य-कुलेऽवसादयन्" इति नैष्ठिकब्रह्मचारिणो यावदायुषं ब्रह्मचर्येणैवावस्थान-विधानात्, [2]"अरण्यमियात् ततो न पुनरेयात्" इति वानप्रस्थस्य तदा-श्रमान्निवृत्तिप्रतिषेधात्, [3]"सन्न्यस्याग्निं न पुनरावर्तयेत्" इति सन्न्यासा-श्रमं प्राप्तस्य ततो निवृत्तिनिषेधाच्च नैष्ठिकाद्याश्रमात् भ्रष्टानामशुद्धत्वेन तेषां ब्रह्मविद्यायां नाधिकारः । न च अधिकारलक्षणास्यप्रायश्चित्तग्रन्थोक्तप्राय-श्चित्तेन तेषां शुद्धिसंभवात् ब्रह्मविद्यायामधिकारः सम्भवतीति वाच्यं ;

[1] छा. २-२३-१. [2] [3]

[1]"आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते नरः । प्रायश्चित्तं न पश्यामि येन शुद्ध्येत् स आत्महा" इति नैष्ठिकादेर्भ्रष्टस्य प्रायश्चित्ताभावस्मरणात्, प्रायश्चित्तशास्त्रस्योपकुर्वाणब्रह्मचारिविषयत्वात् । आश्रमात् भ्रंशस्य उपपातकत्वमङ्गीकृत्य निषिद्धमध्वशनादौ प्रायश्चित्तवत् आश्रमभ्रष्टानामपि प्रायश्चित्तस्य कैश्चित् अभ्युपगमेऽप्याश्रमात् भ्रंशस्य महापातकत्वे उपपातकत्वे वा [1]"प्रायश्चित्तं न पश्यामि येन शुद्ध्येत् स आत्महा" इति स्मृत्या तेषामशुद्धिस्मरणात्, शिष्टैस्तेभ्यो ब्रह्मविद्याया अनुपदेशाच्च तेषां ब्रह्मविद्यायां नास्त्यधिकार इति ॥

आरूढाः पतिता ये संन्यासाद्याश्रमात् तेषां ।
नाधिकृतिर्यदुपास्तौ तद्ब्रह्म श्रीनिवासनाम भजे ॥ १४७ ॥
स्पष्टोऽर्थः ॥

११८ ॥ इति तद्भूताधिकरणम् ॥ १० ॥

---

५१ ॥ स्वाम्यधिकरणम् ॥ ११ ॥

पूर्वं ब्रह्मोपासनानुष्ठात्रनुष्ठातृविभाग उक्तः । तत्प्रसङ्गात् उद्गीथोपासनानुष्ठात्रनुष्ठातृविभागनिरूपणाय प्रवृत्तमिदमधिकरणम् ॥

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ३-४-४४ ॥

इदं पूर्वपक्षसूत्रम् । उद्गीथोपासनं, स्वामिनः—यजमानस्य, कर्म—यजमानेनानुष्ठेयमित्यर्थः । तस्यैव फलप्राप्तिश्रुतेः इति आत्रेयो मन्यत इति सूत्रार्थः ॥

---

[1] आग्नेयपु १६५ २३

अयं भाव—यथा दहराद्युपासनानि तत्फलाश्रयकर्तृकाणि तथा उद्गीथोपासनान्यपि क्रतुफलप्रतिबन्धरूपफलाश्रयेण यजमानेन कर्तव्यानि, तेषां पुरुषार्थत्वात्। न च गोदोहनस्य पुरुषार्थत्वेऽपि तत्करणक प्रणयनं यथर्त्विजा क्रियते, तद्वत् उद्गीथोपासनस्य पुरुषार्थत्वेऽपि तस्य ऋत्विक्कर्तृकत्वमेव न्याय्यमिति वाच्यम्। ऋत्विक्क्रियमाणाप्प्रणयनाश्रयस्य गोदोहनस्य यजमानेन उपादातुमशक्यतया तेनापां प्रणयन ऋत्विक्कर्तृकमाश्रितम्। इह तु उद्गात्रा क्रियमाण उद्गीथे यजमानेन रसतमत्वेनोपासनस्य कर्तुं शक्यतया फलभाजा तेनैव उपासन कर्तव्यमिति ॥

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ ३-४ ४५ ॥

इदं सिद्धान्तसूत्रम्। उद्गीथोपासनं, आर्त्विज्यं-ऋत्विक्कर्म, ऋत्विजा कर्तव्यमित्यर्थः। अत्र हेतुमाह—हि-यत, तस्मै-साङ्गक्रत्वनुष्ठानाय, ऋत्विक् परिक्रियते-दक्षिणया स्वीक्रियत इति सूत्रार्थः ॥

अयं भाव—[1]"ऋत्विजो वृणीते" [2]"ऋत्विग्भ्यो दक्षिणां ददाति" इति शास्त्रेण साङ्गक्रत्वनुष्ठानाय ऋत्विग्वरणस्य, तेभ्यो दक्षिणाप्रदानस्य च विहितत्वेन क्रत्वन्तर्गतस्य कायिकस्य मानसस्य च सर्वस्य तेनैव कर्तव्यत्वात् उद्गीथोपासनमपि तेनैव कर्तव्य, न तु तत्र यजमानेन कर्तुं शक्यत्वमशक्यत्वं वा प्रयोजकमिति ॥

यद्विद्यासहकारिक्रत्वङ्गोद्गीथवेदनाः सर्वाः ।
ऋत्विग्भिः कर्तव्यास्तद्ब्रह्म श्रीनिवासनाम भजे ॥ १४८ ॥

उद्गीथवेदनाः—उद्गीथोपासनानीत्यर्थः। शिष्टं स्पष्टम् ॥

११९ ॥ इति स्वाम्यधिकरणम् ॥ ११ ॥

---

[1] तै स ६-३-७.　[2]

५२ ॥ सहकार्यधिकरणम् ॥ १२ ॥

यज्ञादिकं शमदमादिकं च विद्याङ्गभूतं निरूपितम्, तत्सङ्गत मध्ये प्राप्तं निरूपितम्। इदानीं विद्याया अङ्गान्तरनिरूपणाय प्रवृत्तमिदमधिकरणम् ॥

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ३-४ ४६ ॥

[कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥
मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥]

बृहदारण्यके [1] "तस्मात् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः, मौनं चामौनं च निर्विद्याथ ब्राह्मणः" इति श्रूयते। तस्मात्–वैराग्यस्याऽऽवश्यकत्वात्, ब्राह्मणः–अधीतकृत्स्नवेदः, पाण्डित्यं–उपदेशैकसमधिगम्यार्थज्ञानं निर्विद्य–प्राप्य, बाल्येन तिष्ठासेत्, बाल्यं च पाण्डित्यं च निर्विद्य, अथ मुनिः स्यात् पुनः पुनरुपासनालम्बनशुभाश्रयचिन्तनपरः स्यात्। अमौनं च—मौनव्यतिरिक्तं बाल्यपाण्डित्योभयं, मौनं च शुभाश्रयसंशीलनं च प्राप्य, अथ ब्राह्मणः–लब्धनिदिध्यासनो भवतीति श्रुत्यर्थः। अत्र 'अथ मुनिः' इत्यत्र विधिप्रत्ययाश्रवणात् पूर्वोक्तस्य पाण्डित्यस्यैव अनुवादः, न तु विद्यासहकारिणः कस्यचिदन्यस्य विधानमिति पूर्वपक्षे प्राप्ते, अनेन सिद्धान्त उच्यते–तद्वतः ब्रह्मविद्यावतः विध्यादिवत् विद्यासहकारितया विधीयमानानि यानि यज्ञादीनि, यानि शमदमादीनि, ये चानूद्यमाने श्रवणमनने तद्वत्, 'अथ मुनिः' इत्यत्र मुनिशब्दोक्तं सहकार्यन्तरविधिः–सहकार्यन्तरतया विधीयमानमित्यर्थः। विधीयमानं सहकार्यन्तरमिति फलितोऽर्थः। तच्च

[1] बृ ५ ५-१

मुनिशब्दोक्तं सहकार्यन्तरं तृतीयं--बाल्यपाण्डित्ययोस्तृतीयं, पुनः पुनरालम्बनसंशीलनरूपं मौनमित्यर्थः। मुनिशब्देनोक्तार्थलाभोपपादनपरं 'पक्षेण' इति पदम्। पक्षेण-परिग्रहेण, अत्यादरेणेति यावत्। प्रकृष्टमननशीलेषु पराशरादिषु मुनिशब्दप्रयोगदर्शनादुक्तार्थलाभ इति सूत्रार्थः॥

अयं भावः--यथा यज्ञादयः शमादयश्च [1]"यज्ञेन दानेन" इत्यादिश्रुतिषु विद्यासहकारितया विधीयन्ते, यथा च श्रवणमनने [2]"श्रोतव्यो मन्तव्य" इति विद्यासहकारितयाऽनूद्येते, तथा 'अथ मुनिः' इत्यत्र बाल्यपाण्डित्ययोस्तृतीयं पराशरादिषु प्रसिद्धं शुभाश्रयसंशीलनरूपं मौनं विद्यासहकारितयाऽप्राप्तत्वात् विधीयते। बाल्यं पाण्डित्यं मौनं च त्रितयं विधीयते इति यावत्। ततश्च 'मुनिः स्यात्' इति विधिः कल्पनीय इति॥

नन्वेवं ब्रह्मविद्यायाः सर्वाश्रमिसाधारणत्वे तत्तदाश्रमविहितधर्मसहितबाल्यपाण्डित्यमौनत्रितयाङ्गकत्वे चाभ्युपगम्यमाने, छान्दोग्ये [3]"आचार्यकुलाद्वेदमधीत्य" इत्याद्युपक्रम्य, [3]"कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः" इत्यादिना गृहस्थाश्रमनिष्ठविषयतया उपसंहारः कथमुपपद्यते इति चेत्, उच्यते--ब्रह्मविद्यायाः सर्वाश्रमसाधारण्यात्, तत्र गृहस्थाश्रमरूपविशेषे उपसंहार इति न तद्विरोधः। एवं वाजसनेयके [4]"तस्मात् ब्राह्मणः पाण्डित्यं निर्विद्य" इत्यारभ्य [4]"एतं वैतमात्मानं विदित्वा ब्राह्मणः पुत्रैषणायाश्च दारैषणायाश्च लोकैषणायाश्च व्युत्थाय, अथ भिक्षाचर्यं चरति" इत्यादिना भिक्षाचर्यादिरूपसन्यासाश्रमनिष्ठधर्मोपादानपूर्वकं बाल्यपाण्डित्यमौनानां त्रयाणां विद्यासहकारितयोपदेशप्रकरणे सन्यासाश्रमधर्मोपादानं

[1] बृ. ६-४-२२. [2] बृ. ६-५-६. [3] छा. ८-१५-१. [4] बृ. ५-५-१.

आश्रमान्तरधर्माणामपि प्रदर्शनार्थम्; सर्वाश्रमिणामपि ब्रह्मविद्यायामधिकारस्य [1]"ब्रह्मसंस्थोऽमृतत्वमेति" इत्यत्र श्रवणादिति ॥

यस्य शुभाश्रयमननं शमादिवत् यस्य चिन्तायाः ।
सहकारितया विहितं तद्ब्रह्म श्रीनिवासनाम भजे ॥ १४९ ॥

यस्य श्रीनिवासस्य शुभाश्रयचिन्ता—व्युत्थानकाले दिव्यमङ्गलविग्रहसंशीलनं, शमादिवत् । शिष्टं स्पष्टम् ॥

उपस्तब्राह्मणे [2]"योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति" इति प्रक्रान्तात्मविषयत्वात्, [3]"पाण्डित्यं च बाल्यं च निर्विद्य अथ मुनिः स्यात्" इति श्रुते, तस्याऽऽत्मनोऽशनायाद्यतीतत्वेन [4]"अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इति श्रुत्युक्तात्मैक्यस्य प्रत्यभिज्ञायमानतया, तस्य च आत्मनः [5]"एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति श्रुत्युक्तनारायणत्वप्रत्यभिज्ञानात्, [3]"अथ मुनिः स्यात्" इति विहितं मननं श्रीनिवासशुभाश्रयमननमिति सिद्धमित्यभिप्रायेण यस्य शुभाश्रयमननं इत्युक्तम् ॥

१२० ॥ इति सहकार्यधिकरणम् ॥ १२ ॥

---

[1] छा. २-२३-१. [2] बृ. ५-५-२ [3] बृ ५-५-१ [4] छा ८-७-१
[5] सुबाल

५३ ॥ अनाविष्काराधिकरणम् ॥ १३ ॥

पूर्वाधिकरणे बाल्यपाण्डित्यमौनत्रयं विद्यासहकारितया विहितमित्युक्तम् । तत्र बाल्यशब्दार्थविवरणाय प्रवृत्तमिदमधिकरणम् ॥

## अनाविष्कुर्वन्नन्वयात् ॥ ३-४-४९ ॥

विद्वान् स्वमाहात्म्यं अनाविष्कुर्वन् वर्तेतेत्यर्थ । अनाविष्काररूपबाल्यस्यैव [1]"बाल्येन तिष्ठासेत्" इति श्रुतौ अन्वययोग्यत्वादिति सूत्रार्थः ॥

[1]"तस्मात् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" इति ब्रह्मविद्याङ्गतया श्रुतौ विधीयमानं बाल्यं न कामचारकामवादकामभक्षणरूपं बालकर्म, [2]"नाविरतो दुश्चरितात्" इत्यादिश्रुतिभिः कामचारादेः ब्रह्मविद्याविरोधित्वेनोक्तेः ; अपि तु स्वस्वभावानाविष्काररूपं बालकर्मैव, स्वमाहात्म्यानाविष्काररूपस्य तस्यैव विधानयोग्यत्वात् ॥

यद्विद्यानिष्ठस्य प्रकृष्टमाहात्म्यशालिनो विहितम् ।
महिमानाविष्करणं तद्ब्रह्म श्रीनिवासनाम भजे ॥ १५० ॥

[1]"बाल्येन तिष्ठासेत्" इति श्रुतिविवक्षितब्रह्मविद्यायाः श्रीनिवासविषयकत्वं पूर्वाधिकरणे निरूपितम् ॥

१२१ ॥ अनाविष्काराधिकरणम् ॥ १३ ॥

---

[1] बृ ५-५-१. [2] कठ १-२-२४.

## ५४ ॥ ऐहिकाधिकरणम् ॥ १४ ॥

एतावता ब्रह्मविद्याङ्गं निरूपितम्; अधिभूतब्रह्मविद्योत्पत्तिसमयनिरूपणाय प्रवृत्तमिदमधिकरणद्वयम् । तत्र मोक्षेतरफलसाधनब्रह्मविद्योत्पत्तिसमयनिरूपणाय प्रवृत्तमिदमधिकरणम् ॥

## ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ३-४-५० ॥

ऐहिकं-मोक्षेतरफलसाधनं ब्रह्मोपासनं, प्रबलकर्मभिः प्रतिबन्धाभावे सति उत्पद्यत इत्यर्थः । तत्र हेतुमाह तद्दर्शनात् इति । [1]"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति ब्रह्मोपासनस्य प्रतिबन्धसंभवश्रवणादिति सूत्रार्थः ॥

[2]"चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन" इति ब्रह्मोपासनस्यानेकजन्मार्जितसुकृतकर्मसाध्यत्वाभिधानात्, तेषां च सुकृतकर्मणां प्रबलैः कर्मान्तरैः फलप्रतिबन्धाभावे सति ब्रह्मोपासनं तदानीमेवोत्पद्यते । [1]"यदेव विद्यया करोति" इत्युदाहृतश्रुतौ उद्गीथोपासनविशिष्टतया क्रियमाणस्य क्रतुरूपस्य पुण्यकर्मणः फलप्रतिबन्धाभावरूपवीर्यवत्तरत्वश्रवणेन उद्गीथोपासनरहितक्रत्वादिरूपपुण्यकर्मणः प्रबलकर्मभिः फलप्रतिबन्धसिद्धेरिति भावः ॥

न नियतिरैश्वर्यफला यद्विद्योत्पद्यते तदैवेति ।
धर्मेष्वनुष्ठितेष्वपि तद्ब्रह्म श्रीनिवासनाम भजे ॥ १५१ ॥

[1] छां. १-१-१०. [2] गीता. ७-१६.

ऐश्वर्यफला, यद्विद्या—यस्य श्रीनिवासस्य विद्या, [1] "चतुर्विधा भजन्ते मां" इति गीतादिषु विहितेति भावः। धर्मेषु-विद्योत्पत्तिसाधनभूतसुकृत-कर्मसु अनुष्ठितेष्वपि, तदानीमेवोत्पद्यते इति न नियमः, तद्ब्रह्म इति पूर्ववत्। अनियमहेतुः सूत्रव्याख्याने निरूपितः। दुर्लभा श्रीनिवासे भक्त्युत्पत्तिरित्यनेनाधिकरणेन भक्तेर्माहात्म्यमुक्तं भवति॥

१२२॥ इति ऐहिकाधिकरणम्॥ १४॥

---

## ५५॥ मुक्तिफलाधिकरणम्॥ १५॥

मुक्तिफलकस्यापि ब्रह्मोपासनस्य उत्पत्तिकालानियमनिरूपणाय प्रवृत्त-मिदमधिकरणम्॥

# एवं मुक्तिफलानियमस्तदवस्थावधृतेः तदवस्थावधृतेः॥ ३-४-५१॥

मुक्तिफलस्य ब्रह्मोपासनस्यापि एवं—तत्साधनभूतसुकृतकर्मानुष्ठानानन्तर एवोत्पत्तिरिति नियमो नास्ति, तदवस्थावधृतेः, तस्य मोक्षफलसाधनब्रह्मो-पासनस्यापि, अवस्थायाः—उत्पत्तिकालमर्यादायाः, अवधृतेः-अवधारणात्, निर्णयादिति सूत्रार्थः॥

मोक्षसाधनभूतब्रह्मोपासनोत्पत्तिसाधनानामैश्वर्यफलसाधनब्रह्मोपासनो-त्पादकसुकृतकर्मापेक्षयाऽतिशयितानामपि ततोऽपि प्रबलब्रह्मविदपचारादिभि

---

[1] गीता ७-१६

प्रतिबन्धसंभवात् प्रतिबन्धकनिवृत्त्यनन्तरमेवोत्पत्तिरिति स्वसाधनधर्मानुष्ठाना-नन्तरमेवेति न नियम इति भावः। अयं विचार उद्गीथोपासनरहित-फलप्रकब्रह्मोपासनविषयः ॥

'तदवस्थावधृतेः' इति पदाभ्यासोऽध्यायसमाप्तिद्योतनार्थः ॥

यद्विद्या प्रबलतमाऽप्यसति प्रतिबन्धके प्रबले ।
उत्पद्यते तदानीं तद्ब्रह्म श्रीनिवासनाम भजे ॥ १५२ ॥

---

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य कलाप्रपूर्णस्य
श्रीदेशिकाचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालायां
तृतीयाध्यायस्य चतुर्थः पादः ॥

---

स्पष्टोऽर्थः ॥
१२३ ॥ इति मुक्तिफलाधिकरणम् ॥ १५ ॥

---

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य कलाप्रपूर्णस्य
श्रीदेशिकाचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालाप्रकाशे
तृतीयाध्यायस्य चतुर्थः पादः ॥

---

॥ तृतीयाध्यायः समाप्तः ॥

श्री

श्रीश्रीनिवासपरब्रह्मणे नमः

# श्रीशारीरकाधिकरणरत्नमालायां सप्रकाशायां
## चतुर्थाध्यायस्य प्रथमः पादः ॥

### ॥ १ ॥ आवृत्त्यधिकरणम् ॥ १ ॥

एवं तृतीयाध्यायप्रथमपादे अनादिवासनावशेन त्रिवर्गप्रवणस्य चेतनस्य विषयदोषप्रदर्शनेन ततो निवृत्तिपूर्वकं भगवच्छ्रीनिवासप्राप्तिरूपमोक्षपुरुषार्थसाधनभूततदुपासनप्रवृत्तिसिद्ध्योपयिकतथाविधपुरुषार्थेच्छोत्पादनाय [1] "त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते । ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इत्यादिषु प्रसिद्धा कर्मफलानां क्षयिष्णुत्वं, ततः पुनरावृत्तिः, स्वसमानयोगक्षेमदेवतान्तरेश्वरतानुवृत्तिः इत्यादयः कर्मदोषा निरूपिताः ॥

द्वितीयपादे भगवच्छ्रीनिवासप्राप्तिरूपमोक्षपुरुषार्थस्यापुनरावृत्तिरूपतासिद्धये भगवतः श्रीनिवासस्य स्वोपासनद्वारा स्वात्मानं प्राप्तानामपुनरावर्तनसङ्कल्पनिर्वहणानुगुणसत्यसङ्कल्पत्वाद्युपास्यत्वोपयुक्तानन्तकल्याणगुणसपन्नता [2] "अतोऽनन्तेन तथा हि लिङ्गं" इति सूत्रेण निरूपिता ॥

तृतीयपादे उपास्यवस्तुनो निरतिशयप्रियत्वेन तदुपासनस्य निरतिशयप्रीतिरूपतासिद्धये आनन्दत्वादितत्स्वरूपनिरूपकधर्माणां सर्वपरविद्यासूपास्यतायास्तत्तद्विद्याप्रकरणश्रुततत्तद्गुणानां तत्तद्विद्यास्वनुसन्धेयतायाश्च निरूपणेन भक्तियोगानुष्ठानप्रकारो निरूपितः ॥

---

[1] गीता ९-२०   [2] शा सू ३-२-२५

चतुर्थपादे भक्तियोगविवृद्धिविरोधिरजस्तमोमूलकपापनिरसनाय स्वस्वाश्रमानुगुणैर्नित्यनैमित्तिककर्मभिरनभिसहितफलैर्भगवतश्श्रीनिवासस्य समाराधनरूप कर्मयोग, कर्माराधितभगवत्प्रसादेन भक्तिविरोधिकर्मणा क्षय, भक्तियोगानुष्ठानमहिम्ना ऋषभभरतादिभिरिव प्राप्तस्य स्वमाहात्म्यस्यानिस्सरणं, अनापदि निषिद्धान्नभोजननिवृत्ति, ध्येयस्य दिव्यमङ्गलविग्रहरूपशुभाश्रयस्य भक्तियोगानुष्ठानेतरकालेषु सर्वदा चिन्तनीयत्वं, ब्रह्मविदपचारस्य सर्वदा परित्याज्यत्वं, एवंविधभक्तियोगनिष्ठस्यार्थसिद्धा देवतान्तरविद्वरतानिवृत्ति, ऋणत्रयनिवृत्तिरित्यादयो निरूपिता ॥

इदानीं मोक्षपुरुषार्थसाधनतया श्रुतिविहितस्य श्रीश्रीनिवासोपासनस्य निरतिशयप्रीतिरूपतापन्नसाक्षात्कारसमानावस्थाप्राप्तिरूपस्यापवर्गफलाङ्कुरस्य सिद्धये तैलधारावदविच्छिन्नस्मृतिसन्ततिरूपत्वं, एवंविधसाक्षात्कारावस्थापन्नभक्तियोगनिष्ठस्य तस्मिन्नेव देहे पुण्यपापयोरश्लेषविनाशौ, इतराधिकारिदुर्लभं नाडीविशेषादुत्क्रमणं, निश्शेषकर्मसम्बन्धनिवृत्तिस्थानप्राप्ति, तत्प्राप्त्यनन्तरभाविपुनरावृत्तिरहितभोगविशेषप्राप्ति इत्यादेर्विद्याफलस्य निरूपणाय चतुर्थोऽध्याय आरभ्यते ॥

तत्र अपवर्गसाधनतया वेदान्तविहितस्य भगवद्वेदनस्य वेदान्तवाक्यश्रवणजन्यशाब्दानुमानजनितस्मृतिरूपस्यानवरतभावनाप्रकर्षेण साक्षात्कारत्वावस्थाप्राप्तये भगवच्चिन्तनरूपस्य स्मरणस्यासकृदावर्तनीयतानिरूपणाय प्रवृत्तमिदमधिकरणम् ॥

## आवृत्तिरसकृदुपदेशात् ॥ ४-१-१ ॥

[ लिङ्गाच्च ॥ २ ॥]

अत्र "एवं मुक्तिफलानियमस्तदवस्थावधृते" इति तृतीयाध्यायान्तिमसूत्र प्रस्तुत मुक्तिफलकं वेदनं पक्षतया विवक्षितम्। ततश्चापवर्गोपायभूत भगवद्वेदनं असकृदावृत्तिरूपं—तैलधारावदविच्छिन्नस्मृतिसन्ततिरूपमित्यर्थ ।

अत्र हेतुमाह उपदेशात् इति। [1]"ब्रह्मविदाप्नोति परं" इत्यादौ विहितस्य वेदनस्याविच्छिन्नस्मृतिसन्ततिरूपध्यानत्वावस्योपदेशादिति सूत्रार्थः ॥

अपवर्गसाधनं यद्वेदनमावर्तनीयमसकृदिति ।
श्रुत्यैकरूप्यसिद्धं तद्ब्रह्म श्रीनिवासनाम भजे ॥ १५३ ॥

यद्वेदनं इति । यस्य श्रीनिवासस्य वेदनमित्यर्थः । शिष्टं स्पष्टम् ॥

अत्रैवं पूर्वपक्षः—यथा "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादौ स्वर्गसाधनतया विहितस्य यागादेस्सकृत्करणेनैव स्वर्गादिफलसिद्धिः, तथेहापि [1]"ब्रह्मविदाप्नोति परं" इत्यादौ अपवर्गसाधनतया विहितस्य भगवच्चिन्तन-रूपवेदनस्य सकृदनुष्ठानेनैवापवर्गफलसिद्धिसंभवात्, भगवच्चिन्तनं सकृदेव कार्यमिति ॥

सिद्धान्तस्तु वेदान्तशास्त्रेषु क्वचिद्भगवतो वेदनस्य, क्वचिदु-पासनस्य, क्वचिद्ध्यानस्य, क्वचित् ध्रुवास्मृतेः, क्वचित् साक्षात्कारस्य, क्वचित् भक्तेश्चापवर्गसाधनत्वं श्रूयते । [1]"ब्रह्मविदाप्नोति परं," [2]"आत्मानमेव लोक-मुपासीत," [3]"आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः," [4]"आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः," [5]"निचाय्य तं मृत्युमुखात् प्रमुच्यते," [6]"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वां" इत्यादिषुप्रथमोदाहृतश्रुतौ स्मृतिरूपस्य वेदनस्य, द्वितीय-श्रुतौ स्मृतिसन्ततिरूपस्योपासनस्य, तृतीयचतुर्थश्रुत्योः तैलधारावदविच्छिन्न-स्मृतिसन्ततिरूपस्य ध्यानस्य, पञ्चम्या श्रुतौ साक्षात्कारस्य, षष्ठ्यां भक्तेश्च मोक्षसाधनत्वं श्रुतम् । [5]"निचाय्य तं" इत्यत्र "चायृ दर्शने" इति धातो-र्निष्पन्नत्वात् 'निचाय्य' इत्यस्य साक्षात्कारवाचित्वं बोद्धव्यम् । [6]"नायमात्मा"

[1] तै.आन.१.१. [2] तै.आन.१.१. [3] बृ.१.४.१५. [3] बृ.४.४.५.
[4] छा.७ २६.२. [5] कठ.३.१५. [6] मु.३.२.३.

इत्यादि । अथ—परमात्मा, प्रवचनेन-मननेन, मेधया-निदिध्यासनेन, श्रुतेन-श्रवणेन, न लभ्य । एष आत्मा यं वृणुते, तेनैव लभ्य । एष आत्मा, स्वा तनूं-स्वस्वरूप, तस्य, विवृणुते-प्रकाशयति इति श्रुत्यर्थ । अत्र श्रवणमनननिदिध्यासनाना परमात्मप्राप्तिहेतुत्वं निषिद्धय, परमात्मना वरणीयो यस्तेनैव लभ्यत इत्युक्तम् । तेन परमात्मना वरणीयताहेतुगुणविशेषवत्ता प्राप्य इत्युक्तं भवति । स च गुण परमात्मनि निरतिशयप्रीतिरूप । स्वस्मिन्निरतिशयप्रीतिमत्येव परमात्मनो निरतिशयप्रीत्युदयेन तस्य वरणीयतासभवात् । ततश्चानेन मन्त्रेण केवलाना श्रवणमनननिदिध्यासनाना परमात्मप्राप्तिहेतुता निषिद्धय, निरतिशयप्रीतिरूपतापन्नाना तेषा परमात्मप्राप्तिहेतुत्वमुक्तं भवति । इत्थ च सति, [7] "भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातु द्रष्टु च तत्त्वेन प्रवेष्टु च परन्तप" इति श्रीगीतावचनेनैकार्थ्यमपि सभवति । एवं परमात्मप्राप्तिहेतुतया श्रुतानामेषा वेदनादीना विकल्पो न सभवति, गुरुलघुविकल्पानुपपत्ते । अतस्सामान्यविशेषन्यायेन, सामान्यवाचिना शब्दाना समानप्रकरण श्रुतविशेषपर्यवसानमाश्रित्य विशदतमत्वरूपसाक्षात्कारत्वावस्थापन्नायास्तैलधारावदविच्छिन्नाया निरतिशयप्रीतिरूपतापन्नस्मृतिसन्ततेरेव मोक्षसाधनत्वे श्रुतेस्तात्पर्यं वाच्यम् । अतस्तथाविधमेव परमात्मवेदन मोक्षसाधनमिति ॥

यद्यपि सूत्रेणापवर्गसाधनस्य वेदनस्यासकृदावृत्तिरूपत्वमेव लभ्यते, तथाऽपि सामान्यविशेषन्यायेन सामान्यस्य वेदनस्यासकृदावृत्तिरूपता यदतस्सूत्रकारस्योत्तरोत्तर ये ये विशेषा श्रुतास्तेषु विशेषेषु पर्यवसाने तात्पर्यावगमात, पूर्वोक्तरूपस्य वेदनस्यापवर्गसाधनत्वमेव सूत्रकृदभिमतमिति बोद्धव्यम् ॥

एवमपवर्गसाधनतया वेदान्तविहितस्य वेदनस्य निरन्तरस्मृतिरूपता श्रीविष्णुपुराणे [8] "तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्पृहा । तद्ध्यान प्रथमैष्षड्भिरङ्गैर्निष्पाद्यते नृप" इति वचनेनाप्यवगम्यते । तस्य—परमात्मन, यत्

[7] गीता ११ ५४ [8] वि पु ६ ७ ९१

रूपं—शुभाश्रयः, तस्य वेदने, अन्यनिस्पृहा—विजातीयप्रत्ययव्यवधानरहिता, एका या सन्ततिः—अविच्छिन्नप्रवाहः, तद्ध्यानं—तच्च यमनियमादिभिरष्टभिरङ्गैर्निष्पाद्यत इति श्लोकार्थः ॥

[१] "ब्रह्मविदाप्नोति परं" इति श्रुतौ वेद्यतया श्रुतं ब्रह्म श्रीनिवासाख्यदेवताविशेष एवेत्यानन्दमयाधिकरणे निर्णीतत्वात्, अस्मिन् पद्ये **अपवर्गसाधनं यद्वेदनं** इत्युक्तम् ॥

१२४ ॥ इति आवृत्त्यधिकरणम् ॥ १ ॥

---

॥ २ ॥ आत्मोपासनाधिकरणम् ॥ २ ॥

पूर्वाधिकरणे परमात्मोपासनमस्कृदावृत्तं कर्तव्यमित्युक्तम् । तत्रोपासनप्रकारनिर्णयार्थं प्रवृत्तमिदमधिकरणम् ॥

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ४--१--३ ॥

तु शब्दोऽवधारणे । उपास्यं परमात्मानं स्वस्य **आत्मेत्येव, उपगच्छन्ति**-उपासते, उपासितार इति शेषः । उपास्यस्योपासकं प्रत्यात्मत्वं शास्त्राणि, **ग्राहयन्ति च**—उपपादयन्ति च इति सूत्रार्थः ॥

परजीवयोरुपास्योपासकयोस्स्वरूपभेदेऽपि ।
तादात्म्यस्य विधानाच्छ्रुतिभिर्देहात्मभावस्य ॥१५४॥

आत्मेत्युपास्यताया विहितत्वादप्युपासितृ ।
आत्मेति तु यदुपास्यं तद्ब्रह्म श्रीनिवासनाम भजे ॥१५५॥

यथा देहात्मनोर्भेदेऽपि जीवात्मनो देहं प्रत्यात्मत्वात् 'मनुष्योऽहं' इत्याद्यनुसन्धानं, तथा जीवात्मानं प्रति परमात्मन आत्मत्वादात्मत्वेनोपा-

[१] तै आन.१.१.

सनस्य विहितत्वाच्च यच्छ्रीनिवासाख्यं ब्रह्म उपासकेन 'अहं' इत्युपास्यं, तद्ब्रह्मेति पूर्वस्मिन् ॥

पूर्वपक्षः ।

उपास्यस्य परमात्मन उपासकाज्जीवाद्वस्तुनो भिन्नत्वात् [1] "पृथगात्मानं प्रेरितारं च मत्वा" इति श्रुतौ स्वात्मपरमात्मनोर्भेदेनानुसन्धानस्य विहितत्वाच्च परमात्मा 'अहं' इति नोपास्य इति ॥

सिद्धान्तस्तु उपासकेन परमात्मा 'अहं' इत्येवोपास्य, [2] "अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमिति न स वेद, यथा पशुः" इति उपास्यस्य परमात्मन स्वस्मादन्यत्वेनोपासनस्य निन्दाश्रवणात्, स्वस्मादन्यस्यापि परमात्मनस्स्वात्मानं प्रत्यात्मत्वोपदेशेन तस्य 'अहं' इत्युपासनसमवस्य शास्त्रैरुपपादितत्वाच्च । [3] "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृत" इति श्रुतौ जीवात्मपरमात्मनोश्शरीरात्मभावप्रतिपादनात् स्वस्मादन्यत्वेऽपि स्वदेहस्य तं प्रति स्वस्यात्मत्वेन 'मनुष्योऽहं' ब्राह्मणोऽहं' इत्याद्यनुसन्धानवत् स्वस्मादन्यस्यापि ब्रह्मण स्वं प्रत्यात्मत्वेन 'अहं ब्रह्मास्मि' इत्यनुसन्धानं ह्युपपादितं भवति । एवमुपासने क्रियमाणे स्वस्य परमात्मनश्च भेदेनानुसन्धानसिद्धे [4] "पृथगात्मानं प्रेरितारं च मत्वा" इति श्रुत्यविरोधः स्व प्रत्यात्मत्वेनोपासनात्, "अथ योऽन्यां देवतामुपास्ते" इत्यादिश्रुत्यविरोधश्चोपपद्यते । अत्र अन्तर्यामिब्राह्मणादौ जीवात्मानं प्रति आत्मत्वेनोपदिष्टस्यान्तर्यामिणस्सुबालोपनिषदैकार्थ्येन श्रीनिवासापरनामधेयनारायणत्वसिद्ध्या अस्मिन् पक्षे आत्मेति तु यदुपास्यं इत्युक्तम् इति ॥

१२५ ॥ इत्यात्मोपासनाधिकरणम् ॥ २ ॥

---

[1] श्वे १ ६ [2] बृ ३ ४ १० [3] बृ ५ ७ २२ [4] श्वे १ ६

## ३ ॥ प्रतीकाधिकरणम् ॥ ३ ॥

पूर्वाधिकरणे परविद्यामुपास्यस्य ब्रह्मण उपासकं प्रत्यात्मत्वादुपासितात्मत्वेनैव ब्रह्मोपास्यमित्युक्तम् । एवं मनःप्रभृतिप्रतीकोपासनेषु आत्मत्वेनोपासनं कार्यं न वेति शङ्कापरिहाराय प्रवृत्तमिदमधिकरणम् ॥

### न प्रतीके न हि सः ॥ ४-१-४ ॥

[ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥]

**प्रतीके**-अब्रह्मणि मनआदौ, आत्मत्वेनोपासनं **न**-कार्यं, **हि**-यतः, **सः**-मनआदिः प्रतीकः, न-उपासितुरात्मा नेति सूत्रार्थः । ब्रह्मत्वेन ध्यानविषयाः प्रतीका इत्युच्यन्ते ॥

**यद्दृष्ट्योपास्यानां नामादीनामनात्मत्वात् ।**
**आत्मत्वं नोपास्यं तद्ब्रह्म श्रीनिवासनाम भजे ॥ १५६ ॥**

स्पष्टोऽर्थः ॥

पूर्वपक्षः ।

[1] "मनो ब्रह्मेत्युपासीत," [2] "नाम ब्रह्मेत्युपासीत" इत्यादिश्रुतिविहितेषु उपासनेष्वपि ब्रह्मोपासनत्वाविशेषादुपास्यस्य वस्तुन आत्मत्वेनानुसन्धानं कार्यम्, ब्रह्मण उपासकं प्रत्यात्मत्वादिति ॥

**सिद्धान्तस्तु**-मनःप्रभृतिप्रतीकोपासनेषु मनःप्रभृतीनि ब्रह्मत्वेनोपास्यानि, न तु ब्रह्म मनस्त्वेनोपास्यम् । उत्कृष्टे राज्ञि भृत्यबुद्धेरिव उत्कृष्टे ब्रह्मणि निकृष्टमनस्त्वादिबुद्धेरभ्युदयहेतुत्वायोगात । इत्थं च मनःप्रभृतीन्येव ब्रह्मत्वेनोपास्यानि, तेषां चोपासकं प्रत्यात्मत्वाभावान्न तेष्वात्मत्वानुसन्धानं कार्यमिति । भगवतः श्रीनिवासस्यैव जगत्कारणब्रह्मरूपताया ईक्षत्यधिकरणादिषु व्यवस्थापितत्वात्, अस्मिन् पद्ये **यद्दृष्ट्योपास्यानां** इत्युक्तम् ॥

१२६ ॥ इति प्रतीकाधिकरणम् ॥ ३ ॥

---

[1] छा.३.१८.१. [2] छा.७.१.५

## ४ ॥ आदित्यादिमत्यधिकरणम् ॥ ४ ॥

पूर्वाधिकरणे देवताया उत्कृष्टत्वान्निकृष्टेषु मनःप्रभृतिषु उत्कृष्टदेवतात्वबुद्धिरेव कर्तव्येत्युक्तम् । तन्नोपपद्यत इत्याक्षेपपरिहाराय प्रवृत्तमिदमधिकरणम् ॥

## आदित्यादिमतयश्चांग उपपत्तेः ॥ ४-१-६ ॥

क्रत्वङ्गे उद्गीथादौ आदित्यादिबुद्धय एव कर्तव्याः । तेषामादित्यादीनामेवोत्कर्षोपपत्तेरिति सूत्रार्थः ॥

यदुपासनसहकारिक्रत्वङ्गोद्गीथ एव तु निकृष्टे ।
आदित्यदृष्टिरुचिता तद्ब्रह्म श्रीनिवासनाम भजे ॥ १५७ ॥

स्पष्टोऽर्थः ॥

### पूर्वपक्षः ।

छान्दोग्ये [1]"य एवासौ तपति तमुद्गीथमुपासीत" इत्युद्गीथोपासनं विहितम् । अत्र क्रतोः फलसाधनत्वेन तदङ्गस्योद्गीथस्य फलं प्रत्यसाधनभूतादादित्यादेरुत्कृष्टतया निकृष्टे उत्कृष्टदृष्टेर्न्याय्यत्वेन च आदित्ये उद्गीथदृष्टिरेव कर्तव्या । किञ्च [1] "य एवासौ तपति" इति यच्छब्दनिर्देशात् प्रथमनिर्देशाच्च आदित्यस्योद्देश्यत्वप्रतीत्या आदित्योद्देशेन उद्गीथदृष्टेर्विधित्सितत्वावगमादपि आदित्याख्यदेवतायामुद्गीथदृष्टिरेव कर्तव्येति ॥

### सिद्धान्तः ।

क्रतोः देवताराधनत्वेन देवताया एव प्रधानत्वात्तदाराधितदेवताप्रसादस्यैव फलजनकत्वाच्च देवताया एवोत्कृष्टत्वेन उद्गीथे उत्कृष्टदेवतादृष्टिरेव कर्तव्या । [1] "य एवासौ तपति" इति यच्छब्दनिर्देशस्यारम्भकत्वं तु उक्तानुपपत्त्या सह इति ॥

---

[1] छा १.३.१.

सर्वासां परविद्यानां श्रीनिवासविषयतायाः लिङ्गभूयस्त्वाधिकरणे निर्णीतत्वात् क्रतूनां परविद्यासहकारितायाः [2] "सहकारित्वेन च" इति सूत्रे निर्णीतत्वादुद्गीथोपासनस्य क्रतुफलप्रतिबन्धरूपफलसाधनतायास्तन्निर्धारणानियमाधिकरणे व्यवस्थापनेन क्रतूनां विद्यासहकारिताप्रकारस्य निवृत्तत्वाच्च अस्मिन् पद्ये यद्विद्यासहकारिक्रत्वङ्गोद्गीथ इत्युक्तम् ॥

१२७ ॥ इति आदित्यादिमत्यधिकरणम् ॥ ४ ॥

---

५ ॥ आसीनाधिकरणम् ॥ ५ ॥

आवृत्त्यधिकरणे ध्यानरूपस्य भगवदुपासनस्य मोक्षसाधनत्वं निर्णीतम् । तदनुष्ठाने आसननियमानपेक्षाशङ्कावारणाय प्रवृत्तमिदमधिकरणम् ॥

## आसीनस्संभवात् ॥ ४–१–७ ॥

[ध्यानाच्च ॥ ८ ॥
अचलत्वं चापेक्ष्य ॥ ९ ॥
स्मरन्ति च ॥ १० ॥
यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥]

आसीनः–मृद्वासने उपविष्टस्सन्, ध्यानं कुर्यात्, उपविष्टस्यैवैकाग्र्यचित्ततासंभवात् इति सूत्रार्थः ॥

यदुपासनमपि नियमादासीनेनैव कर्तव्यम् ।
ऐकाग्र्यसिद्धिहेतोः तद्ब्रह्म श्रीनिवासनाम भजे ॥ १५८ ॥

ऐकाग्र्यसिद्धिहेतोः–एकाग्रचित्ततासिद्ध्यर्थम् । शिष्टं स्पष्टम् ॥

---

[2] शा सू ३ ४ ३३

पूर्वपक्षः ।

ध्यानानुष्ठाने उपवेशनादिनियमाश्रवणादुपविष्टस्तिष्ठन् गच्छन् शयानो वा ध्यानं कुर्यात इति ॥

सिद्धान्तस्तु—ध्यानस्य चित्तविक्षेपाभावसापेक्षत्वात्, स्थितिगमनयोश्शरीरधारणाय प्रयत्नस्यापेक्षितत्वेन चित्तविक्षेपसम्भवात्, शयने निद्रासम्भवात्, ध्येयवस्त्वितरविषयकचिन्ताव्यवधानरहितस्मृतिसन्ततेरेव ध्यानरूपत्वान्निश्चलेष्वेव वस्तुषु ध्यायतिशब्दप्रयोगेन ध्यानस्य निश्चलत्वसापेक्षत्वावगमात्, [1] "शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः । उपविश्याऽऽसने युञ्ज्याद्योगमात्मविशुद्धये" इत्यादिस्मृतिषु उपविष्टस्यैव ध्यानानुष्ठानस्मरणात्, चित्तस्य विषयान्तरसञ्चाररहित्यरूपैकाग्रतातिरिक्तहेतोर्ध्याने अनपेक्षितत्वाच्च यस्मिन् देशे यस्मिन् काले चित्तविक्षेपो न सम्भवति, तस्मिन् देशे तस्मिन् काले सापाश्रये आसने उपविष्टेन ध्यानं कार्यमिति ॥

सर्वासां परविद्यानां श्रीनिवासविषयकतायाः पूर्वमेवोक्तत्वात् **यदुपासने** इत्युक्तम् ॥

१२८ ॥ इति आसीनाधिकरणम् ॥ ५ ॥

---

६ ॥ आप्रयाणाधिकरणम् ॥ ६ ॥

अपवर्गसाधनमिदं ब्रह्मोपासनं आमरणादनुवर्तनीयमिति शङ्कावारणाय प्रवृत्तमिदमधिकरणम् ॥

## आप्रयाणात्तत्रापि हि दृष्टम् ॥४-१-१२॥

तदिदमपवर्गसाधनं ब्रह्मोपासनं, आप्रयाणात्-मरणपर्यन्तं अनुष्ठेयं, हि-यत, तत्रापि आमरणादनुवर्तनीयत्वेऽपि शास्त्रं दृश्यते इति सूत्रार्थः ॥

---

[1] गी ६ ११

यावज्जीवं कार्यं यदुपासनमन्वहं ध्याता ।
श्रुतिषु तथैव विधानात् तद्ब्रह्म श्रीनिवासनाम भजे ॥१५९॥

स्पष्टोऽर्थः ॥

पूर्वपक्षः ।

साक्षात्कारावस्थापन्नतैलधारावदविच्छिन्नस्मृतिसन्ततिरूपस्य ध्यानस्य यावता कालेन निष्पत्तिः तावन्तं कालमेवोपासनं कर्तव्यमिति ॥

सिद्धान्तस्तु [1] "स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते" इति श्रुतौ ब्रह्मप्राप्तिसाधनस्य तदुपासनस्य आयुस्समाप्तिपर्यन्तमनुष्ठेयताश्रवणात् ब्रह्मोपासनस्य कतिपयकालेन निष्पादनसंभवेऽपि आमरणमनुवर्तनं कार्यं, अन्यथा शास्त्रोल्लङ्घनप्रसङ्गादिति । [1] "स खल्वेवं वर्तयन्" इत्युदाहृतछान्दोग्यश्रुतौ तच्छब्देन पूर्वविहितदहरविद्यादिब्रह्मविद्यानिष्ठपरामर्शात् तत्तद्ब्रह्मविद्यानां श्रीनिवासाख्यभगवद्विषयतया निरूपितत्वात् **ध्याता यदुपासनमन्वहं कार्यं** इत्युक्तम् ॥

१२९ ॥ इति आप्रयाणाधिकरणम् ॥ ६ ॥

---

७ ॥ तदधिगमाधिकरणम् ॥ ७ ॥

इयता ग्रन्थेन विद्यास्वरूपं निरूपितम् । इतः परं विद्याफलं निरूप्यते ॥

वेद्यस्य भगवतः श्रीनिवासस्य निरतिशयानन्दरूपतया निरतिशयकल्याणगुणवत्तया च तच्चिन्तनस्य निरतिशयानन्दरूपतया अपवर्गोपायभूतस्यापि तस्य फलत्वस्यापि संभवात्, अस्मिन् फलाध्याये तच्चिन्तनमिति प्रागेव निरूपितम् ॥

---

[1] छा.८.१५.१.

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥४-१-१३॥

ब्रह्मविद्यानिष्ठस्य तदधिगमे-साक्षात्कारावस्थापन्नब्रह्मविद्याप्राप्तौ सत्यां ब्रह्मविदात उत्तरपूर्वाघयोः अश्लेषविनाशौ—ब्रह्मविदात. पूर्वं कृताना पापकर्मणा विनाश, तदुत्पत्त्यनन्तरं कृतानां पापकर्मणा अश्लेषश्च भवत इत्यर्थः । तत्र प्रमाणमाह तद्व्यपदेशात् इति । श्रुतिषु तथाव्यपदेशात् इति सूत्रार्थः ॥

अभ्यासाद्यदुपास्तेर्दर्शनसमरूपतासिद्धौ ।
तत्पूर्वविरचितानां निश्शेषं भवति पाप्मनां नाशः ॥१६०॥
उत्तरकालकृतानां प्रामादिकपाप्मनामसंश्लेषः ।
यद्विद्यामाहात्म्यात् तद्ब्रह्म श्रीनिवासनाम भजे ॥ १६१ ॥

यदुपासनस्य - श्रीनिवासोपासनस्य, अभ्यासात् - असकृदावृत्ते विशदतमत्वरूपसाक्षात्कारत्वावस्थासिद्धौ विद्यामाहात्म्यात् - विद्यारम्भापूर्वं कृताना दुष्कृतकर्मणा, नाशः - विद्यारंभोत्तरकालकृतानामबुद्धिपूर्वकपापानामसंश्लेषश्च भवत, तद्ब्रह्म इति पूर्ववत् ॥

छान्दोग्ये उपकोसलविद्याप्रकरणे [1]"यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते" इति, तत्रैव वैश्वानरविद्याप्रकरणे [2]"यथेषीकतूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मान प्रदूयन्ते" इति च तत्रैव ब्रह्मविद्याफलं श्रूयते। तत्र विद्योत्पत्त्युत्तराघाणा अश्लेष, तत्पूर्वकृतपापानां विनाशश्च अर्थस्वभावान्निश्चीयते ॥

तत्र पूर्वपक्षः— [3]"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति ब्रह्मवैवर्ते प्रकृतिखण्डे षड्विंशेऽध्याये कर्मणां फलानुभवं विना नाशासंभवोक्तेस्तयां

[1] छां ४ १४ ३. [2] छां ५ २४ ३ [3] ब्रह्मवैवर्ते प्रकृतिख २६ ७०.

प्रायश्चित्तेन नाशसंभवेऽपि ब्रह्मविद्यायाः पापानां प्रायश्चित्तत्वे मानाभावाच्च ब्रह्मविद्याया ईदृशफलोक्तिः स्तुतिरूपा इति ॥

सिद्धान्तस्तु ब्रह्मविद्यया पूर्वकृतानां पापानां नाशस्य उत्तरकृतानां पापानामश्लेषस्य च शास्त्रेणोच्यमानत्वात्तत्रानुपपत्तिविरहाच्च ब्रह्मविद्यया अश्लेषविनाशौ संभवत एव। [3]"नाभुक्तं क्षीयते कर्म" इति वचनेन कर्मणां फलजननशक्तिः फलानुभवपर्यन्तावस्थायिनी प्रतिपाद्यते ; कर्मणामाशुतरविनाशित्वेन तन्नाशाभावस्य वक्तुमशक्यत्वात्। [3]"तद्यथेषीक" इत्यादिश्रुत्या तु उत्पन्नायाः कर्मणां फलजननशक्तेः ब्रह्मविद्यया नाशः प्रतिपाद्यते। अत इदमुभयं न विरुद्ध्यते। यथा 'अग्निर्दहति' 'जलं तं शमयति' इति वचनद्वयं न विरुद्ध्यते, तद्वत्। एवमुत्तराघानामश्लेषश्रुत्या तेषां कर्मणां फलजननशक्त्युत्पत्तिप्रतिबन्धः क्रियते इति प्रतिपाद्यते। अत इदमपि न विरुद्धम्। अतो ब्रह्मविद्यायाः पूर्वोत्तरपापविनाशाश्लेषयोरुक्तरूपयोः करणत्वस्य श्रुतिषु प्रतिपादनं न विद्यास्तुतिमात्रम्। एवं [4]"प्रायश्चित्तैरपैत्येनः" इत्यादिषु प्रायश्चित्तैरपि पापनाशस्मरणात् [5]"नाभुक्तं क्षीयते कर्म" इति वचनं अकृतप्रायश्चित्तपापविषयं वाच्यम्। इत्थं च [6]"प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै। यानि तेषामशेषाणां कृष्णानुस्मरणं परम्" इति कृष्णानुस्मरणरूपब्रह्मविद्यायाः सर्वेषु प्रायश्चित्तेषु उत्तमत्वस्मरणात् तया सर्वपापनाशो युक्त एव। अन्यथा अनादिकालोपचितानामनन्तानां पापानां उत्तरोत्तरशरीरारंभकतया कदाचिदपि निश्शेषनाशासंभवेन मोक्षशास्त्रस्यानर्थक्यमेव स्यात्। अत्र कर्मणां फलजननशक्तिर्नाम परमात्मनस्तत्तत्कर्मफलप्रदानसङ्कल्परूपा, नातिरिक्ता। [7]"तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु" इति दुष्कर्मकरणे भगवतो निग्रहसङ्कल्पस्य, [8]"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इत्यादिषु सत्कर्मकरणे भगवदनुग्रहसङ्कल्पस्य च प्रतिपादनात्।

---

4 — 6 ब्रह्मवैवर्ते प्रकृतिख २६ ७०. 6
7 गी. १६ १९. 8 गी १० १०.

ततश्च विद्योत्पत्तिपूर्वकृतानां पापकर्मणां भगवदीयफलप्रदानसङ्कल्पनिवृत्तिः, विद्योत्तरकालकृतानां दुष्कृतकर्मणां फलप्रदानसङ्कल्पानुत्पत्तिश्च ब्रह्मविद्यया भगवतः प्रीत्यतिशयोत्पादनेन क्रियत इति न काऽप्यनुपपत्तिः ॥

[9]"नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात्" इत्यादिषु ब्रह्मविद्यानिष्ठस्यापि दुष्कर्मकरणनिषेधात् पूर्वोदाहृतश्रुतौ उत्तराघाश्लेषोक्तिः, अबुद्धिपूर्वकृतोत्तराघविषया अवगन्तव्या । यद्यपि [10]"सांपराये तर्तव्याभावात्" इति सूत्रे सुकृतदुष्कृतयोर्देहावसाने निश्शेषनाशः प्रतिपादितः; अस्मिन्नधिकरणे तु देहे स्थितस्यैव विदुषः दर्शनसमानाकारानन्यापन्नब्रह्मविद्यामात्रानन्तरमेव दुष्कृतनाशप्रतिपादनेन पूर्वोत्तरविरोधः प्रतीयते, तथाऽपि ब्रह्मविद्यारंभे 'यद्ययमुपक्रान्तं ब्रह्मोपासनं समापयेत् तर्ह्यस्य दुष्कृतरूपं कर्म क्षमिष्यामि' इति सङ्कल्पोऽस्मिन् सूत्रे विवक्षितः । देहावसाने क्षान्तमिति सङ्कल्पः सांपराये इति सूत्रे विवक्षितः । अतो न विरोधः । यद्यपि ब्रह्मविद्यायाः प्रायश्चित्तरूपतया पूर्वाघानां तया विनाशोऽस्मिन् सूत्रे विवक्षितः, ततश्च तया उत्तराघानामश्लेषवचनमनुपपन्नं नैमित्तिकस्य निमित्तोत्पत्त्यनन्तरभावित्वनियमेन तदानीमनुत्पन्नमुत्तराघं प्रति तस्याः प्रायश्चित्तत्वासंभवात्, तथाऽपि पूर्वाघं प्रत्येव ब्रह्मविद्यायाः प्रायश्चित्तत्वं अस्मिन् सूत्रे विवक्षितम् । उत्तराघस्याश्लेषवचनं तूपासनारंभजनितप्रीत्यतिशयेन भगवतस्तत्र निग्रहसङ्कल्पानुत्पत्तिपरमेवेति नानुपपत्तिरिति द्रष्टव्यम् । अत्र [11]"एवंविदि पापं कर्म न श्लिष्यते" इत्यस्याः श्रुतेः उपकोसलविद्यानिष्ठविषयकत्वात् [12]"तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति श्रुतेः वैश्वानरविद्यानिष्ठविषयत्वात् तयोश्च विद्ययोरन्तराधिकरण वैश्वानराधिकरणयोः श्रीनिवासापरनामधेयब्रह्मविषयकत्वस्य पूर्वमेव निरूपितत्वात्, अस्मिन् पद्ये अभ्यासाद्युपास्तेः इत्युक्तम् ॥

१३० ॥ इति तदधिगमाधिकरणम् ॥ ७ ॥

---

[9] कठ.२.२४. [10] ३.३.२७ [11] छा.४.१४.३. [12] छा.५.२४.३.

## ८ ॥ इतराधिकरणम् ॥ ८ ॥

पूर्वाधिकरणे पूर्वोत्तरयोः पापयोर्विनाशाश्लेषावुक्तौ । इदानीं पूर्वोत्तरयोः सुकृतयोर्विनाशाश्लेषौ उच्येते ॥

## इतरस्याप्येवमसंश्लेषः पाते तु ॥४-१-१४॥

इतरस्य-सुकृतस्य अपि विद्यारंभात्पूर्वोत्तरकालकृतस्य, एवं-पूर्वोक्तन्यायेन विनाशः, असंश्लेषश्च भवति। असंश्लेषस्तु शरीरपातात् ऊर्ध्वं भवतीति सूत्रार्थः ॥

यद्विद्ययैव भवतः पूर्वोत्तरसुकृतसंक्षयाश्लेषौ ।
अश्लेषो देहान्ते तद्ब्रह्म श्रीनिवासनाम भजे ॥ १६२ ॥

स्पष्टोऽर्थः ॥

### पूर्वपक्षः ।

विदुषो विद्यारंभात्पूर्वोत्तरकालकृतयोस्सुकृतयोरनिष्टफलत्वाभावात्, [1]"एवं विदि पापं कर्म न श्लिष्यते सर्वे पाप्मानः प्रदूयन्ते" इति पूर्वोदाहृतश्रुतौ पापानामेवाश्लेषविनाशप्रतिपादनाच्च, तयोः विनाशाश्लेषौ न भवत इति ॥

सिद्धान्तस्तु दुष्कृतकर्मणो मोक्षरूपविद्याफलविरोधित्वाद्धि ब्रह्मविद्यया तस्य नाशोऽश्लेषश्चोदाहृतश्रुत्या प्रतिपाद्यते, तद्वत् सुकृतफलस्य स्वर्गादेरपि मोक्षरूपविद्याफलविरोधित्वाविशेषेण सुकृतस्यापि ब्रह्मविद्यानिष्ठं प्रति अनिष्टफलसाधनत्वात्, [2]"न सुकृतं न दुष्कृतं, सर्वे पाप्मानोऽतो निवर्तन्ते" इति छान्दोग्यदहरविद्याप्रकरणस्थश्रुत्यन्तरे दुष्कृत इव सुकृतेऽप्यनिष्टफलसाधनत्वेन पाप्मशब्दप्रयोगदर्शनात् । कौषीतक्युपनिषदि [3]"तत्सुकृतदुष्कृते धूनुते" इति सुकृतस्यापि हानश्रवणाच्च पूर्वोक्तयोस्सुकृतयोरपि विद्यामाहात्म्यात् विनाशोऽ

[1] छा.४.१४.३. [2] छा.८.१४.१. [3] कौषी.१.४.

श्लेषश्च यथाक्रमं भवति। परं तु विद्यानुष्ठानौपयिकशरीरधारणानुकूलवृष्ट्यन्ना-रोग्यादिफलसाधनानां सुकृतकर्मणां देहपातानन्तरमसंश्लेषो भवतीति॥

पद्ये यद्विद्यया इत्युक्तेन्वात्पर्यं पूर्वश्लोके उक्तम्॥

१३१॥ इति उत्तराधिकरणम्॥ ८॥

---

## ९॥ अनारब्धकार्याधिकरणम्॥ ९॥

पूर्वाधिकरणे ब्रह्मविद्योत्पत्तेः पूर्वकृतयोः सुकृतदुष्कृतयोर्नाश उक्तः। तत्र विशेषाश्रवणात् सर्वेषां नाश इति शङ्कावारणाय प्रवृत्तमिदमधिकरणम्॥

## अनारब्धकार्ये एव तु पूर्वे तदवधेः॥४-१-१५॥

**पूर्वे** - विद्यारम्भात् पूर्वे सुकृतदुष्कृते, **अनारब्धकार्ये एव** - फलदानाप्रवृत्ते एव नश्यतः, फलदानप्रवृत्तकर्मणां नाशस्य अवधिश्रवणात् इति सूत्रार्थः॥

**पूर्वकृतयोर्द्वयोरपि फलदानायाप्रवृत्तयोरेव।**
**यद्विद्यया विनाशस्तद्ब्रह्म श्रीनिवासनाम भजे॥ १६२॥**

द्वयोः इति। सुकृतदुष्कृतयोरित्यर्थः॥

### पूर्वपक्षः।

[1]"एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति श्रुतौ सर्वेषामेव सुकृतानां दुष्कृतानां च नाशश्रवणात्, विद्यारम्भसमये तत्पूर्वकृतानां सर्वेषामेव कर्मणां नाशः। न चैवं सर्वकर्मविनाशे विदुषो देहारम्भककर्मणो विनष्टत्वात् देहस्थित्यनुपपत्तिरिति वाच्यम्। कुलालकर्तृकचक्रभ्रमणानुकूलव्यापारोपरमेऽपि संस्कारवशात् कतिपयकालं चक्रभ्रमणानुवृत्तिवत् प्रकृतेऽपि देहानुवृत्त्युपपत्तेरिति।

---

[1] छा ५-२४-३

## सिद्धान्तः ।

[1]"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" इति छान्दोग्य-सद्विद्याप्रकरणश्रुतौ विदुषः कर्मविनाशस्य देहपातावधिविलम्बश्रवणेन फलदानाय प्रवृत्तकर्मणामादेहपातमनुवृत्तिलाभात्, कर्मणां नाशे तत्संस्कारस्याप्रामाणिकत्वाच्च, फलदानप्रवृत्तेतरकर्मणामेव ब्रह्मविद्यारंभसमये नाश इति । यावत् न विमोक्ष्ये-यावद्देहान्न मुक्तो भवति, तस्य-विदुषः, तावदेव चिरं–ब्रह्मप्राप्तौ तावानेव विलम्बः । अथ-देहमोक्षानन्तरं, संपत्स्ये-ब्रह्म प्राप्नोति इति श्रुत्यर्थः । 'विमोक्ष्ये' 'संपत्स्ये' इत्युभयत्र पुरुषव्यत्ययश्छन्दसः । अत्रापि यद्विद्यया इत्युक्तेस्तात्पर्यं पूर्ववत् ॥

१३२ ॥ इति अनारब्धकार्याधिकरणम् ॥ ९ ॥

---

## १० ॥ अग्निहोत्राद्यधिकरणम् ॥ १० ॥

पूर्वाधिकरणे ब्रह्मविद्योत्तरकृतसुकृतकर्मणामश्लेषस्योक्ततया सुकृतफला-निच्छायां तस्याननुष्ठेयत्वशङ्कावारणाय प्रवृत्तमिदमधिकरणम् ॥

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥४-१-१६॥

[अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

यदेव विद्ययेति हि ॥ १८ ॥]

अत्र तुशब्दः नित्यनैमित्तिकेतरसुकृतकर्मवैलक्षण्यद्योतकः । ततश्च नित्यं नैमित्तिकं च अग्निहोत्रादि आश्रमकर्म, तत्कार्यायैव-विद्योत्पत्तिरूप-कार्यार्थमेवानुष्ठेयम्; यज्ञादीनां नित्यनैमित्तिककर्मणां विद्यार्थतायाः श्रुतौ दर्शनात् इति सूत्रार्थः ॥

---

1 छा.६.१४.२.

सर्वेऽप्याश्रमधर्मा अनिच्छता चापि तत्फलं विदुषा।
यद्विद्यार्थं कार्यास्तद्ब्रह्म श्रीनिवासनाम भजे॥ १६४॥

स्पष्टोऽर्थः॥

## पूर्वपक्षः।

पुण्यफलस्य विद्ययाऽश्लेषे अग्निहोत्रादिसुकृतकर्मणस्तत्फलमनिच्छतोनुष्ठानवैयर्थ्यात्तन्नानुष्ठेयमिति॥

## सिद्धान्तः।

[1]"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुतौ यज्ञाद्याश्रमधर्माणां विद्योत्पत्त्यर्थतया तदङ्गत्वश्रवणेन तत्परित्यागे विद्योत्पत्तिरेव न सिद्ध्येत्। विद्या हि यावज्जीवमहरहरावर्तनीयेति [2]"स खल्वेवं वर्तयन्यावदायुषं" इति श्रुतिसिद्धम्। विद्याया अहरहरावृत्तिश्च विद्योत्पत्तिप्रतिबन्धकनिरासेन विना न सम्भवति। प्रतिबन्धकनिरासश्च नित्यनैमित्तिककर्मभिराराधितभगवदनुग्रहैकसाध्य। अतो नित्यनैमित्तिककर्मणां परित्यागे प्रतिबन्धकनिरासासिद्ध्या विद्याया अहरहरावृत्तिसिद्ध्यसम्भवात् अग्निहोत्रादिकं नित्यनैमित्तिकं कर्म तत्फलमनिच्छताऽपि अहरहरनुष्ठेयमेव।

नन्वेवं विदुषो नित्यनैमित्तिकसुकृतकर्मणामग्निहोत्रादीनां विद्योत्पादनेन दत्तफलत्वात् विद्योत्पत्तेः पूर्वकृतानां सुकृतकर्मणां स्वर्गादिफलभोगेन नष्टत्वात् भुक्तावशिष्टानां सुकृतानां फलदानाय प्रवृत्तत्वादवशिष्यमाणसुकृतासम्भवात् [3]"तस्य पुत्रा दायमुपयन्ति सुहृदस्साधुकृत्या" इति श्रुतेर्विषयो दुर्लभ। ततश्च विद्योत्पत्तेः पूर्वं कृतानां पश्चात् बुद्धिपूर्वकृतानां च अदत्तफलानां पापकर्मणां सत्त्वेन [3]"द्विषन्तः पापकृत्या" इत्यस्य विषयसम्भवेऽपि [3]"सुहृदस्साधुकृत्या" इति श्रुतेर्निर्विषयत्वमेव स्यात् इति चेत्; उच्यते—विद्योत्पत्तेः पूर्वं पश्चाच्च कृतेषु वृष्ट्यन्नादिहेतुभूतेषु

---

[1] बृ ६.४.२२. [2] छा ८ १५ १. [3] शाट्यायनब्रा.

पुण्यकर्मस्वनारब्धफलानां प्रबलकर्मप्रतिबद्धफलानां च केषांचित् संभवेन [8]"सुहृदस्साधुकृत्यां" इत्यादिश्रुतेस्तद्विषयकत्वोपपत्तिः। सूच्यते हि [1]"यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति" इति उद्गीथविद्यया क्रियमाणस्य कर्मणः प्रबलकर्मभिः प्रतिबन्धाभाववचनेन उद्गीथोपासनरहितकर्मणः प्रबलकर्मभिः फलप्रतिबन्धसंभवः। यद्यपि [2]"सहकारित्वेन च" इति सूत्रे नित्यनैमित्तिककर्मणां विद्यार्थत्वेनानुष्ठेयत्वं व्यवस्थापितमेव, तथाऽपि यज्ञादीनां नित्यनैमित्तिककर्मणां विद्याङ्गत्वे आश्रमाङ्गत्वे चाङ्गीक्रियमाणे नित्यानित्यसंयोगशङ्कापरिहाराय 'सहकारित्वेन' इति सूत्रं प्रवृत्तम्। इह तु मुमुक्षुकर्मणां फलाश्लेषाभ्युपगमे फलानिच्छायां नित्यनैमित्तिकमुमुक्षुकर्मणां अनुष्ठेयतानियमो न स्यादिति शङ्कावारणाय "अग्निहोत्रादि तु" इति सूत्रं प्रवृत्तमित्यपौनरुक्त्यं द्रष्टव्यम्। **यद्विद्यार्थं कार्या** इत्यस्य तात्पर्यं पूर्ववत् इति॥

१३३॥ इति अग्निहोत्राद्यधिकरणम्॥ १०॥

---

## ११॥ इतरक्षपणाधिकरणम्॥ ११॥

अनारब्धकार्ययोः पुण्यपापयोः विद्यया विनाशः पूर्वमुक्तः। आरब्धकार्ययोर्विनाशे विशेषप्रतिपादनाय प्रवृत्तमिदमधिकरणम्॥

## भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते ॥४-१-१९॥

तुशब्दः पक्षव्यावर्तकः। इतरे-फलदानाय प्रवृत्ते पुण्यपापे, **भोगेन**-फलानुभवेन, क्षपयित्वा-विनाश्य, अथ-अनन्तरं, ब्रह्म संपद्यते - ब्रह्म प्राप्नोतीति सूत्रार्थः॥

---

[1] छा. १ १ १०.　　[2] ३ ४ ३३

यदुपासकस्य पुंसः फलदानाय प्रवृत्तकर्माणि ।
नाश्यानि तदुपभोगात् तद्ब्रह्म श्रीनिवासनाम भजे॥१६५॥

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य कलाप्रपूर्णस्य
श्रीदेशिकाचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालायां
चतुर्थाध्यायस्य प्रथमः पादः॥

स्पष्टोऽर्थः॥

पूर्वपक्षः ।

[1]"तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सपत्स्ये" इति श्रुतौ विदुषो ब्रह्मप्राप्तौ देहपातावधि विलम्बश्रवणात् आरब्धफलयोरपि पुण्यपापयोर्विद्यायोनिशरीरावसान एव नाश इति॥

सिद्धान्तः ।

फलदानप्रवृत्तयोः पुण्यपापयोः फलानुभवमन्तरा नाशासंभवेन कर्मणां चैकशरीरेणैव फलभोग इति नियमाभावेन येन शरीरेण फलभोगसमाप्तिः तच्छरीरावसाने सुकृतदुष्कृतयोर्नाशः । [1]"तस्य तावदेव चिरं" इति श्रुतिरपि कर्मविमोक्षाभिप्रायेति॥

अस्मिन्पादे ब्रह्मविद्यानिष्ठस्य देहेऽवस्थानदशायां विद्यामाहात्म्यकृतं फलं निरूपितम् । तत्र विद्यारंभात्पूर्वमनादिकालादारभ्य कृतत्वेनानन्तयोः फलदानायाप्रवृत्तयोस्सुकृतदुष्कृतयोः अग्निकणेन तूलराशेरिव निश्शेषविनाशः । विद्यारंभात्परं कृतस्य प्रामादिकस्य दुष्कृतकर्मणः फलाश्लेषः । नष्टस्य तदीयपुण्यराशेः तत्सुहृत्सु संक्रमः, पापराशेः तस्मिन् द्विषत्सु संक्रम इत्येवं रूपं ईदृशी विद्येति विद्यामाहात्म्यं चिन्तितम् । अत्र विदुषः सुकृतदुष्कृतयोर्नाशो नाम 'अनयोः फलमस्मै न दास्यामि' इति भगवत्संकल्पः । सुहृत्सु दुष्कृत्सु च

[1] छा.६.१४.२

१३ ॥ मनोऽधिकरणम् ॥ २ ॥

## तन्मनः प्राण उत्तरात् ॥४-२-३॥

तत्-वागादीन्द्रियसहितं मनः, प्राणे संपद्यते-प्राणेन संयुज्यते; "[1]मनः प्राणे" इत्यनन्तरश्रुतिवाक्यादित्यर्थः ॥

सर्वेन्द्रियसंयुक्तं मनस्तु सङ्कल्पतो यस्य ।
प्राणेन भवति युक्तं तद्ब्रह्म श्रीनिवासनाम भजे ॥ १६७ ॥

स्पष्टोऽर्थः ॥

अत्रेयमधिकाऽऽशङ्का-[2]"अन्नमयं हि सोम्य मन" इति मनइन्द्रियस्य पृथिवीविकृतिभूतान्नविकृतित्वाभिधानात्, [3]"आपोमयः प्राण" इति प्राणस्य अब्विकृतित्वाभिधानाच्च मनसः परंपरया स्वोपादानभूतपृथिवीद्वारा प्राणोपादानभूतास्वप्सु लयसंभवात् 'मनः प्राणे संपद्यत' इत्यत्र मनइन्द्रियस्य प्राणे लय एव प्रतिपाद्यते इति ॥

परिहारस्तु-[3]"अन्नमयं हि सोम्य मनः आपोमयः प्राण" इत्यत्र मनसः अन्नेन, प्राणस्य अद्भिश्च कार्यक्षमतापादनरूपमाप्यायनमात्रमुच्यते । न तु प्रकृतिविकृतिभावः, मनसोऽहङ्कारप्रकृतिकत्वात् प्राणस्याकाशप्रकृतिकत्वाच्चेति ॥

१३६ ॥ इति मनोऽधिकरणम् ॥ २ ॥

---

१४ ॥ अध्यक्षाधिकरणम् ॥ ३ ॥

## सोऽध्यक्षे तदुपगमादिभ्यः ॥४-२-४॥

सः-सर्वेन्द्रियसहितः प्राणः, अध्यक्षे-सर्वेन्द्रियाधिपे जीवे, संपद्यते-जीवेन संयुज्यते । तत्र प्रमाणं तदुपगमादिभ्य इति । तदुपगमः-जीवात्मप्राप्तिः ; आदिशब्देन उत्क्रान्तिः प्रतिष्ठा च गृह्यते ॥

---

[1] छा.६.८.६. [2] [3] छा ६.६.५.

**सर्वेन्द्रियाणि जन्तोर्मरणदशायां यदीयमङ्कल्पात् ।**
**संयुज्यन्ते मनसा तद्ब्रह्म श्रीनिवासनाम भजे ॥ १६६ ॥**

स्पष्टोऽर्थः ॥

## पूर्वपक्षः ।

छान्दोग्ये [1]"अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवतायाम्" इति श्रूयते। अत्र 'वाङ्मनसि सम्पद्यते' इत्यत्र वागिन्द्रियस्य मनसि लयो न प्रतिपाद्यते, वागिन्द्रियस्य मनःकार्यत्वाभावात्, किन्तु वाग्व्यापारस्य स्वकारणे मनसि लयः प्रतिपाद्यते इति ॥

## सिद्धान्तः ।

वाग्व्यापारं प्रत्यपि मनस उपादानकारणत्वाभावात् तत्र लयासंभवेन 'सम्पद्यते'इत्यस्य 'संयुज्यते' इत्यत्र लक्षणामाश्रित्य वाग्व्यापारो मनसा संयुज्यत इत्यर्थः पूर्वपक्षिणा वक्तव्यः । ततश्च वाक्पदस्य सम्पद्यत इत्यस्य चोभयोर्लक्षणाकल्पनाप्रसङ्गः । अतो वाक्पदं वागिन्द्रियपरमेव। ततश्च वागिन्द्रियमुपरतव्यापारं सन्मनसा संयुज्यत इत्येव श्रुत्यर्थः । अत एव प्रश्नोपनिषदि [2]"तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैर्यच्चित्तस्तेनैष प्राणमायाति" इति श्रुतौ सर्वेषामिन्द्रियाणां मनसि सम्पत्त्युक्तिरुपपद्यते, सम्पत्तेर्लयरूपत्वे सर्वेषामिन्द्रियाणां मनसि लयानुपपत्तेरिति ॥

अत्र [3]"प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः" इति श्वेताश्वतरोपनिषदि भगवतः श्रीनिवासस्य संसारबन्धनमोक्षहेतुत्वप्रतिपादनात् बन्धमोक्षान्तर्गतस्य सर्वस्य तत्सङ्कल्पसिद्धत्वमभिप्रेत्य अस्मिन् पद्ये **यदीयमङ्कल्पात् मनसा संयुज्यन्ते** इत्युक्तम् । एवमुत्तरत्रापि द्रष्टव्यम् ॥

१३५ ॥ इति वागधिकरणम् ॥ १ ॥

---

[1] छा ६ ८ ६ [2] प्रश्न [3] श्वे ६ १६

१३ ॥ मनोऽधिकरणम् ॥ २ ॥

## तन्मनः प्राण उत्तरात् ॥४-२-३॥

तत्-वागादीन्द्रियसहितं मनः, प्राणे संपद्यते-प्राणेन सयुज्यते; "[1]मनः प्राणे" इत्यनन्तरश्रुतिवाक्यादित्यर्थः ॥

सर्वेन्द्रियसंयुक्तं मनस्तु सङ्कल्पतो यस्य ।
प्राणेन भवति युक्तं तद्ब्रह्म श्रीनिवासनाम भजे ॥ १६७ ॥

स्पष्टोऽर्थः ॥

अत्रेयमधिकाऽऽशङ्का-[2]"अन्नमयं हि सोम्य मन" इति मनइन्द्रियस्य पृथिवीविकृतिभूतान्नविकृतित्वाभिधानान्, [3]"आपोमयः प्राण" इति प्राणस्य अब्विकृतित्वाभिधानाच्च मनसः परंपरया स्वोपादानभूतपृथिवीद्वारा प्राणोपादानभूतास्वप्सु लयसंभवात् 'मनः प्राणे संपद्यत' इत्यत्र मनइन्द्रियस्य प्राणे लय एव प्रतिपाद्यते इति ॥

परिहारस्तु-[3]"अन्नमयं हि सोम्य मन आपोमयः प्राण " इत्यत्र मनसः अन्नेन, प्राणस्य अद्भिश्च कार्यक्षमतापादनरूपमाप्यायनमात्रमुच्यते । न तु प्रकृतिविकृतिभावः, मनसोऽहङ्कारप्रकृतिकत्वात् प्राणस्याकाशप्रकृतिकत्वाच्चेति ॥

१३६ ॥ इति मनोऽधिकरणम् ॥ २ ॥

---

१४ ॥ अध्यक्षाधिकरणम् ॥ ३ ॥

## सोऽध्यक्षे तदुपगमादिभ्यः ॥४-२-४॥

सः-सर्वेन्द्रियसहितः प्राणः, अध्यक्षे-सर्वेन्द्रियाधिपे जीवे, संपद्यते-जीवेन संयुज्यते । तत्र प्रमाणं तदुपगमादिभ्य इति । तदुपगमः-जीवात्मप्राप्तिः; आदिशब्देन उत्क्रान्तिः प्रतिष्ठा च गृह्यते ॥

---

[1] छा ६ ८.६. [2] [3] छा ६ ६ ५

अयं भाव —[1]"एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति" इति जन्तोर्मरणकाले सर्वेषा प्राणाना जीवात्मना सयोगश्रवणात्, [2]"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति जीवेन सह प्राणस्य देहादुत्क्रान्तिश्रवणात्, [3]"कस्मिन्नुत्क्रान्ते उत्क्रान्तो भविष्यामि, कस्मिन् प्रतिष्ठिते प्रतिष्ठास्यामि" इति जीवेन सह देहादुत्क्रान्ते देहे प्रतिष्ठितत्वस्य च श्रवणाच्च सर्वेन्द्रियसहित प्राणोऽन्तकाले जीवात्मना सह सयुज्यत इति निश्चीयते इति ॥

करणसहितेन मनसा युक्तः प्राणस्तु पुरुषेण ।
यत्सङ्कल्पात् श्लिष्यति तद्ब्रह्म श्रीनिवासनाम भजे ॥१६८॥

श्लिष्यति सयुज्यते । शिष्टं स्पष्टम् ॥

## पूर्वपक्षः ।

पूर्ववाक्ययोर्वाचो मनसश्च यथा मनसा प्राणेन च सम सयोग प्रतिपाद्यते, एव [4]"प्राणस्तेजसि" इत्यत्रापि प्राणस्य तेजसा सम सयोग प्रतिपाद्यते इति ॥

## सिद्धान्तः ।

यथा यमुनाया गङ्गया सम सयुज्य समुद्रगमनेऽपि 'यमुना समुद्र गच्छति' इति व्यवहारे नास्वारस्यं, एव प्राणस्य जीवेन सयुज्य तेन समं तेजस्सयोगेऽपि 'प्राणस्तेजसा सयुज्यत' इति व्यवहारे स्वारस्यहानिविरहात्, उत्क्रान्तिकाले प्राणस्य जीवेन सम संयोगस्य श्रुत्यन्तरे श्रवणाच्च प्राणो जीवेन सयुज्य तेन सम तेजसा सयुज्यते इति ॥

१३७ ॥ इत्यध्यक्षाधिकरणम् ॥ ३ ॥

---

[1] बृ ६ ३ ३८ [2] बृ ६ ४ २ [3] प्रश्न ६ ३ [4] छा ६ ८ ६

२५ ॥ भूताधिकरणम् ॥ ४ ॥

## भूतेषु तच्छ्रुतेः ॥४-२-५॥

[नैकस्मिन् दर्शयतो हि ॥ ६ ॥]

जीवसंयुक्तः प्राणः पृथिव्यादिभूतसूक्ष्मेषु संयुज्यते, जीवस्य सर्वभूतमयत्वश्रुतेः इति सूत्रार्थः ॥

प्राणः पुरुषेण युतो भूतैस्सह यस्य सङ्कल्पात् ।
संसृष्टो भवति तदा तद्ब्रह्म श्रीनिवासनाम भजे ॥ १६९ ॥

स्पष्टोऽर्थः ॥

### पूर्वपक्षः ।

[1]"प्राणस्तेजसि" इति प्राणस्य तेजसि संपत्तिश्रवणात्, प्राणस्य तेजोमात्रेण संसर्ग इति ॥

### सिद्धान्तः ।

बृहदारण्यके [2]"पृथिवीमय आपोमयस्तेजोमयः" इति इहामुत्र सञ्चरतो जीवस्य युगपत्सर्वभूतसंसर्गश्रवणात् भूतान्तरासंसृष्टस्यैकैकभूतस्य कार्याक्षमतायास्त्रिवृत्करणश्रुतिस्मृतिसिद्धतया कार्यारंभसिद्धये भूतानां परस्परसंसर्गस्यावश्यकत्वाच्च [1]"प्राणस्तेजसि" इत्यत्र तेजश्शब्दः पञ्चीकृततेजःपर एव वाच्यः । अतः सजीवः प्राणः भूतसूक्ष्मैस्सह संयुज्यते इति ॥

१३८ ॥ इति भूताधिकरणम् ॥ ४ ॥

---

२६ ॥ आसृत्युपक्रमाधिकरणम् ॥ ५ ॥

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥४-२-७॥

---

[1] छा.६.८.६. [2] बृ.६.४.५.

[तदापीतेस्संसारव्यपदेशात् ॥ ८ ॥
सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥
नोपमर्देनातः ॥ १० ॥
अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥
प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् ॥ १२ ॥
स्मर्यते च ॥ १३ ॥]

**आसृत्युपक्रमात्**—सृतिः अर्चिरादिमार्गः, तस्या **उपक्रमः** मूर्धन्य नाडीप्रवेशः, आ तस्मात् नाडीप्रवेशात् प्राक्, पूर्वप्रस्तुता उत्क्रान्तिः देहादुत्क्रमणं, **समाना**-ब्रह्मविदोऽब्रह्मविदश्च तुल्या श्रुतावुच्यमानं **अमृतत्वं, अनुपोष्य** देहेन्द्रियादिसम्बन्धमदग्ध्वैव, देहेन्द्रियादिसम्बन्धसद्भावकार्यमेवेति यावत्। 'उपोष्य' इति उपपूर्वात् 'उष दाहे' इति धातोर्ल्यपि रूपम् ॥

अयं भावः—इयमुत्क्रान्तिः ब्रह्मविदोऽब्रह्मविदश्च नाडीप्रवेशात् प्रागविशिष्टा। [1]"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते" इति श्रुतौ ब्रह्मविदोऽत्रैव प्राप्यतयोच्यमानममृतत्वं तु देहेन्द्रियादिसम्बन्धविनाशात्प्राक् प्राप्यमाणं ब्रह्मविद्योत्पत्तेः पूर्वोत्तरयोः पापयोर्विनाशाश्लेषरूपमिति ॥

**यदुपासननिष्ठानामितरेषां चेयमुत्क्रान्तिः।**
**यस्यच्छया समाना तद्ब्रह्म श्रीनिवासनाम भज ॥१७०॥**
स्पष्टोऽर्थः ॥

पूर्वपक्षः।

कठवल्लीषु [2] "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति श्रुतौ ब्रह्मविदोऽत्रैवामृतत्वस्य ब्रह्मप्राप्तेश्चाभिधानान्न तस्योत्क्रान्तिरिति ॥

---

[1] कठ २ ६ १४ [2] कठ २ ६ १४

## सिद्धान्तः ।

[1]"शतं चैका च हृदयस्य नाड्यः तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति कठवल्ल्यामेव तदुत्तरमन्त्रे ब्रह्मविदो मूर्धन्यनाड्या निष्क्रान्तस्यामृतत्वप्रतिपादनात्, अस्त्येवोत्क्रान्तिः । [2] "अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति श्रुतौ प्रतिपादितममृतत्वं तु न निश्शेषबन्धनिर्मोक्षरूपं, अपि तु ब्रह्मविद्यायाः पूर्वोत्तरयोरघयोर्विनाशाश्लेषरूपम् । तत्रोच्यमानब्रह्मप्राप्तिरपि उपासनदशायां ब्रह्मानुभवरूपा वाच्या । [2] "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इत्यादिषु ब्रह्मविदो यावद्ब्रह्मप्राप्ति देहबन्धानुवृत्तिश्रवणात् ब्रह्मप्राप्तेश्चार्चिरादिमार्गेण देशविशेषप्राप्त्यनन्तरभावितायाः [3]"धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि प्रजापतेस्सभां वेश्म प्रपद्ये" इत्यादिबहुश्रुतिसिद्धत्वात् ब्रह्मविदो देवयानेन पथा प्रस्थितस्य मार्गमध्ये चन्द्रमसा संवादादिश्रवणेन सूक्ष्मशरीरसद्भावावगमात् विदुषो मरणात् प्राक् देहे सर्वत्रोपलभ्यमानस्योष्मणो मरणदशायां देहे क्वचिदेवोपलभ्यमानतया तेनापि तदानीं सूक्ष्मशरीरसद्भावसिद्धेश्च । 'यदा सर्वे प्रमुच्यन्ते' इति मन्त्रे उच्यमानं ब्रह्मविद इहामृतत्वं न निश्शेषबन्धविनाशरूपं, अपि तु उत्तरपूर्वाघयोरश्लेषविनाशरूपमेवेत्यवश्यमभ्युपेयमिति ॥

ननु बृहदारण्यके [4] "प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययं । तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे इति नु कामयमानः" इत्यन्तेनाब्रह्मविदो देहादुत्क्रान्तिं लोकान्तरप्राप्तिं तस्माल्लोकात्पुनरावृत्तिं च प्रतिपाद्य, [5] "अथाकामयमान" इति ब्रह्मविदं प्रस्तुत्य [4] "न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति" इति प्राणानामुत्क्रान्तिः प्रतिषिध्यते । तथा तत्रैव पञ्चमाध्याये द्वितीयब्राह्मणे आर्तभागप्रश्नप्रकरणे [5] "याज्ञवल्क्य इति होवाच यत्रायं पुरुषो म्रियते उदस्मात् प्राणाः क्रामन्ति आहो न" इति आर्तभागप्रश्नस्य [5] "नेति होवाच याज्ञवल्क्यः अत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायति, आध्मातो

[1] क.२.६.१६. [2] छा.६.१४.२. [3] छा.८.१३.१. [4] बृ.६.४.५ [5] बृ.५.२.१०.११.

मृतश्शेते" इति याज्ञवल्क्यप्रतिवचनेन ब्रह्मविद उत्क्रान्तिः प्रतिषिद्धा । अतो ब्रह्मविदो देहादुत्क्रान्तेः प्रतिषेधात् विद्वदविदुषोः देहादुत्क्रान्तिः समानेत्युक्तिरयुक्तेति चेत्,

उच्यते [6] "न तस्य प्राणा उत्क्रामन्ति" इत्युदाहृतबृहदारण्यकषष्ठाध्याय श्रुतौ प्रतिषिध्यमानायाः प्राणानामुत्क्रान्तेः अपादानाकाङ्क्षायाम्, अश्रुतस्य शरीरस्यापादानत्वकल्पने गौरवात् 'तस्य' इति प्राणसम्बन्धितया श्रुतस्य ब्रह्मविद एव अपादानत्वकल्पने लाघवात्, ब्रह्मविदो जीवादेव प्राणानामुत्क्रान्तिस्तत्र प्रतिषिध्यते, न शरीरादित्येवार्थवर्णनं न्याय्यम् । किञ्च संबन्धसामान्यवाचिन्या 'तस्य' इति षष्ठ्या अपादानत्वरूपसम्बन्धपरतामाश्रित्य आत्मनस्सकाशात्प्राणानामुत्क्रान्तिप्रतिषेधपरत्ववर्णनमेवोचितम्, न त्वश्रुताच्छरीरादुत्क्रान्तिप्रतिषेधपरत्ववर्णनम् । ब्रह्मविदा शरीरादुत्थानस्य देवयानमार्गेण लोकान्तरप्राप्तेश्च [1]"असाच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यादिबहुश्रुतिसिद्धतया तद्विरोधप्रसङ्गात् ॥

किञ्च माध्यन्दिनशाखायां समानप्रकरणे [6]"अथ कामयमानः" इति ब्रह्मविदं प्रस्तुत्य [6]"न तस्मात् प्राणा उत्क्रामन्ति" इति 'तस्य' इति काण्वशाखाश्रुतषष्ठीस्थाने 'तस्मात्' इति पञ्चमीश्रवणेन आत्मनस्सकाशादेव प्राणानामुत्क्रान्तिप्रतिषेधस्य स्पष्टतया निवादस्यैवानवकाशः । दर्शितार्तभागप्रश्नप्रतिवचनं तु अविद्वद्विषयम्, तत्र ब्रह्मविद्याया अप्रस्तुतत्वात् । [9] 'अप पुनर्मृत्युं जयति' इति अपामग्न्यन्नत्ववेदनफलप्रतिपादनपरे वाक्ये अग्निरयमेव मृत्युं नयति' इत्यनेन निर्दिष्टत्वात् [3]'ता होत्कस्य मन्त्रयाञ्चक्राते, तौ ह यदूचतुः, कर्म हैव तदूचतुः' इत्यादिना, [3] पुण्यो वै पुण्येन भवति पापः पापेन भवति' इत्यन्तेनोत्तरग्रन्थेन आर्तभागप्रश्नप्रतिवचनस्य कृत्स्नस्य अविद्वद्विषयत्वावगमाच्च । अतस्तत्राविदुषः शरीरात् प्राणानामुत्क्रान्तेः असन्दिग्धतया न तद्विषयः प्रश्नः,

---

[1] छा ८।१२।१ [2] बृ ५।२।१० [3]

अपि तु आत्मनः सकाशात् प्राणानामुत्क्रान्तिविषय एव। प्रतिषेधवचनमपि तद्विषयमेव। [1]"स उच्छ्वयति" इत्यादिकं तु अभेदोपचारादिति नेतव्यम् ॥

ननु [2]"न तस्य प्राणा उत्क्रामन्ति" इत्युदाहृतश्रुतेः जीवात्मनस्सकाशात् प्राणानामुत्क्रान्तिप्रतिषेधपरत्वाश्रयणे अप्रसक्तप्रतिषेधप्रसङ्गः। विद्वदविदुषोर्द्वयोरपि देहादुत्क्रान्त्यङ्गीकारे [2]"अथाकामयमानः" इति ब्रह्मविदः पृथगारम्भवैयर्थ्यप्रसङ्गश्च इति चेत्, उच्यते – ब्रह्मविदः [3]"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति श्रुत्या देहवियोगसमनन्तरमेव ब्रह्मप्राप्तिश्रवणेन देहारम्भककर्मविनाशः सिद्धः, तद्विनाशे च सूक्ष्मशरीरस्यापि विनाशापत्त्या तत्रैवानुपदं [4]"अणुः पन्था विततः पुराणः" इत्यादिना वक्ष्यमाणस्य देवयानेन पथा प्रस्थानस्य चन्द्रमस्सवादादेश्च श्रुत्यन्तरसिद्धस्यानुपपत्तिप्रसङ्गः। अतो विदुषो देहादुत्क्रान्तिदशायां देहारम्भककर्मविनाशेन प्रसक्तायां आत्मनस्सकाशात् प्राणानामुत्क्रान्तेः प्रतिषेधे, नाप्रसक्तप्रतिषेधप्रसङ्गः। विद्वदविदुषोर्द्वयोरपि देहादुत्क्रान्तेस्समानत्वेऽपि ब्रह्मविदः उत्क्रान्तस्य ब्रह्मप्राप्तिरूपविशेषप्रतिपादनाय [2]"अथाकामयमानः" इति पृथगारम्भान्न वैयर्थ्यमिति दिक् ॥

१३९ ॥ इति आमृत्युपक्रमाधिकरणम् ॥ ५ ॥

---

१७ ॥ परसपत्त्यधिकरणम् ॥ ६ ॥

## तानि परे तथा ह्याह ॥४-२-१४॥

तानि-सप्राणमनइन्द्रियजीवसंसृष्टानि भूतसूक्ष्माणि, पर-पूर्वसूत्रोक्तयोरात्मनोरन्यतरस्मिन् परमात्मनि सम्पद्यन्ते संसृज्यन्ते, तथा "तेजः परस्यां देवतायां" इति श्रुतिः 'भूतसूक्ष्माणि परमात्मनि सम्पद्यन्ते' इति आह हि इति सूत्रार्थः ॥

---

[1] [2] बृ ६ ४ ६ [3] छा ६ १४ २ [4]

**करणमनःप्राणैस्सह जीवेन च भूतसूक्ष्माणि।**
**संपद्यन्ते यस्मिन् तद्ब्रह्म श्रीनिवासनाम भजे ॥ १७१ ॥**
स्पष्टोऽर्थः ॥

पूर्वपक्षः।

जीवपरिष्वक्तानां भूतसूक्ष्माणां परमात्मनि संपत्तौ प्रयोजनविरहेण परदेवताशब्दस्य यथाकर्म यथाविद्यं च गन्तव्यदेशावच्छिन्नपरमात्मपरतया तत्तद्देशावच्छिन्नपरमात्मानं गच्छन्ति इति लाभात् तत्तद्देशं गच्छन्ति इत्यर्थे पर्यवसानात् यथाकर्म यथाविद्यं गच्छन्ति इति ॥

सिद्धान्तः ॥

यथा सुषुप्तौ करणायासनिश्रान्त्यै परमात्मनि संपत्तिः, एवं मरणदशायां त्रिस्थूणक्षोभजनितायासविश्रान्त्यै भूतसूक्ष्मैः संपरिष्वक्तस्य जीवस्य हार्दे परमात्मनि श्रीनिवासे संपत्तिरिति ॥

अत्र [1]"तेन परस्यां देवतायां' इति सद्विद्याख्यविषयवाक्ये परदेवतापदस्य [2]"सेयं देवतैक्षत' इति पूर्वप्रकृत श्रीनिवासाख्यदेवतापरत्वात् **संपद्यन्ते यस्मिन्** इत्युक्तम् ॥

१४० ॥ इति परसंपत्त्यधिकरणम् ॥ ६ ॥

---

१८ ॥ अविभागाधिकरणम् ॥ ७ ॥

## अविभागो वचनात् ॥४-२-१५॥

उत्क्रान्तिदशायां भूतसूक्ष्मसहितस्य जीवस्य परमात्मनि संपत्तिः, **अविभागः** विभागानर्हसंश्लेषविशेषरूपा, **वचनात्**—'संपद्यते' इत्युक्तेरेवम् अवगम्यते इति सूत्रार्थः ॥

---

[1] छा। ६८६ [2] छा। ६३२

यस्मिन् मरणदशायां संपत्तिर्भूतसूक्ष्मजीवानां ।
सङ्गतिविशेषरूपा तद्ब्रह्म श्रीनिवासनाम भजे ॥ १७२ ॥

सङ्गतिः-सम्बन्धः । शिष्टं स्पष्टम् ॥

## पूर्वपक्षः ।

अत्र परमात्मन उपादानकारणत्वात् भूतसूक्ष्मविशिष्टस्य जीवस्य मरणदशायां तत्र संपत्तिः कारणे लयरूपेति ॥

## सिद्धान्तः ।

[1]"वाङ्मनसि संपद्यते" इति पूर्ववाक्यादनुवृत्तस्य 'संपद्यत' इत्यस्य तत्र पूर्ववाक्ये कारणलयवाचित्वासंभवेन विभागानर्हसंयोगविशेषमात्रवाचिताया आवश्यकत्वात् [1]"तेजः परस्यां देवतायां" इत्यत्रानुषक्तस्य तस्यैव 'संपद्यत' इत्यस्यार्थान्तरवाचित्वे प्रमाणाभावात् पुनरव्यक्तादिसृष्टिश्रवणे लयवाचिताया कल्पनसंभवेऽपि, प्रकृते अव्यक्तादिसृष्ट्यश्रवणाच्च मरणदशायां भूतसूक्ष्मसहितस्य जीवस्य परमात्मनि विश्रमार्थसंयोगविशेषरूपेण संपत्तिरिति ॥

१४१ ॥ इति अविभागाधिकरणम् ॥ ७ ॥

---

## १९ ॥ तदोकोऽधिकरणम् ॥ ८ ॥

एवं विद्वदविदुषोस्समान उत्क्रान्तिप्रकारो निरूपितः । इदानीं विदुषो विद्याफलभूत उत्क्रान्तौ विशेषो निरूप्यते ॥

**तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया ॥४-२-१६॥**

---

[1] छा ६ ८ ६

ब्रह्मवित्, **विद्यासामर्थ्यात्** - विद्यायाः भगवति निरतिशयप्रीतिरूपतापन्नत्वरूपात् सामर्थ्यात्, विद्यायाः **शेषभूता** या **गत्यनुस्मृतिः** - अर्चिरादिमार्गचिन्तनं, तद्रूपात् **योगाच्च** प्रसन्नेन **हार्देन** - हृदयपुण्डरीकोदरवर्तिना भगवता श्रीनिवासेन, **अनुगृहीतो** भवति; तदनुग्रहेण तस्य ब्रह्मविदः **ओकः** — स्थानभूतं यत् हृदयं, तत्, **अग्रे** - ऊर्ध्वभागे, **ज्वलनं** - विद्युत्स्फुरणसदृशस्फुरणं यस्य तत् तादृशं भवति । तेन स्फुरणेन **प्रकाशितं द्वारं** नाडीप्रवेशमार्गः यस्य तादृशस्सन्, **शताधिकया** - शतात् अधिकया मूर्धन्यनाड्या, निष्क्रामति इति शेषः । इति सूत्रार्थः ॥

**यदनुग्रहतो विद्वान् नाड्या मूर्धन्यया शताधिकया ।**
**निर्गच्छति स्वदेहात् तद्ब्रह्म श्रीनिवासनाम भजे ॥ १७३ ॥**

ब्रह्मवित्, **यस्य श्रीनिवासस्य अनुग्रहात्** आकस्मिकहृदयाग्रस्फुरणापादनदुर्विवेचमूर्धन्यनाडीद्वारप्रकाशनरूपादनुग्रहात् । शिष्टं स्पष्टम् ॥

## पूर्वपक्षः ।

*नाडीनामतिसूक्ष्मतया दुर्विवेचत्वात्* [1] *"शतं चैका च हृदयस्य नाड्यः तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति"* इति श्रुतेः *यादृच्छिकतन्नाडीनिर्गमनानुवादरूपतयाऽप्युपपत्तेश्च विद्वान् मूर्धन्यनाड्यैव निर्गच्छति इति न नियम इति ॥*

## सिद्धान्तः ।

सूक्ष्मासु भूयसीषु नाडीषु मूर्धन्यनाड्याः पुरुषस्य स्वतो दुर्विवेचत्वेऽपि ब्रह्मविदनुष्ठितया निरतिशयप्रीतिरूपतापन्नया भक्त्या प्रत्यहं तत्कृतेन गतिचिन्तनेन च प्रसन्नस्य हृदयपुण्डरीकवर्तिनो भगवतः श्रीनिवासस्यानुग्रहेण बृहदारण्यके [2] "तस्य हैतस्य हृदयस्य हृदयस्याग्रं प्रद्योतते, तेन प्रद्योतेनैष आत्मा निष्क्रामति"

[1] कठ.२.६.१६. [2] बृ.६.४.

इति श्रुत्युक्तरीत्या ब्रह्मविदः स्थानभूतस्य हृदयस्याग्रे आकस्मिकस्फुरणस्य तेन तत्तत्मूर्धन्यनाडीद्वारप्रकाशनस्य च जननेन ब्रह्मवित् प्रकाशितद्वारया मूर्धन्यनाड्यैव निष्क्रामतीति ॥

कौषीतक्युपनिषदि प्रतर्दनविद्याप्रकरणे [1]"एष एव साधु कर्म कारयति तं, यमेभ्यो लोकेभ्य उन्निनीषति" इत्यत्र एतच्छब्दार्थत्वेन इन्द्रप्राणाधिकरणे निर्णीतस्य भगवतः श्रीनिवासस्यापवर्गप्रापणेच्छारूपायाः सर्वलोकेभ्य उन्निनीषायाः तथा साधुकर्मकारयितृत्वस्य च प्रतिपादनेन अपवर्गप्राप्तिपर्यन्तस्य सर्वस्यापि चेतनविषये कर्तव्यस्य तदिच्छामूलकत्वसिद्धया, एतदभिप्रायेण देहादुत्क्रान्तिसमये मूर्धन्यनाडीप्रवेशस्य हार्दानुग्रहकारितताया अस्मिन् सूत्रे सूचितत्वाच्च अस्मिन् पद्ये यदनुग्रह इत्युक्तम् ॥

१४२ ॥ इति तदोकोऽधिकरणम् ॥ ८ ॥

---

२० ॥ रश्म्यधिकरणम् ॥ ९ ॥

## रश्म्यनुसारी ॥४-२-१७॥

मूर्धन्यनाड्या निष्क्रान्तो ब्रह्मवित् आदित्यरश्मीन् अनुसृत्यैव गच्छतीति सूत्रार्थः ॥

आदित्यस्य स रश्मीन् अनुसृत्यैव प्रतिष्ठते देहात् ।
यदनुग्रहेण विद्वान् तद्ब्रह्म श्रीनिवासनाम भजे ॥ १७४ ॥

सः—मूर्धन्यनाड्या निष्क्रान्तः । शिष्टं स्पष्टम् ॥

पूर्वपक्षः ।

निशि मृतस्य ब्रह्मविदः आदित्यरश्म्यनुसारेण गत्यभावात् ब्रह्मवित्

[1] कौषी.

आदित्यरश्मीननुसृत्यैव गच्छतीति नायं नियमः । छान्दोग्ये [1]"अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इति श्रुतिस्तु यादृच्छिकादित्यरश्म्यनुसरणानुवादः इति ॥

## सिद्धान्तः ।

[1]"एतैरेव रश्मिभिः" इति श्रुतौ अवधारणसामर्थ्यात्, आदित्यरश्मीन् अनुसृत्यैव विद्वान् गच्छति । रात्रावपि निदाघादौ सूर्यकिरणौष्ण्योपलंभेन सूक्ष्माणामादित्यकिरणानां सद्भावावगमात्, हेमन्तादौ हिमाभिभवेन सूक्ष्मकिरणौष्ण्यानुपलंभोपपत्तेश्च निशि मृतस्यापि सूर्यरश्म्यनुसारेण गतौ विरोधाभावात्, यदनुग्रहेण विद्वान् इत्यस्य पूर्वोक्त एवाभिप्रायः ॥

१४३ ॥ इति रश्म्यधिकरणम् ॥ ९ ॥

---

२१ ॥ निशाधिकरणम् ॥ १० ॥

# निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वात् दर्शयति च ॥४-२-१८॥

निशि मृतस्य ब्रह्मविदो ब्रह्मप्राप्तिः न सम्भवति इति चेत्, तत्र न; संबन्धस्य - कर्मसम्बन्धस्य चरमदेहावसानपर्यन्तावस्थायित्वात् । [2]"तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इति श्रुतिः चरमदेहान्ते ब्रह्मप्राप्तिं दर्शयति च इति सूत्रार्थः ॥

यदुपासको निशायां म्रियमाणोऽप्यखिलकर्मणां नाशात् ।
यत्प्राप्त्यविलंबात् तद्ब्रह्म श्रीनिवासनाम भजे ॥ १७५ ॥
स्पष्टोऽर्थः ॥

---

[1] छा ८.६.५.  [2] छा.६.१४.२.  [3]

### पूर्वपक्षः ।

निशि मृतस्य ब्रह्मविद आदित्यरश्म्यनुसारेण गमनसम्भवेऽपि [3] "दिवा च शुक्लपक्षश्च उत्तरायणमेव च । मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितं" इति निशि मरणस्य गर्हितत्वस्मरणेन, गर्हितत्वस्याधमगतिहेतुत्वेन वाच्यत्वात्, निशि मृतस्य परमपुरुषार्थरूपब्रह्मप्राप्तिर्न सम्भवतीति ॥

### सिद्धान्तः ।

ब्रह्मविदो ब्रह्मविचारम्भात् पूर्वकर्मणा, अनारब्धकार्याणां विद्यामाहात्म्या देव नष्टत्वात्, उत्तरेषां चाश्लेषात्, आरब्धफलानां कर्मणां भोगेन नष्टत्वात् ब्रह्मप्राप्तौ विलम्बहेत्वभावात् [1] "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति श्रुतौ ब्रह्मविदश्चरमदेहावसाने ब्रह्मप्राप्तिप्रतिपादनाच्च निशि मृतस्यापि ब्रह्मविदो ब्रह्मप्राप्तिरस्त्येव । निशि मरणस्य गर्हितत्वस्मृतिस्तु अविद्वद्विषयेति ॥

१४४ ॥ इति निशाधिकरणम् ॥ १० ॥

---

२२ ॥ दक्षिणायनाधिकरणम् ॥ ११ ॥

## अतश्चायनेऽपि दक्षिणे ॥४-२-१९॥

[योगिनः प्रति स्मर्यते स्मार्ते चैते ॥ २० ॥]

अतः ब्रह्मविदश्चरमदेहावसाने निखिलकर्मणां नष्टत्वेन ब्रह्मप्राप्तौ विलम्बहेत्वभावादेव दक्षिणायने मृतस्यापि ब्रह्मविदो ब्रह्मप्राप्तिरस्त्येवेति सूत्रार्थः ॥

यद्विद्यामनुतिष्ठन् म्रियमाणो दक्षिणेऽप्ययने ।
ब्रह्म प्राप्नोति परं तद्ब्रह्म श्रीनिवासनाम भजे ॥ १७६ ॥

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य कलाप्रपूर्णस्य
श्रीदेशिकाचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालायां
चतुर्थाध्यायस्य द्वितीयः पादः ॥

स्पष्टोऽर्थः ॥

पूर्वपक्षः ।

तैत्तिरीयोपनिषदि [1]"अथ यो दक्षिणे प्रमीयते, पितृणामेव महिमानं गत्वा चन्द्रमसस्सायुज्यं गच्छति ' इति दक्षिणायनमृतस्य ब्रह्मविदोऽपि चन्द्रप्राप्ति श्रवणात् चन्द्रं प्राप्तस्य [2]"अथैतमेवाध्वानं पुनर्निवर्तन्ते' इति पञ्चाग्निविद्याश्रुतौ पुनरावृत्तिश्रवणात्, भीष्मादीनां ब्रह्मविद्यानिष्ठानां देहत्यागाय उत्तरायणप्रतीक्षा स्मरणात् [3] 'यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः । प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ" इत्युपक्रम्य, "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते । एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ' इति श्रीभगवद्गीतासु योगिनो मुमूर्षून् प्रति पुनरावृत्त्यपुनरावृत्तिहेतुभूतकालनिर्देशप्रकरणे दक्षिणायनमरणस्य पुनरावृत्तिहेतुत्वस्मरणाच्च दक्षिणायनमृतस्य ब्रह्मप्राप्तिर्न सम्भवतीति ॥

सिद्धान्तः ।

दक्षिणायनमृतस्य ब्रह्मविदः प्रागुक्तरीत्या ब्रह्मप्राप्तौ विलम्बहेत्वभावात् ब्रह्मप्राप्तिरस्त्येव । तैत्तिरीयोपनिषदि दक्षिणायनमृतस्य ब्रह्मविदः चन्द्रप्राप्तिविधानं तु [1]"तस्माद्ब्रह्मणो महिमानमाप्नोति' इति तत्रैवोत्तरत्र ब्रह्मप्राप्त्यभिधानेन ब्रह्म

[1] तै. नारा ८२ [2] छा ५-१०-५ [3] गीता ८-२३-२७

प्राप्नुवतो विदुषो विश्रमस्थानप्रतिपादनपरम् । भीष्मादीनामुत्तरायणप्रतीक्षणं तु स्वच्छन्दमरणानां तेषां धर्मप्रवर्तनाधिकृतानां उत्तरायणमरणप्राशस्त्यज्ञापनार्थम् । भगवद्गीतासु [3]"यत्र काले त्वनावृत्ति" इत्यादिवचनं तु न मुमूर्षून् प्रति पुनरावृत्त्यपुनरावृत्तिहेतुभूतकालविशेषप्रतिपादनपरं; अपि तु भक्तियोगनिष्ठैः प्रत्यहं चिन्तनीयदेवयानपितृयानरूपमार्गद्वयज्ञापनपरम् । तत्र मुमुक्षुभिर्देवयान-गतिः, ऐश्वर्यादिफलान्तरार्थिभिः भक्तिनिष्ठैः पितृयानगतिश्चिन्तनीयत्वेन विधीयते । "नैते सृती पार्थ जानन् योगी मुह्यति कश्चन" इत्युपसंहारेण "अग्निर्ज्योतिरहः शुक्लः," "धूमो रात्रिस्तथा कृष्णः" इत्यनयोस्तत्तदधिकारि-गन्तव्यमार्गविशेषपरत्वावगमेन कालविशेषविधिपरत्वाभावात् "यत्र काले त्वनावृत्ति" इत्यत्र कालपदमपि तत्तन्मार्गस्थकालाभिमान्यातिवाहिकदेवताविशेषपरं, न तु कालपरं इति न तद्विरोधः ।

१४५ ॥ इति दक्षिणायनाधिकरणम् ॥ ११ ॥

---

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य कलाप्रपूर्णस्य
श्रीदेशिकाचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालाप्रकाशे
चतुर्थाध्यायस्य द्वितीयः पादः ॥

---

## चतुर्थाध्यायस्य तृतीयः पादः ।

## २३ ॥ आर्चिराद्यधिकरणम् ॥ १ ॥

पूर्वस्मिन् पादे ब्रह्मविदो देहान्निष्क्रमणदशायां अन्धकूपे निपातयिष्यन्-पुत्रस्य आह्वानोत्सुकपितृन्यायेन, अनर्थसंस्तोदर्कनाड्यन्तरप्रवेशात् व्यावर्त्य परमपुरुषार्थभूतमोक्षप्रापकमूर्धन्यनाडीद्वारप्रकाशनतत्प्रवेशनरूपं भगवता श्रीनि-

यासेन निर्वर्त्यमानं विद्याफलं निरूपितम् । इदानीं मूर्धन्यनाड्या प्रस्थितस्यार्चिरादिकैर्भगवतो निजराजधानीं प्रति अतिवहनरूपं विद्याफलं निरूपयितुं तृतीय पाद आरभ्यते ॥

## अर्चिरादिना तत्प्रथितेः ॥४-३-१॥

ब्रह्मवित्, अर्चिरादिना एकेनैव मार्गेण गच्छति, अर्चिरादिमार्गस्य सर्वत्र प्रत्यभिज्ञानादिति सूत्रार्थ ॥

तदुपासीनस्सर्वोऽप्येकेनैवार्चिरादिमार्गेण ।
प्राप्नोति यस्य लोकान् तद्ब्रह्म श्रीनिवासनाम भजे ॥१७७॥
स्पष्टोऽर्थ ॥

### पूर्वपक्षः ।

श्रुतिषु तत्तद्ब्रह्मविद्याप्रकरणे ब्रह्मविदो ब्रह्मप्राप्तौ मार्गाणां क्रमभेदनामिभेदयोर्दर्शनेन मार्गभेदावगमात्, तत्र तत्र आम्नातमार्गेणैव ब्रह्मप्राप्तिसंभवेन मार्गान्तरानपेक्षणाच्च ब्रह्मवित् सर्वोऽप्येकेनैव मार्गेण ब्रह्म गच्छतीति न नियम इति ॥

### सिद्धान्तः ।

तत्तद्ब्रह्मविद्याप्रकरणाम्नातेषु मार्गेषु श्रुतेरादित्यादिभि स एवायं मार्ग इति प्रत्यभिज्ञायमानत्वात् कयुचित् न्यूनातिरेकदर्शनेऽपि, ब्रह्मविद्यासु ब्रह्मण एकस्य प्रत्यभिज्ञायमानत्वेऽपि तद्गुणानामनन्तत्वेन तेषां सर्वेषामुपसंहारेणानुसन्धातुमशक्यत्ववत् इह मार्गे क्रमधर्मिणो परिमितत्वेन अन्यत्रोक्तस्याप्यन्यत्रोपसंहारेणानुसन्धातुमशक्यतानिरहेण प्रत्यभिज्ञास्वारस्यभङ्गानौचित्याच्च, अर्चिरादिरेक एव ब्रह्मप्राप्तौ मार्गः सर्वश्रुतिभिर्विवक्षित इति अर्चिरादिना एकेनैव मार्गेण सर्वोऽपि ब्रह्मवित् ब्रह्म प्राप्नोतीति सर्वासां ब्रह्मविद्यानां श्रीनिवासविषयकत्वस्य

पूर्वमेव निर्णीतत्वात्, यदुपासीनः सर्व इति [1]"तत्पुरुषो मानस एत्य ब्रह्म-लोकान् गमयति" इति श्रुतिमभिप्रेत्य यस्य लोकान् इति चोक्तम् ॥

१४६ ॥ इति अर्चिराद्यधिकरणम् ॥ १ ॥

---

२४ ॥ वाय्वधिकरणम् ॥ २ ॥

## वायुमब्दादविशेषविशेषाभ्याम् ॥४-३-२॥

अर्चिरादिमार्गेण गच्छन् ब्रह्मवित्, अब्दात्—संवत्सरात् ऊर्ध्वं वायुं गच्छति इति निश्चीयते; अविशेषविशेषाभ्यां-'देवलोकं' इति सामान्यशब्देन, 'वायुलोकं' इति विशेषशब्देन च वायोरेवाभिधीयमानत्वादिति सूत्रार्थः ॥

**यदुपासकोऽर्चिरादौ मार्गे संवत्सरं प्राप्य ।**
**पश्चाद्गच्छति वायुं तद्ब्रह्म श्रीनिवासनाम भजे ॥ १७८ ॥**

पूर्वपक्षः ।

छान्दोग्ये उपकोसलविद्याप्रकरणे श्रुते अर्चिरादिमार्गे [2]"मासेभ्यः संवत्सरं संवत्सरादादित्यं" इति मासेभ्यः परं आदित्यात् पूर्वं संवत्सरप्राप्तिः श्रूयते । बृहदारण्यके पञ्चाग्निविद्याप्रकरणे अर्चिरादिमार्गमुपक्रम्य [3]"मासेभ्यो देवलोकं, देवलोकादादित्यं" इति मासेभ्यः परं आदित्यात् पूर्वं देवलोकप्राप्तिः श्रूयते । कौषीतक्युपनिषदि तु अर्चिरादिमार्गप्रकरणे, [4]"स एतं देवयानं पन्थानमापद्य अग्निलोकमागच्छति स वायुलोकं स वरुणलोकं" इति अर्चिषः परं वायुलोकप्राप्तिः श्रूयते । ततश्च अर्चिषः परं आदित्यात् पूर्वं क्वचित् अहः-शुक्लपक्ष - उत्तरायण-संवत्सराणां, क्वचित् अहः-शुक्लपक्ष-उत्तरायण-देवलोकानां, क्वचित् वायुलोकस्य च प्राप्तिः प्रतीयते ॥

---

[1] बृ.८.२.१५. [2] छा.४.१५.५. [3] बृ.८.२.१५. [4] कौषी.१.३.

तत्र [1]"अर्चिषोऽहः, अह्न आपूर्यमाणपक्षं, आपूर्यमाणपक्षान्मासान्, मासेभ्यः संवत्सरः" इति पञ्चमीश्रुत्या मासप्राप्त्यनन्तरं संवत्सरप्राप्तेः [1]"मासेभ्यो देवलोकं" इति पञ्चमीश्रुत्या मासप्राप्त्यनन्तरं देवलोकप्राप्तेश्च प्रतीयमानतया मासादित्ययोर्मध्ये संवत्सरदेवलोकयोर्द्वयोर्निवेशे प्राप्ते, दिन-पक्ष-मासक्रमेण न्यूनकालेभ्योऽधिककालस्य निवेशनलिङ्गात् मासेभ्यः परं संवत्सरस्य निवेशः सिद्धः। संवत्सरादनन्तरं आदित्यात् पूर्वं देवलोकवायुलोकौ प्राप्तौ। देवलोकवायुलोकयोर्भिन्नार्थत्वेन पौर्वापर्यनियामकाभावेन च यथेष्टं तयोर्निवेशः इति॥

सिद्धान्तः।

'देवलोकं' इति सामान्यशब्देन, 'वायुलोकं' इति विशेषशब्देन च वायुरेक एवाभिधीयते। देवलोकशब्दः 'देवानां लोकः' इति व्युत्पत्त्या "योऽयं पवते एष देवानां गृहाः" इति श्रुत्यन्तरे देवगृहत्वेन प्रसिद्धं वायुमाचष्टे, वायुलोकशब्दश्च 'वायुरेव लोको वायुलोकः' इति निषादस्थपतिन्यायसिद्धेन कर्मधारयेण वायुमभिधत्ते। अतो द्वयोरैकार्थ्यात् संवत्सरप्राप्त्यनन्तरं आदित्यात् पूर्वं वायुं गच्छतीति॥

१४७॥ इति वाय्वधिकरणम्॥ २॥

---

२५॥ वरुणाधिकरणम्॥ ३॥

## तटितोऽधिवरुणः संबन्धात्॥४-३-३॥

वरुणः, तटितोऽधि विद्युत्पुरुषादुपरि निवेशयितव्य इत्यर्थः। तत्र हेतुमाह संबन्धात्– विद्युतो वरुणस्य च मेघोदरवर्तित्वेन परस्परसंबन्धात् इति सूत्रार्थः॥

---

[1] तै स

यदुपासकोऽर्चिरादौ तादितं प्राप्याथ वरुणमाप्नोति ।
इन्द्रमथ प्रजेशं तद्ब्रह्म श्रीनिवासनाम भजे ॥ १७९ ॥
स्पष्टोऽर्थः ।

## पूर्वपक्षः ।

कौषीतक्युपनिषदि [1]"स एतं देवयानं पन्थानमासाद्य अग्निलोकमागच्छति, स वायुलोकं, स वरुणलोकं, स आदित्यलोकं, स इन्द्रलोकं, स प्रजापतिलोकं" इति अर्चिरादिमार्गोक्तिप्रकरणे अग्निलोकशब्दोक्तादर्चिष उपरि पठितस्य वायुलोकशब्दोक्तस्य वायोस्संवत्सरादूर्ध्वं निवेशः पूर्वाधिकरणे सिद्धान्तितः । वायोरनन्तरं उक्तपाठक्रमेण वरुणस्य प्राप्तावपि [2]"देवलोकादादित्यं" इति वाजसनेयके पञ्चमीश्रुत्या बलीयसा वायोरनन्तरं आदित्यस्य निवेशः सिद्धः । ततश्च कौषीतक्युपनिषदि श्रुतस्य वरुणस्य क्वचिदप्यवकाशालाभेन तदाम्नानवैयर्थ्यप्रसङ्गः । अतस्तदाम्नानावैयर्थ्याय वाजसनेयस्थपञ्चमीश्रुतिं बाधित्वा कौषीतकिश्रुतपाठक्रमानुरोधेन वायोरुपरि वरुणो निवेशनीयः । इन्द्रप्रजापती अपि वरुणादनन्तरं निवेशनीयौ । अन्यत्र तयोर्निवेशे श्रुतिद्वयबाधप्रसङ्गात् । तयोः क्वचिदप्यनिवेशे पाठवैयर्थ्यप्रसङ्गाच्च । अतो वायोरनन्तरं वरुणः, वरुणादनन्तरं इन्द्रः, तदनन्तरं प्रजापतिः, तदनन्तरं आदित्यो निवेशनीय इति ॥

## सिद्धान्तः ।

विद्युतो जलस्य च मेघोदरवर्तित्वेन परस्परसम्बन्धसद्भावात्, तद्द्वारा तदभिमानिनो वैद्युतपुरुषवरुणयो सम्बन्धसत्त्वेन पाठक्रमात् बलीयसा तादृशपरस्परसम्बन्धरूपार्थक्रमेण पाठक्रमं बाधित्वा वरुणस्तावत् विद्युत उपरि निवेशनीयः । ततश्च वैद्युतपुरुषस्य ब्रह्मगमयितृत्वं नान्यवधानेन; अपि तु वरुणाद्यव्यवधानेन इति चाश्रयणीयम् । इत्थं च इन्द्रप्रजापत्यो क्वचिन्निवेशनीयत्वे आवश्यके

1 कौषी १.३. 2 बृ.८.२.१५

'आगन्तूनामन्ते निवेशः' इति न्यायेन इन्द्रप्रजापती अपि वैद्युतपुरुषादुपरि निवेशनीयाविति ॥

१४८ ॥ इति वरुणाधिकरणम् ॥ ३ ॥

२६ ॥ आतिवाहिकाधिकरणम् ॥ ४ ॥

## आतिवाहिकस्तल्लिङ्गात् ॥ ४-३-४ ॥

[वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ५ ॥]

अर्चिरादयः आतिवाहिकाः मार्गातिवोढारः, तल्लिङ्गात् [1] "स एनान् ब्रह्म गमयति" इति उपसंहारस्थात् मार्गगमयितृत्वलिङ्गात् अर्चिरादीनामतिवोढृत्वं गम्यते इति सूत्रार्थः ॥

यदुपासननिष्ठाना अतिवहन्त्यर्चिरादयः पुरुषाः ।
येन नियुक्ता मार्गे तद्ब्रह्म श्रीनिवासनाम भज ॥ १८० ॥

पूर्वपक्षः ।

[1] "तेऽर्चिषमभिसंभवन्ति, अर्चिषोऽहः" इत्यादेः लोके गन्तव्यदेशमार्गनिर्देशोपदेशपरवाक्यतुल्यत्वप्रतीतेः मार्गचिह्नभूता अर्चिरादयः, अथवा कौषीतक्युपनिषदि [2] "अग्निलोकं वायुलोकं वरुणलोकं" इति लोकशब्दश्रवणात् भोगस्थानविशेषा इति ॥

सिद्धान्तः ।

अर्चिरादयो न मार्गचिह्नभूताः, अहरादीनां कालविशेषाणां मार्गचिह्नत्वासंभवात् । नापि भोगभूमयः, अपि तु [3] "तेऽर्चिषमभिसंभवन्ति" इत्युपक्रम्य, [3] "चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इति अर्चिरादिषु

[1] छा ४ १५ ५  [2] कौषी १ ३  [3] छा ४ १५ ५

अन्त्यस्य वैद्युतपुरुषस्यामानवसञ्ज्ञस्य मार्गगमयितृत्वश्रवणात्, अन्ये अर्चिरादयोऽपि मार्गगमयितार एवेति ज्ञायते। अतश्च अग्न्यादयः शब्दा अग्न्याद्यभिमानिदेवताविशेषपराः। अमानवसञ्ज्ञो वैद्युत एव ब्रह्मप्रापयिता। आतिवाहिकत्वेन श्रुता वरुणेन्द्रप्रजापतयस्तु अमानवस्य सहकारिण एवेति ॥

१४९ ॥ इत्यातिवाहिकाधिकरणम् ॥ ४ ॥

---

२७ ॥ कार्याधिकरणम् । ५ ॥

पूर्वाधिकरणे गमयितारो निरूपिताः, इदानीं गन्तारो निरूप्यन्ते ॥

## कार्यं बादरिरस्य गत्युपपत्तेः ॥४-३-६॥

[विशेषितत्वाच्च ॥ ७ ॥
सामीप्यात्तु तद्व्यपदेशः ॥ ८ ॥
कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ९ ॥
स्मृतेश्च ॥ १० ॥] एतानि पूर्वपक्षसूत्राणि ।

अत्र सूत्रे 'उपासीनान्' इत्यध्याहार्यम्। "अप्रतीकालम्बनान्नयति" इति सिद्धान्तसूत्रात् 'नयति' इति पदमाकृष्यते। ततश्च **कार्यं**-हिरण्यगर्भं उपासीनान् अर्चिरादिरातिवाहिकगणो नयतीति **बादरिः** आचार्यो मन्यते इत्यर्थः। अत्र हेतुमाह **अस्य गत्युपपत्तेः** इति। अस्य-हिरण्यगर्भाख्यकार्यब्रह्मोपासकस्य स्वप्राप्यप्राप्तये गमनोपपत्तेः इति सूत्रार्थः ॥

अयं भाव - अर्चिरादिगतिश्रुतौ [1]"तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयति" इत्यत्र 'एनान्' इत्युपासकविशेषान् गन्तॄन् निर्दिश्य तेषां गमयितृत्वं श्रूयते। ततश्च ब्रह्मशब्दवाच्यस्य गन्तव्यत्वं सिद्धम्। तत्र नपुंसकब्रह्मशब्दस्य मुख्यार्थभूतपरब्रह्मपरत्वे परस्य ब्रह्मणः सर्वगतत्वस्य श्रुतिसिद्धत्वात् गन्तव्यत्वानुप-

[1] छा ४ १५ ५.

पत्ति । अप्राप्तस्य हि प्राप्त्यर्थं गमनमुपपद्यते, न तु प्राप्तस्य । परविद्यानिष्ठस्य परोपासनविधानं तु न ब्रह्मप्राप्त्यर्थम् । अपि तु स्वात्मत्वेन नित्यप्राप्तस्यापि ब्रह्मणोऽप्राप्तत्वभ्रान्तिरूपाविद्यानिवृत्त्यर्थम् । अत परस्य ब्रह्मण प्राप्तव्यत्वायोगात् [1]"स एतान् ब्रह्म गमयति' इत्यत्र ब्रह्मशब्दो न परब्रह्मपर, अपि तु हिरण्यगर्भाख्यकार्यब्रह्मपर । तस्य हिरण्यगर्भस्य सत्यलोकवर्तितया गन्तव्यत्वोपपत्ते । न केवल गन्तव्यत्वोपपत्तिमात्रेण प्रकृतब्रह्मशब्दस्य हिरण्यगर्भपरत्वनिश्चय ।

बृहदारण्यके पञ्चाग्निविद्याप्रकरणे [1]"तत्पुरुषो मानस एत्य ब्रह्मलोकान् गमयति, तेषु ब्रह्मलोकेषु परा परावन्तो वसन्ति' इति बहुवचनान्तब्रह्मलोक-शब्देन गन्तव्यनिर्देशादपि ब्रह्मशब्दस्य हिरण्यगर्भपरत्वं निश्चीयते । न ह्यत्र 'ब्रह्मैव लोको ब्रह्मलोक' इति कर्मधारयेण ब्रह्मलोकशब्दस्य परब्रह्मपरत्वं सुवचम् । परब्रह्मण एकत्वेन बहुवचनानुपपत्ते, [2]"तेषु परा परावन्तो वसन्ति' इति वासस्थानत्वोक्त्यनुपपत्तिप्रसङ्गाच्च ।

एव छान्दोग्ये अर्चिरादिना गन्तु स्वप्राप्यानुसन्धानप्रकरणे [3]"प्रजापते सभा वेश्म प्रपद्ये' इति प्रजापतिशब्दनिर्दिष्टस्य वेश्म तत्रत्यसभाप्राप्त्यनुसन्धान वचनादपि [4]"ब्रह्म गमयति' इत्यत्र ब्रह्मशब्दस हिरण्यगर्भपरत्व निश्चीयते, प्रजापतिशब्दस्य हिरण्यगर्भे रूढत्वात् । नपुंसकब्रह्मशब्देन हिरण्यगर्भनिर्देशस्तु हिरण्यगर्भस्य ब्रह्मप्रकाशात् प्रथमजत्वस्य [5]'यो ब्रह्माण विदधाति पूर्वं' इत्यादि श्रुतिसिद्धतया कारणवाचिशब्देन कार्यस्योपचाराल्लाक्षणिकतयोपपद्यते ॥

नन्वेवमपि [6]"शत चैका च हृदयस्य नाड्य तासा मूर्धानमभिनिस्सृतैका तयोर्ध्वमायन्नमृतत्वमेति' इति मूर्धन्यनाड्या निष्क्रम्य अर्चिरादिना गतस्य अमृतत्वप्राप्तिश्रुति [2]'तत्पुरुषो मानस एत्य ब्रह्मलोकान् गमयति, तेषु परा परावन्तो वसन्ति तेषा न पुनरावृत्ति' इत्यपुनरावृत्तिश्रुतश्च नोपपद्यते ।

---

[1] बृ ८ २ १५ [2] बृ ८ २ १५ [3] छा ८ १४ १
[4] छा ४ १५ ६ [5] श्वे ६ १८ [6] कठ २ ६ १६

हिरण्यगर्भलोकस्य द्विपरार्धावसाने विनाशस्य शास्त्रेषु श्रूयमाणतया हिरण्यगर्भं प्राप्तानां पुनरावृत्तेः संसारप्राप्तिरूपाया अवर्जनीयत्वादिति चेत्, उच्यते—हिरण्यगर्भलोकस्य नाशे सति तल्लोकाधिपतिना ब्रह्मनिष्ठेन हिरण्यगर्भेन सह हिरण्यगर्भं प्राप्ता अपि तत्राधिगतविद्याः सन्तः कार्यब्रह्मलोकात् परं ब्रह्म प्रविशन्ति। अत्र उक्तश्रुतेः क्रममुक्तिपरत्वान्न विरोधः। [1]"ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे" इति, [2]"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदं" इति श्रुतिस्मृतिभ्यां तथाऽभिधानात्। ते सर्वे-हिरण्यगर्भलोकं प्राप्ता यतयः, ब्रह्मलोके-हिरण्यगर्भलोके, परान्तकाले-चतुर्मुखायुषोऽवसानकाले, परामृतात्-परं ब्रह्म प्राप्य; ल्यब्लोपे पञ्चमी; परिमुच्यन्ति-मुक्ता भवन्ति इत्युक्तश्रुत्यर्थः। स्मृत्यर्थस्तु,—ते सर्वे-हिरण्यगर्भं प्राप्ताः सर्वे, कृतात्मानः सन्तः-अधिगतपरविद्याः सन्तः, परस्यान्ते-चतुर्मुखायुषोऽवसाने प्रतिसञ्चरे-प्राकृतप्रलये सम्प्राप्ते सति, चतुर्मुखेन सह, परं पदं- परब्रह्मस्वरूपं प्रविशन्ति इत्यर्थः। अतः परब्रह्मोपासकानां परब्रह्मप्राप्त्यर्थं क्वचिदन्तव्यत्ययाभावेन गत्यनुपपत्तेः हिरण्यगर्भोपासकानां हिरण्यगर्भप्राप्त्यर्थं गत्युपपत्तेश्च; [3]"तयोर्ध्वमायन्नमृतत्वमेति" इत्यादीनां क्रममुक्तिपरतयोपपत्तेश्च, दोषान्तराणां परिहृतत्वाच्च हिरण्यगर्भोपासकानेव आतिवाहिको गणो नयतीत्यास्थेयम् ॥

अत्र जैमिनेर्मतमाह "परं जैमिनिर्मुख्यत्वात्" इत्यादिसूत्रत्रयेण ॥

**परं जैमिनिर्मुख्यत्वात् ॥ ४-३-११ ॥**

[दर्शनाच्च ॥ १२ ॥

न च कार्ये प्रत्यभिसन्धिः ॥ १३ ॥]

**परं** ब्रह्मोपासीनानेव आतिवाहिको गणो नयतीति **जैमिनिः** आचार्यो मन्यते। अत्र हेतुमाह **मुख्यत्वात्** इति। ब्रह्मशब्दस्य परस्मिन् ब्रह्मण्येव मुख्यत्वादिति सूत्रार्थः ॥

[1] ते नारा.१०-१४  [2] कूर्मपु. पूर्वख.१२-२६९.  [3] छा.८-६-६.

अयं भाव - [1]"स एनान् ब्रह्म गमयति" इत्यत्र श्रुतस्य नपुंसकस्य ब्रह्मशब्दस्य परस्मिन्नेव ब्रह्मणि मुख्यत्वात्, मुख्यार्थपरिग्रहे अनुपपत्त्यभावाच्च परब्रह्मोपासकानेव आतिवाहिको गणो नयतीत्येव युक्तम्। न तावत् सर्वगतस्य परस्य ब्रह्मणो गन्तव्यत्वानुपपत्ति, देशविशेषावच्छिन्नस्य तस्य गन्तव्यत्वोपपत्ते। देशविशेषावच्छिन्नस्य तस्य गन्तव्यतापेक्षा च निश्शेषाविद्यानिवृत्ते देशविशेषावच्छिन्नब्रह्मप्राप्त्यनन्तरभावितया शास्त्रसिद्धत्वादवगम्यते। अविद्यानिवृत्तिर्हि प्रत्यगात्मस्वरूपतिरोधायककर्मणा निश्शेषनिवृत्ति। स्वरूपाविर्भावरूपा सा च [2]"अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति छान्दोग्यश्रुत्या देहान्निष्क्रान्तस्य परज्योतिश्शब्दवाच्यपरब्रह्मप्राप्त्यनन्तर स्वरूपाविर्भावप्रतिपादनात् परब्रह्मप्राप्त्यनन्तरभाविनी। अत्र शरीरादुत्थानं मूर्धन्यनाड्या शरीरान्निष्क्रमणरूपम्। शरीरान्निष्क्रान्तस्य परज्योतिश्शब्दोक्तब्रह्मप्राप्तौ अर्चिरादि मार्गं परज्योतिश्शब्दवाच्यमुपसत्तव्य च हिरण्यगर्भादिविलक्षणं परं ब्रह्म, प्राप्तिसाधनं च ब्रह्मचर्यं, उपसत्तिस्थानं च लोकविशेषस्थितपुरविशेष, तच्च पुरमकृतकत्वान्नित्यं, परज्योतिरुपसपत्त्यनन्तरं आविर्भवत् प्रत्यगात्मन स्वरूपं अपहतपाप्मत्वादिगुणाष्टकरूपं, इति इदं सर्वं तदुत्तरखण्डैरवगम्यते।

तथा हि तृतीयखण्डे [3]"अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इत्युक्त्वा, तदुत्तरवाक्ये [3]"एतदमृतमेतदभयमेतद्ब्रह्म तस्य वा एतस्य ब्रह्मणो नाम सत्यं" इत्यादिना उपसत्तव्यपरज्योतिष अमृतत्वमभयत्वं ब्रह्मत्वं सत्यनामनिर्वचनसिद्धं चिदचिन्नियन्तृत्वं चोक्त्वा, चतुर्थखण्डे [4]"य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय" इत्युपक्रम्य [4]"नैनं सेतुमहोरात्रे तरतः" इत्यादिना पूर्वप्रक्रान्तस्य परज्योतिश्शब्दोक्तस्य परब्रह्मण अहोरात्रपरिच्छेदाभावं, सुकृतदुष्कृतप्रयुक्तजरामरणादिकर्मफलासंस्पृष्टत्वादिकं च हिरण्यगर्भादिचेतनेष्वसंभावितधर्मजातमभिधाय इयता

[1] छा ४ १५ ६ [2] छा ८ ३ ४ [3] छा ८ ३ ४ [4] छा ८ ४ १

सन्दर्भेण उपसंपत्तव्यस्य परज्योतिश्शब्दनिर्दिष्टस्य ब्रह्मणः हिरण्यगर्भाख्यकार्यब्रह्मणो विलक्षणत्वं ज्ञापितम्। अनन्तरं चतुर्थखण्डान्ते उपसंपत्तव्यस्य परज्योतिषः परब्रह्मणः प्राप्तिसाधनत्वेन ब्रह्मचर्यमुपक्षिप्य पञ्चमखण्डे ब्रह्मचर्यस्वरूपं निरूप्य, तत्प्रसङ्गेन [1]"अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि। तदैरंमदीयं सरः, तदश्वत्थस्सोमसवनः, तदपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयं" इत्यनेन उपसंपत्तव्यस्य परस्य ब्रह्मणोऽसाधारणो द्युसंज्ञकः तृतीयो लोकः, तत्र अपराजिताख्यपुरविशेषः, तत्र परब्रह्माधिष्ठितो हिरण्मयो मण्टपविशेषश्च प्रतिपादितः॥

अनन्तरं षष्ठखण्डे, [2]"अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इत्युपक्रम्य, [3]"स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छति" इत्यादिना अर्चिरादिमार्गेण विदुषो गमनमुक्तम्। तस्यैव खण्डस्यान्ते [3]"शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति" इति विदुषो देहात् मूर्धन्यनाड्या निर्गत्य ऊर्ध्वगमनं प्रतिपादितम्॥

सप्तमखण्डे [4]"य आत्मा अपहतपाप्मा" इत्यादिना प्रत्यगात्मनः अपहतपाप्मत्वादिस्वाभाविकरूपमुक्त्वा; अनन्तरं जाग्रदाद्यवस्थासु तस्य स्वाभाविकरूपस्य तिरोधानं संसूच्य, द्वादशखण्डे [5]"एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते, स उत्तमः पुरुषः" इत्यन्तेन जाग्रदाद्यवस्थात्रयान्वयिनः प्रत्यगात्मनः परज्योतिरुपसंपत्त्या स्वरूपाविर्भावः प्रतिपादितः। अनेन आविर्भूतस्वरूपं अपहतपाप्मत्वादिगुणाष्टकरूपमिति ज्ञापितं भवति। अत्र [6]"स उत्तमः पुरुषः" इत्यनेनोपसंपत्तव्यं परं ज्योतिः भगवान् श्रीनिवास एवेति स्फुटीकृतम्। स एव हि [7]"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" इति, "अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इति च उत्तमपुरुषत्वेन पुरुषोत्तमत्वेन च गीयते॥

[1] छा.८.५.३. [2] छा.८.६.५. [3] छा.८-६-६. [4] छा ८.७.१.
[5] छा.८.१२. [6] छा.८.१२-३ [7] गीता १५.१७.

अनन्तर मयोदशचतुर्दशखण्डयो दहरोपासनस्य स्वप्राप्यप्राप्त्यभिमन्यभिधानप्रकरणे [1]"अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि" इति, [2]"प्रजापते सभां वेश्म प्रपद्ये" इति च पूर्वं पञ्चमखण्डे उपसपत्त्यपरज्योतिश्शब्दितपरब्रह्माविच्छिन्नत्वेन प्रतिपादितब्रह्मलोकवेश्मसमभादिप्राप्त्यभिमन्यि प्रतिपादित । [1]"अश्व इव रोमाणि" इति मन्त्रे 'अकृतं' इति ब्रह्मलोकविशेषणेन तल्लोकस्य नित्यत्वं च प्रतिपादितम् । अत स्वरूपाविर्भावरूपाया उपासनस्य अविद्यानिवृत्तेरुदाहृतश्रुतिसिद्धदेशविशेषावच्छिन्नपरब्रह्मप्राप्त्यनन्तरभाविताया उदाहृतश्रुतिसिद्धतया तदवच्छिन्नब्रह्म उपासकेन गन्तव्यत्वे नानुपपत्तिगन्धोऽपि । अयं च परस्य ब्रह्मणोऽसाधारणो लोकविशेष श्रुत्यन्तरेषु इतिहासपुराणादिषु च समन्तत प्रतिपाद्यते ।

प्रश्नोपनिषदि पञ्चमप्रश्ने [3]"य पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण पर पुरुषमभिध्यायीत" इत्युपक्रम्य, [3]"स सामभिरुन्नीयते ब्रह्मलोकं, स एतस्माज्जीवघनात् परात्पर पुरिशयं पुरुषमीक्षते" इत्यत्र ब्रह्मलोकशब्देनायमेव भगवल्लोकोऽभिधीयते । तत्र हि लोकान्त्रिधा विभज्य [4]"ऋग्भिरेतं यजुर्भिरन्तरिक्ष ससामभिर्यत्कवयो वेदयन्ते" इति तृतीयलोकत्वेनोच्यमानो ब्रह्मलोक उदाहृतछान्दोग्यदहरविद्याप्रकरणोक्तब्रह्मलोक एव, [5]"अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि" इति तृतीयलोकत्वेनोक्तब्रह्मलोकप्रत्यभिज्ञानात्॥

छान्दोग्ये [6]"अथ यदत परो दिवो ज्योतिर्दीप्यते विश्वत पृष्ठेषु सर्वत पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेषु" इत्यत्रापि अयमेव लोक प्रतिपादित, द्युसंबन्धित्वेनास्य लोकस्य प्रत्यभिज्ञानात् ॥

कौषीतक्युपनिषदि पर्यङ्कविद्याप्रकरणे परब्रह्मासाधारणलोकपुरद्वारमण्टपपर्यङ्कादयो विस्तरेण प्रतिपादितास्तत्रैव द्रष्टव्या ॥

[1] छा ८ १३ १ [2] छा ८ १४ १ [3] प्रश्न ५ ४ [4] प्रश्न ५ ७.
[5] छा ८ ५ ३ [6] छा ३ १३ ७

तदेवं परब्रह्मणोऽसाधारणानां बहूनां लोकानां वेश्मसभादीनां च प्रमाणसिद्धत्वेन [1]"प्रजापतेः सभां वेश्म प्रपद्ये" इत्यत्र प्रजापतिशब्दस्य उत्तरनारायणानुवाकादिषु [2]"प्रजापतिश्चरति गर्भे अन्तः" इत्यादौ भगवति प्रयोगदर्शनात्, [3]"पतिं विश्वस्यात्मेश्वरं" इत्याद्युक्तरीत्या निरुपाधिकसर्वप्रजापतित्वस्य तत्रैवोपपत्तेः प्रकरणवशाच्च भगवत्परत्वावगमात्, [4]"ब्रह्मलोकान् गमयति" इत्यर्चिरादिगतिश्रुतिस्थब्रह्मशब्दस्य परब्रह्मपरत्वे न क्वाऽप्यनुपपत्तिः। अतः परब्रह्मोपासकानेवातिवाहिको गणो नयति, न तु हिरण्यगर्भमुपासीनान्। तदुपासकानाममृतत्वप्राप्त्यपुनरावृत्त्योरसम्भवेन [5]"तयोर्ध्वमायन्नमृतत्वमेति" [6]"परा: परावन्तो वसन्ति" "तेषां न पुनरावृत्तिः" इति श्रुतिविरोधप्रसङ्गात् क्रममुक्तिपरतया तदुभयवर्णनं तु न युक्तम्। [6]"अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति शरीरादुत्थितस्याव्यवधानेन परब्रह्मोपसम्पत्तिश्रवणेन मध्ये क्वचिल्लोके चिरकालविलम्बेन परब्रह्मप्राप्त्यङ्गीकारायोगात्। [7]"ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे" इति श्रुतिस्तु न क्रममुक्तिपरा; तत्र ब्रह्मलोकशब्दस्य चतुर्मुखलोकपरत्वाभावात्। तदभावश्च [8]"ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलं। ब्रह्मलोकमतिक्रम्य तेन याति परां गतिं" इति याज्ञवल्क्यस्मृतिवचनेन मूर्धन्यनाड्या निष्क्रान्तस्य चतुर्मुखलोकातिक्रमप्रतिपादनादवसीयते। तेषां हृदयरश्मीनां मध्ये य एको रश्मिः सुषुम्नाख्यस्तेन सूर्यमण्डलं भित्त्वा, ब्रह्मलोकं-चतुर्मुखलोकमतिक्रम्य, परां गतिं-परमप्राप्यं परं ब्रह्म प्राप्नोतीति तदर्थात्। अतः [9]"ते ब्रह्मलोके तु" इत्यत्र ब्रह्मलोकशब्दः 'ब्रह्मैव लोको ब्रह्मलोक' इति कर्मधारयेण निषादस्थपतिन्यायसिद्धेन परब्रह्मपरः। परब्रह्मणि वर्तमानाः-परब्रह्मध्याननिष्ठा इति यावत्। परान्तकाले-परस्मिन्नन्तकाले, चरमदेहावसाने, परामृतात्-परस्मादमृतात् परब्रह्मणो हेतोः, परिमुच्यन्ति-मुक्तिं प्राप्नुवन्ति। [10]"तत्प्रसादात् परां शान्तिं

[1] छा ८.१४ १. [2] तै आर् ३.१३ १. [3] तै.उ.२. [4] बृ.८ २.१५. [5] छा ८.६.६. [6] छा.८ ३ ४ [7] तै.उ.२. [8] याज्ञ.स्मृ. [9] तै उ २ [10] गी.

स्थानं प्राप्स्यसि शाश्वत" इत्याद्युक्तरीत्या परमात्मप्रसादात् मुक्तिं प्राप्नुवन्तीत्युक्तं भवति।

अथवा [1]"वेदान्तविज्ञानसुनिश्चितार्थाः" इत्यादिश्रुतेरयमर्थः—वेदान्तविज्ञानेन वेदान्तश्रवणजन्यज्ञानेन सुनिश्चितपरमार्थाः, सन्यासयोगात् कर्मणा फलसङ्गकर्तृत्वत्यागरूपाद्योगात्, शुद्धसत्त्वाः निर्मलान्तःकरणाः, यतयः ध्यानयोगनिष्ठा ये, ते, परान्तकाले [2]"भोगेन त्वितरे क्षपयित्वा" इति सूत्रिते चरमदेहावसाने ब्रह्मलोके [3]"अरश्च ह वै ण्यश्चार्णवौ" इत्यादिषु उक्ते परस्य ब्रह्मणो लोके, परामृतात्, ल्यब्लोपे पञ्चमी, परं अमृतं परं ब्रह्म उपसंपद्य, परिमुच्यन्ति [4]"परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इत्युक्तरीत्या परं ब्रह्मोपसंपद्य आविर्भूतस्वरूपा भवन्ति इत्युक्तं भवति। [5]"ब्रह्मणा सह ते सर्वे" इत्यादिपूर्वोदाहृतवचनं तु चतुर्मुखलोकस्थयोगिविषयं, न त्वर्चिरादिगतिविषयम्। अतः क्रममुक्तेः पूर्वोदाहृतश्रुतिविरुद्धत्वात् हिरण्यगर्भोपासकानाममृतत्वप्राप्त्य पुनरावृत्त्योरसंभवेन अर्चिरादिरातिवाहिकगणो न हिरण्यगर्भोपासकान् नयति, अपि तु परब्रह्मोपासकानेवेति ॥

भगवान् बादरायणः स्वसिद्धान्तमाह—

**अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥ ४ ३ १४ ॥**

[विशेषञ्च दर्शयति ॥१५॥]

ब्रह्मकार्यान्तर्गतं चेतनाचेतनात्मकं वस्तु प्रतीक इत्युच्यते, तदालम्बनाः तदुपासकाः तद्व्यतिरिक्ता **अप्रतीकालम्बनाः**, तान् अर्चिरादिरातिवाहिकगणो **नयतीति** भगवान् बादरायणो मन्यते। तत्र हेतुरुच्यते **उभयथा च दोषात्**। कार्यमुपासीनान् नयतीति पक्षे, परं ब्रह्मोपासीनान् नयतीति पक्षे च

[1] तै उ २ [2] ४ १ १९ [3] छा ८ ५ ३ [4] छा ८ ३ ४ [5] कूर्मपु पूर्व १ २९

दोषसभवात् । तत्क्रतुन्यायश्चात्र हेतुरिति शेष । तत्क्रतुन्यायादयमर्थ सिद्धो भवतीति सूत्रार्थ ॥

पञ्चाग्निविद: पुरुषात् ब्रह्मविदश्चातिवाहिकगण: स: ।
अतिवहति यन्नियुक्त: तद्ब्रह्म श्रीनिवासनाम भजे ॥ १८१ ॥

---

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य कलाप्रपूर्णस्य
श्रीदेशिकाचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालायां
चतुर्थाध्यायस्य तृतीय: पाद: ॥

स्पष्टोऽर्थ ॥

अयं भाव —कार्यं हिरण्यगर्भमुपासीनान् नयतीति पक्षे, [1]"अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रुतिविरोधप्रसङ्ग । अत्र हि शरीरात् मूर्धन्यनाड्या निष्क्रम्य अर्चिरादिमार्गेण प्रस्थितस्य परज्योतिश्शब्दितपरब्रह्मप्राप्ति प्रतिपादिता । अत्र हि 'शरीरादुत्थानं कीदृशं, उत्थितस्य परज्योति प्राप्तिश्च कथं, परज्योतिश्शब्दवाच्यं च किं ?' इति जिज्ञासाया जिज्ञासितार्थविवरणाय प्रवृत्तेनोत्तरसन्दर्भेण शरीरात् मूर्धन्यनाड्या निष्क्रमणं शरीरादुत्थानं, तथा निष्क्रान्तस्य अर्चिरादिमार्गेण परज्योति - प्राप्ति परज्योतिश्शब्दवाच्यं च विरजविज्वियत्नृमृत्यु सुकृतदुष्कृतादिभि सर्वथा असम्पृष्टं अकर्मवश्यं परं ब्रह्मेति विवरणात् । अनया श्रुत्या अर्चिरादिना गतस्य ब्रह्मप्राप्तिप्रतिपादनं सिद्धम् । इदं च विस्तरेणाधस्तात् "परं जैमिनि" इति सूत्रव्याख्यानावसरे निरूपितम् । अतोऽर्चिरादिमार्गस्य परब्रह्मप्रापकताया उक्तश्रुतिसिद्धतया हिरण्यगर्भोपासकस्य अर्चिरादिगत्यभ्युपगमे तत्क्रतुन्यायविरोधेन तस्य परब्रह्मप्राप्त्यसंभवादुक्तश्रुतिविरोधो दुरुद्धर ।

---

[1] छा ८ ३ ४

'परं ब्रह्मैवोपासीनान्' इति जैमिनिपक्षे [1]"तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति" इति प्रकृतिवियुक्तप्रत्यगात्मोपासनरूपपञ्चाग्निविद्यानिष्ठानामप्यर्चिरादिगतिश्रुतिविरोध । अत उभयपक्षेऽपि दोष सभवात् प्रतीकोपासकव्यतिरिक्ता ये तानर्चिरादिरातिवाहिकगणो नयतीत्यभ्युपगन्तव्यम् । कार्यस्य हिरण्यगर्भस्य यदुपासन भूमविद्याप्रकरणविहितानि यानि नामादीना ब्रह्मदृष्ट्या उपासनानि श्रुत्यन्तरसिद्धानि अचेतनस्य अचिन्मिश्रचेतनस्य शुद्धचेतनस्य वा उपासनानि तन्निष्ठा सर्वेऽपि प्रतीकालम्बना इति न तान् नयति । तेषा [2]"यावन्नाम्नो गतं, तत्रास्य कामचारो भवति" इत्यादिना अर्चिरादिगतिनिरपेक्षपरिमितफलश्रवणात् ॥

नन्वेव प्रकृतिवियुक्तप्रत्यगात्मोपासकस्यापि प्रतीकालम्बनत्वापत्त्या तेषामर्चिरादिना नयनाभावप्रसङ्ग इति चेत्, उच्यते—पञ्चाग्निविद्यानिष्ठस्याप्यर्चिरादिगतिश्रवणात्, अर्चिरादिना गतस्य ब्रह्मप्राप्तिश्रवणाच्च ब्रह्मोपासनरहितस्य तत्क्रतुन्यायेन ब्रह्मप्राप्त्यसम्भवाच्च ब्रह्मप्राप्तेरन्यथानुपपत्त्या पञ्चाग्निविद्यायामपि ब्रह्मोपासनरूपत्व कल्प्यम् ॥

नन्वेव पञ्चाग्निविद्याया अपि ब्रह्मोपासनरूपत्वाङ्गीकारे [3]"तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इति पञ्चाग्निविदा ब्रह्मविदा च विभागानुपपत्तिरिति चेत, नैवं, तत्क्रतुन्यायेन पञ्चाग्निविद्याया अपि ब्रह्मोपासन रूपत्वे सिद्धे, अन्यथा विभागान्यथानुपपत्त्या उपासने विशेष कल्पनीय । पञ्चाग्निविदा ब्रह्मात्मकस्वोपासनं तदितरब्रह्मविदा तु स्वात्मशरीरकब्रह्मोपासनमिति ब्रह्मण क्वचित् विशेष्यत्वं क्वचित् विशेषणत्व चेति । इदं च ब्रह्मणो विशेषणत्वं नाप्राधान्यरूप, सर्वत्र ब्रह्मण एव आत्मत्वेन प्राधान्यात्, अपि तु प्रकारतारूपविषयताविशेषरूपम् । [4]"ततश्च आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इत्यधिकरणसिद्धान्तरीत्या ब्रह्मण स्वस्य च शरीरात्मभावस्यानुसन्धेयत्वे सिद्धे क्वचित् ब्रह्मशरीरतया स्वस्यानुसन्धानं, क्वचित्तु स्वशरीरकत्वेन स्व प्रत्यात्मत्व-

---

1 2 ६ 3 ५।१।१ 4 ४।१।३

पर्यवसितेन ब्रह्मण उपासनमिति उपासनविषयतामात्रे भेदः। प्राधान्यं तु सर्वत्र ब्रह्मण एव, यथा 'राजपुरुष' इत्यादौ। ततश्च पञ्चाग्निविद्यानिष्ठस्याप्यप्रतीकालम्बनत्वेनाप्रतीकालम्बनानेवार्चिरादिरातिवाहिकगणो नयतीत्यङ्गीकार्यमिति॥

अत्र बादरिजैमिनिबादरायणानां त्रयाणामृषीणां ग्रहणात् [1]"ब्राह्मेण जैमिनिरुपन्यासादिभ्यः" [2]"चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः" [3]"एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः," [4]"अभावं बादरिराह ह्येवं," [5]"भावं जैमिनिर्विकल्पामननात्", [6]"द्वादशाहवदुभयविधं बादरायणोऽतः" इत्यधिकरणयोरिव एकस्मिन् विषये त्रयाणामृषीणां मतभेदप्रतीत्या [7]"कार्यं बादरिः" इत्यादीनां [8]"अप्रतीकालम्बनान्नयति" इत्यन्तानां सूत्राणामेकाधिकरणत्वमेव युक्तम्। ततश्च हिरण्यगर्भमुपासीनान् नयतीति बादरिपक्षस्य तत्क्रतुन्यायेन दूषितत्वस्य, [9]"परं जैमिनिः" इति जैमिनिमतस्य परमुपासीनान् नयतीत्यंशे अङ्गीकृतत्वस्य च सिद्धया, परब्रह्मोपासकानां स्वर्गाप्राप्तयेऽर्चिरादिमार्गेण देशान्तरगमनस्य सूत्रकाराभिमतत्वं दुरपह्नवम्। अत उत्क्रान्तिपादे [10]"प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषां" इत्यस्य परविद्यानिष्ठस्य देहादुत्क्रान्तिनिषेधपरतया व्याख्यानं सूत्रकाराभिप्रायविरुद्धमिति बोद्धव्यम्॥

पद्ये अतिवहति यस्त्रियुक्त इत्यस्याभिप्रायः [11]"तदोकोऽग्रज्वलनं" इति सूत्रे निरूपित द्रष्टव्यः॥

१५० ॥ इति कार्याधिकरणम् ॥ ५ ॥

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य कलाप्रपूर्णस्य
श्रीदेशिकाचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालाप्रकाशे
चतुर्थाध्यायस्य तृतीयः पादः॥

---

[1] ४.४.५ [2] ४.४.६. [3] ४.४.७. [4] ४.४.१०. [5] ४.४.११. [6] ४.४.१२. [7] ४.३.६. [8] ४.३.१४. [9] ४.३.११. [10] ४.२.१२. [11] ४.२.१६.

## चतुर्थाध्यायस्य चतुर्थः पादः ।

### २८ ॥ सपद्याविर्भावाधिकरणम् ॥ १ ॥

पूर्वस्मिन् पादे अर्चिरादिना प्रस्थितस्य ब्रह्मविद आतिवाहिकेनामानवेन [1]"आदित्यवर्णं तमस परस्तात्" [2]"अथ यदत परो दिवो ज्योतिर्दीप्यते" इत्यादिषु उक्तलोकविशेषे अपराजितायतने हिरण्मयदिव्यपर्यङ्के निरतिशय ज्योतिर्मयवासुदेवास्यदिव्यमङ्गलविग्रहविशिष्टतयाऽवस्थितस्य [3]"तदा विद्वान नामरूपात् विमुक्त परात परं पुरुषमुपैति दिव्य" इत्यादिषु मुक्तप्राप्यत्वेनोपदिष्टस्य श्रीनिवासनाम्नो ब्रह्मण प्रापणमुक्तम् । इदानीं चतुर्थपादेन उक्तपरब्रह्म प्राप्त्यनन्तरभाविमुक्तैश्वर्यं निरूप्यते ॥

## संपद्याविर्भावः स्वेन शब्दात् ॥४-४-१॥

[मुक्त प्रतिज्ञानात ॥ २ ॥
आत्मा प्रकरणात ॥ ३ ॥]

संपद्य—परं ज्योतिः प्राप्य, [4]"अभिनिष्पद्यत" इत्युच्यमाना अभिनिष्पत्ति स्वरूपस्य आविर्भावरूपा, "स्वेन" इति रूपस्य विशेषणात तथाऽवगमादिति सूत्रार्थ ।

कर्मतिरोहितरूपो भवत्यय यदुपसंपत्त्या ।
आविर्भवत्स्वरूपः तद्ब्रह्म श्रीनिवासनाम भजे ॥ १८२ ॥

कर्मभिः—पुण्यपापरूपै, तिरोहितं—अप्रकाशितं, आच्छादितमिति यावत, अकार्यकारितया कृतमित्यर्थ । स्वरूप—अपहतपाप्मत्वादिगुणाष्टकरूप स्वधर्मो यस्य तथाविध अयं—जीव संसारी चेतन, यस्य—श्रीनिवासस्य परमपदे श्रीवैकुण्ठनगरे परवासुदेवरूपेणावस्थितस्य उपसंपत्त्या—प्राप्त्या,

१ पृ'' २ ३ ४

आविर्भवत्–निवृत्ततिरोधानं, स्वरूपं-पूर्वोक्तगुणाष्टकं यस्य तथाभूतो भवति तद्ब्रह्म इति पूर्ववत् ॥

अय भाव —संसारदशायामस्य चेतनस्य स्वाभाविकं यदपहतपाप्मत्वादिगुणाष्टकं कर्मभिस्तिरोहितमभूत्, तत् प्रकृतिमण्डलोत्तीर्णे श्रीवैकुण्ठाख्ये लोकविशेषे निरतिशयज्योतिर्मयपरवासुदेवास्यदिव्यमङ्गलविग्रहविशिष्टतया अत्र स्थितस्य श्रीनिवासस्य प्राप्त्या निवृत्तकर्मतिरोधानं भवतीति [1]"परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रुतौ 'स्वेन रूपेणाभिनिष्पद्यते' इत्यनेनोच्यत इति ॥

## पूर्वपक्षः ।

[1]"अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति छान्दोग्ये प्रजापतिविद्याप्रकरणे परब्रह्मप्राप्त्यनन्तरभावितयोच्यमाना प्रत्यगात्मनः स्वरूपेणाभिनिष्पत्तिः न तदीयस्वरूपाविर्भावरूपा, प्रत्यगात्मनः स्वरूपस्य सुषुप्तिदशायां सुखदुःखसंबन्धविरहेण भोग्यत्वाभावस्य [2]"नाहमत्र भोग्यं पश्यामि" इति इन्द्रवचनेन सिद्धतया मुक्तिदशायां तथाविधस्वरूपाविर्भावस्य प्रतिपादने मोक्षशास्त्रस्य पुरुषार्थानुगुणत्वाभावप्रसङ्गात्, अपि तु अपूर्वेण केनचित् आकारेण संबन्ध एव "अभिनिष्पद्यते" इत्यनेनोच्यते । न चैवं तदानीमुत्पद्यमानस्य रूपस्य 'स्वेन' इति विशेषणवैयर्थ्यं, अपूर्वतया उत्पद्यमानस्य रूपस्य स्वीयतायाः अवक्तव्यत्वात् इति वाच्यम्, तदानीमुत्पद्यमानस्य रूपस्य वस्तुतः स्वीयत्वात् तदभिधानपरतया तदुपपत्तेरिति ॥

## सिद्धान्तः ।

परब्रह्मप्राप्त्या प्रत्यगात्मनः अपूर्वस्य कस्यचिदाकारस्य उत्पत्त्यभ्युपगमे रूपस्य स्वीयत्वविशेषणवैयर्थ्यप्रसङ्गः, वस्तुस्थितिकथनतत्परत्वे तु विशेषणस्यानुप-

[1] छा. ८. १२. ३. [2] ...

युक्तैव स्यात्। अतः संसारदशायां तिरोहितस्य प्रजापतिविद्योपक्रमे "अपहतपाप्मा विजरो विमृत्यु" इत्यादिनाऽभिहितस्य प्रत्यगात्मनः स्वाभाविकस्य अपहतपाप्मत्वादिगुणाष्टकस्य परब्रह्मप्राप्त्या तिरोधाननिवृत्तिरूपाविर्भाव एव तत्र "स्वेन रूपेणाभिनिष्पद्यते" इत्यनेन विवक्षितः। तदेतत् प्रजापतिविद्योपक्रमे [1]"अपहतपाप्मा विजरो विमृत्यु" इत्यादिना अपहतपाप्मत्वादिविशिष्टप्रत्यगात्मस्वरूपमुपक्षिप्य तत्स्वरूपजिज्ञासयोपसेदुषे इन्द्राय तदुपदेशप्रवृत्तेन प्रजापतिना [2]"एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इति पुनः पुनः एतच्छब्देन तमेव गुणाष्टकविशिष्टं प्रत्यगात्मानं परामृश्य, अन्ते "एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय" इत्यादिना एतच्छब्दपरामृष्टस्य तस्यैव गुणाष्टकविशिष्टस्य परब्रह्मप्राप्त्या स्वेन रूपेणाभिनिष्पत्त्यभिधानात्, अभिनिष्पद्यमानस्य रूपस्य पूर्वमेव सिद्धतासिद्ध्याऽवगम्यते। प्रत्यगात्मनः कर्मकृततिरोधानेन तदीयज्ञानसङ्कोचं, तिरोधायककर्मनिवृत्त्या ज्ञानविकासे परब्रह्मगुणानुभवजनितानन्दानुभवप्राप्तिं चाभिदधता तदुत्तरवाक्यसन्दर्भेण प्रत्यगात्मस्वरूपाविर्भावस्य पुरुषार्थत्वं श्रुत्यैव स्पष्टीकृतम्। तत्र हि "स यथा प्रयोग्य आचरणे युक्तः एवमेवायमस्मिन् शरीरे प्राणो युक्त" इत्यादिना प्रत्यगात्मसम्बन्धिज्ञानस्य कर्मकृतशरीरसम्बन्धदशायां इन्द्रियाधीनप्रसरणरूपसङ्कोचमुक्त्वा, "स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते, य एते ब्रह्मलोके" इत्यनेन कर्मकृतशरीरसम्बन्धनिवृत्तिदशायां कर्मकृतज्ञानसङ्कोचनिवृत्त्या विकसितज्ञानेन परब्रह्मणः सर्वकल्याणगुणानुभवजनितानन्दप्राप्तिरभिधीयते। सः-कर्मकृतशरीरसम्बन्धेन सङ्कुचितज्ञानः, एष-ब्रह्मप्राप्त्या आविर्भूतस्वरूपः आत्मा, दिव्येन चक्षुषा, मनसा - निरतिशयविकासदशापन्नज्ञानेन, कामान् पश्यन्, ब्रह्मणि ये कामाः-कल्याणगुणाः, तान् पश्यन् रमते इति हि तदर्थः। संसारदशायां कर्मणा सङ्कुचितस्य स्वाभाविकस्य जीवात्मज्ञानस्य कर्मविगमे निरतिशयविकासापत्तिरेव, नोत्पत्तिः इत्ययमर्थः [3]"यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः।

1 छा. ८.७.१. 2 छा. ८.९.३. 3 वि. ध. १०४.५५ ५६.

यथोदपानकरणात् क्रियते न जलाम्बर ॥ सदेव नीयते व्यक्तिमसतः सम्भवः कुतः । तथा हेयगुणध्वंसादवबोधादयो गुणाः । प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते इति शौनकवचनेन स्पष्टीकृतः । नारायणानुवाके "नारायण परो ज्योतिरात्मा नारायण परः" इत्यनेन श्रुतिषु परज्योतिःशब्दनिर्दिष्टस्य नारायणत्वाभिधानात्, प्रजापतिविद्यायां [1]"परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते, स उत्तमः पुरुषः" इत्यत्र परज्योतिःशब्दनिर्दिष्टस्य उत्तमपुरुषत्वाभिधानात्, दहरविद्याप्रकरणे एतमेव परज्योतिःशब्दनिर्दिष्टं [2]"अपहतपाप्मा ह्येष विरजो ब्रह्मलोकः" इत्यत्र एतच्छब्देन परामृश्य तस्यापहतपाप्मत्वमभिधाय अपहतपाप्मतायाः 'हि' शब्देन प्रसिद्धताद्योतनात् प्रसिद्धेश्च, सुबालोपनिषदि [3]'अपहतपाप्मा दिव्यो देव एको नारायणः' इति नारायण एव सत्त्वाच्च अस्मिन् पक्षे यदुपसंपत्त्या आविर्भूतस्वरूपः इत्युक्तम् ॥

१५१ ॥ इति सम्पद्याविर्भावाधिकरणम् ॥ १ ॥

---

२९ ॥ अविभागेन दृष्टत्वाधिकरणम् ॥ २ ॥

परब्रह्मोपसपत्त्या आविर्भूतस्वरूपस्य परब्रह्मानुभवप्रकारमाह—

## अविभागेन दृष्टत्वात् ॥४-४-४॥

मुक्तः स्वात्मानं अविभागेन विभागः पृथक्स्थितिः, तदभावोऽविभागः, अपृथक्सिद्धिरिति यावत् तेन परब्रह्माप्रथक्सिद्धत्वेन अनुभवतीत्यर्थः । तत्र हेतुमाह दृष्टत्वात् इति । यथावस्थितस्वात्मस्वरूपस्य साक्षात्कृतत्वादिति सूत्रार्थः ॥

बन्धकर्मविनिर्मुक्तः पुरुषोऽयं यद्विशेषणत्वेन ।
अनुभवति स्वात्मानं तद्ब्रह्म श्रीनिवासनाम भज ॥१८३॥

बन्धकैः—ज्ञानसंकोचकैः कर्मभिः विमुक्तः–निर्गतिप्रतिबन्धकपरब्रह्मज्ञानः इत्यर्थः अयं पुरुषो मुक्तात्मा, स्वात्मानं स्वस्वरूपं, यद्विशेषण-

[1] छा ८ १२ • [2] छा [3] सुबा

त्वेन यस्य श्रीनिवासस्य अपृथक्सिद्धप्रकारत्वेन, तदधीनसत्तास्थितिप्रवृत्तिकत्वे-नेति यावत्, अनुभवति, तद्ब्रह्म इति पर्यवसन्नम् ॥

## पूर्वपक्षः ।

[1]"सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति श्रुतौ 'पुत्रेण सह ओदनं भुङ्क्ते' इतिवत् मुक्तात्मनो भोगे ब्रह्मसाहित्यं प्रतिपाद्यते । तथा [2]"निरञ्जनः परमं साम्यमुपैति" इति मुक्तौ ब्रह्मणा परमसाम्यापत्तिश्च प्रतीयते । श्रीगीतासु [3]"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" इति साधर्म्यप्राप्तिश्च स्मर्यते । अतोऽत्र प्रतिपादितयोः साहित्यसाम्ययोः प्रत्यगात्मस्वरूपस्य परमात्मस्वरूपात् विभक्तत्व एवोपपत्तेः, प्रत्यगात्मा मुक्तौ स्वात्मानं परमात्मनो विभक्तमेवानुभवति । प्रत्यगात्मपरमात्मनोः शरीरात्मभावेन प्रकारप्रकारिभावश्रुतिस्तु संसारदशाविषया, मुक्तिदशायां तयोः साम्यस्य तत्र पार्थक्यस्य च प्रतिपादनेन प्रकारप्रकारिभावश्रुतेः संसारदशाविषयकतया व्यवस्थापितत्वादिति ॥

## सिद्धान्तः ।

[1]"सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति श्रुतिः 'क्षीरेण सह ओदनं भुङ्क्ते' इतिवत् भोग्यसाहित्यपरा, [1]"ब्रह्मविदाप्नोति परम्" इत्यत्र प्रकृतब्रह्मप्राप्तिप्रकारनिरूपणाय प्रवृत्तत्वात्; न तु भोक्तृसाहित्यपरा । ततश्च ब्रह्म तद्गुणांश्चानुभवतीति श्रुत्यर्थः । ततश्च ब्रह्मापेक्षया गुणानां भोग्यत्वातिशयः श्रुत्या विवक्षितः । उदाहृतपरमसाम्यश्रुतिस्तु मुक्तिदशायां परब्रह्मानुभवे परब्रह्मणा सह परमसाम्यप्राप्तिपरा । ततश्च उक्तश्रुतिद्वयसिद्धसाम्यसाहित्ययोः [1]"य आत्मनि तिष्ठन् आत्मनोऽन्तरो, यमात्मा न वेद, यस्यात्मा शरीरं, यमात्मान-मन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः" इत्यादिश्रुतिप्रतिपन्नस्य जीवात्म-परमात्मनोः शरीरात्मभावरूपप्रकारप्रकारिभावस्य च विरोधाभावेन तद्बोधकवाक्य-योर्यथाबाधकाभावेन मुक्तिदशायामप्युदाहृतश्रुतिसिद्धस्य तयोः प्रकारप्रकारि-

भावस्य दुरपह्नवतया मुक्तः स्वात्मानं 'अहं ब्रह्मास्मि' इति ब्रह्मशरीरतया तत्प्रकारत्वेनैवानुभवतीति ॥

अस्मिन् सूत्रे 'अविभागेन' इत्यविभागपदं न जीवपरयोः स्वरूपैक्यपरम्, तथा सति पूर्वापरसूत्रविरोधप्रसङ्गात् । पूर्वसूत्रे हि परब्रह्मप्राप्त्या जीवस्य स्वरूपाविर्भावः सूत्रितः । ततश्च ब्रह्मणः प्राप्यतायाः प्रत्यगात्मनः प्राप्तृतायाश्च सूत्रितत्वेन [1]"कर्मकर्तृव्यपदेशाच्च" इति सर्वत्र प्रसिद्ध्यधिकरणसूत्रोक्तन्यायेन तयोर्भेदः सूत्रकारैः विवक्षित इति सिद्धम् ॥ एवं [2]"सङ्कल्पादेव तच्छ्रुते" इत्युत्तरसूत्रे मुक्तस्य स्वसङ्कल्पात् पित्रादिसृष्टिप्रतिपादनात् तदसङ्गतिप्रसङ्गः । निर्विशेषचिन्मात्रब्रह्मैक्यापन्नस्य सङ्कल्पसृष्ट्यादिव्यापारासम्भवात् । जगद्व्यापारवर्जाधिकरणे मुक्तस्य जगद्व्यापाराभावप्रतिपादनात्; ईश्वरस्य सृष्ट्यादिजगद्व्यापारप्रतिपादनाच्च तयोर्भेदस्य सूत्रकारैः विवक्षितत्वसिद्धेश्च । एवं परज्योतिरुपसम्पत्त्या स्वरूपाविर्भावस्य निर्विशेषचिन्मात्रब्रह्मैक्यापत्तिरूपत्वे प्रजापतिविद्यायां परंज्योतिरुपसन्नस्य [3]"स तत्र पर्येति जक्षत् क्रीडन् रममाणः" इत्यादिना जक्षणक्रीडादिव्यापारस्य [4]"स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयते" इति सङ्कल्पमात्रेण सृष्ट्यादिव्यापारस्याभिधानासङ्गतिप्रसङ्गः । जक्षणविहरणाद्यभिधानस्य विद्यास्तुतिरूपत्वाङ्गीकारे सूत्रकाराणां [2]"सङ्कल्पादेव तच्छ्रुते" इति तद्विचारासङ्गतिप्रसङ्गः । स्तुतिमात्ररूपत्वे तत्र श्रुतितात्पर्यविरहेण तस्याविचारणीयत्वात् इत्यादिकं बहु वक्तव्यमस्ति । विस्तरभयादुपरम्यते । तत्सर्वमस्मत्कृतव्यासिद्धान्तमार्ताण्डे द्रष्टव्यम् ॥

१५२ ॥ इति अविभागेन दृष्टत्वाधिकरणम् ॥ २ ॥

---

३० ॥ ब्राह्माधिकरणम् ॥ ३ ॥

"सम्पद्याऽऽविर्भावः स्वेन शब्दात्" इति सूत्रे परंज्योतिरुपसम्पन्नस्य स्वरूपाविर्भाव उक्तः । तत्स्वरूपमिदानीं विचार्यते ॥

[1] १.१.४. [2] ४.४.८. [3] छा ८.१२ ३. [4] छा ८.२ १.

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥४-४-५॥

परं ज्योतिरुपसम्पन्न, ब्राह्मेण—परब्रह्मसम्बन्धिना अपहतपाप्मत्वादि सत्यसङ्कल्पत्वान्तगुणाष्टकेन आविर्भवति, गुणाष्टकविशिष्टं सन् आविर्भवतीत्यर्थः । उक्तगुणाष्टकमाविर्भवतीति यावत् । तत्र प्रमाणमाह **उपन्यासादिभ्यः** इति, प्रजापतिविद्याप्रकरणे [1]"य आत्मा अपहतपाप्मा" इति उपन्यासात् । आदिपदेन [2]"स तत्र पर्येति जक्षत् क्रीडन् रममाणः" इत्याद्युपन्यासो गृह्यते ॥

अयं भावः—प्रजापतिविद्यायां [1]'य आत्मा अपहतपाप्मा' इत्यादि, "सत्यसङ्कल्प' इत्यन्तेन प्रत्यगात्मनो दहरविद्याप्रकरणे परब्रह्मसम्बन्धितया श्रुतापहतपाप्मत्वादिगुणाष्टकविशिष्टताभिधानात् अपहतपाप्मत्वादिगुणाष्टकमेव अस्य स्वाभाविकधर्म इत्यवगम्यते, न तु ज्ञानस्वरूपत्वम् । अत्र अस्मिन्नेव प्रकरणे *"स्वेन रूपेणाभिनिष्पद्यते' इत्युक्त्वा [2]"स तत्र पर्येति जक्षत् क्रीडन् रममाणः" इत्यादिना सत्यसङ्कल्पत्वकार्यभूतभक्षणक्रीडादरभिधानादपि सत्यसङ्कल्पत्वमस्य स्वाभाविकधर्म इत्यवसीयते । तत उक्तहेतुभिः प्रत्यगात्मनः संसारदशायां तिरोहितमपहतपाप्मत्वादिगुणाष्टकं मुक्तिदशायामाविर्भवतीति जैमिनेर्मतमिति ॥

अत्रैव मतान्तरमाह—

### चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥४-४-६॥

परंज्योतिरुपसम्पन्नः चितितन्मात्रेण चैतन्यमात्रस्वरूपेण आविर्भवति, चैतन्यमात्रं स्वरूपमाविर्भवतीत्यर्थः । तत्र हेतुमाह **तदात्मकत्वात्** इति । [3]"स यथा सैन्धवघनः' इत्यादिश्रुत्या चैतन्यमात्रस्वरूपत्वावगमात् इत्यौडुलोमिराचार्यो मन्यत इति सूत्रार्थः ॥

अयं भावः— बृहदारण्यके [3]"स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव, एवं वाऽरे अयमात्माऽनन्तरोऽबाह्यः प्रज्ञानघन एव,

---

[1] छा. ८. ७. १ [2] छा. ८. १२. ३ [3] बृ. ६. ५. १३ * छा. ८. १. ३

विज्ञानघन एव ' इत्यत्र प्रत्यगात्मन स्वरूपाभिधानप्रकरणे बहिरन्तश्च कार्त्स्न्येन विज्ञानघनत्वावधारणात् अवधारणस्य च धर्मान्तरव्यवच्छेदार्थत्वाच्चैतन्यमात्र स्वरूपत्वमात्मनोऽवगम्यते । अतो निर्धर्मकं चैतन्यमात्रमेव आत्मन स्वरूपम् । [1]'अपहतपाप्मा'' इत्यादिश्रुतिस्तु आत्मनो न भावरूपधर्मान्तरप्रतिपादनपरा, [1]''अपहतपाप्मा' इत्यादिना, ''अपिपास'' इत्यन्तेन विकारजरामरणशोक-क्षुत्पिपासानामभावस्य, 'सत्यकाम पदेन अनित्यसुखाभावस्य, [1]''सत्यसङ्कल्प'' इत्यनेन उपक्षाराहित्यस्य च प्रतिपादनेन अभावस्याधिकरणस्वरूपत्वेन तद विरोधोपपत्ते । ज्ञानस्य ज्ञानाश्रयत्वायोगेनापि ज्ञानस्वरूपस्यात्मनो न ज्ञानादि धर्मान्तराश्रयत्वसम्भव । अत प्राक् समारब्धाया तिरोहित चैतन्यमात्रं स्वरूपं मुक्तिदशायामाविर्भवति इत्यौडुलोमेर्मतम् ।

इदानीं भगवान् बादरायण स्वसिद्धान्तमाह—

**एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥४-४-७॥**

**एवमपि**-चैतन्यस्वरूपत्वेऽपि, **उपन्यासात्** [1]''य आत्मा अपहतपाप्मा ' इत्यादिना गुणाष्टकवत्त्वोपदेशात, **पूर्वस्य**-गुणाष्टकस्य, **भावात्** सद्भावावगमात, **अविरोध** चैतन्यस्वरूपत्वगुणाष्टकवत्त्वयोर्विरोधाभाव भगवान् **बादरायणो** मन्यत इति सूत्रार्थ ॥

**अपहतपाप्मत्वाद्यैः आविर्भवति स्वयप्रकाशोऽयं ।**
**सत्यपरत्या जीवः तद्ब्रह्म श्रीनिवासनाम भजे ॥ १८४ ॥**
स्पष्टोऽर्थ ॥

**अयं भावः**—[2]''स यथा सैन्धवघन ' इत्यादिश्रुत्या यथा आत्मनो ज्ञानस्वरूपत्वमभिधीयते, तथा [3]'एष आत्मा अपहतपाप्मा ' इत्यादिश्रुत्या सत्यसङ्कल्पत्वादिधर्मवत्त्वमप्यभिधानेन द्वयोरपि श्रुत्यो प्रमाणत्वाविशेषात् उभयश्रुतिसिद्धमात्मनो ज्ञानस्वरूपत्व सत्यसङ्कल्पत्वादिधर्मवत्त्व चोभयमप्यङ्गी

[1] छा ८ ७ १ [2] बृ ४ ५ १३ [3] छा ८ १ ५.

कार्यम्। ज्ञानस्वरूपत्वश्रुत्या [1]"सत्यकाम सत्यसङ्कल्प" इति श्रुतिनाऽऽह्नीकारे, तुल्यन्यायेन तया श्रुत्या ज्ञानस्वरूपताभिधायिश्रुतेर्बाधप्रसङ्गात्। [1]"विज्ञानघन एव" इत्येवकारस्तु न ज्ञातृत्वादिधर्मव्यवच्छेदपर, अपि तु आत्मस्वरूपस्यांशे जडत्वव्यवच्छेदपर। तदिदं तत्रत्यदृष्टान्तवाक्येनैवावगम्यते। सैन्धवघनदृष्टान्ते हि [2]"कृत्स्नो रसघन एव" इत्येवकारेण लवणखण्डे चक्षुरादीन्द्रियान्तरावगत रूपकाठिन्यादिधर्मान्तरं न व्यवच्छिद्यते। अपि तु आम्रफलादिषु प्रदेशविशेषेषु रसभेदवत् लवणखण्डे प्रदेशविशेषे लवणरसवत्त्वाभाव एव व्यवच्छिद्यते। एवमत्राप्यात्मस्वरूपे अंशे ज्ञानस्वरूपत्वाभाव एव एवकारव्यवच्छेद्य, न तु श्रुत्यन्तरावगत ज्ञातृत्वादिधर्मान्तरम्। 'यत् ज्ञानं तत् ज्ञानाश्रय' इति व्याप्तिस्त्वसिद्धा, आत्मनो ज्ञानस्वरूपत्वज्ञानाश्रयत्वयोर्द्वयोरपि श्रुत्यैव प्रतिपादनादिति॥

१८३॥ इति आत्माधिकरणम्॥ ३॥

---

## २१॥ सङ्कल्पाधिकरणम्॥ ४॥

पूर्वाधिकरणे मुक्तस्यापहतपाप्मत्वादिसत्यसङ्कल्पत्वान्तगुणाष्टकाविर्भाव सिद्धान्तित। आविर्भूतस्वरूपस्य साक्षात्कृतपरमात्मशेषभावस्य सत्यसङ्कल्पत्वप्रयुक्त परमात्मानुभवपरीवाहकैङ्कर्यप्रकार इदानीं निरूप्यते॥

## सङ्कल्पादेव तच्छ्रुतेः॥४-४-८॥

[अत एव चानन्याधिपति ॥ ॥]

सङ्कल्पादेव मुक्तस्य सङ्कल्पमात्रादेव इष्टार्थप्राप्ति तच्छ्रुतेः, सङ्कल्पमात्रादेवेष्टार्थप्राप्तिश्रुतेरिति सूत्रार्थ॥

---

[1] छा ४४१ [2] बृ ६ ५ १३

**यत्परिचरणासक्तो मुक्तः सङ्कल्पमात्रेण ।**
**प्राप्नोति कामितार्थान् तद्ब्रह्म श्रीनिवासनाम भजे ॥१८५॥**

**मुक्तः**-कर्मबन्धान्मुक्तः **यत्परिचरणेषु** यस्य-परमपदे वासुदेव-रूपेणावस्थितस्य, श्रीनिवासस्य, अनुभवपरीवाहभूतकैङ्कर्येषु **आसक्तः** सन्-उत्तरोत्तराभिवृद्धमनोरथः सन् **स्वकामितार्थान्**-स्वीयमनोरथविषयभूतानि कैङ्कर्योपकरणानि, **सङ्कल्पमात्रेण**-प्रयत्नान्तरनिरपेक्षेण सङ्कल्पेन, **प्राप्नोति**, **तद्ब्रह्म** इति पूर्ववत् ॥

अयं भावः— छान्दोग्ये [1]"परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते, स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा" इति प्रजापतिविद्या-प्रकरणे श्रूयते। तथा तत्रैव दहरविद्याप्रकरणे [2]"स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति" इत्यादिना पितृमात्रादेः सङ्कल्पादेव प्राप्तिः श्रूयते। तस्याः सङ्कल्पमात्रादेव पित्रादिप्राप्तेः स्त्रीभिर्यानैर्विहरणस्य च मुक्तस्य साक्षात्कृतस्वीयपरमात्मशेषभावस्य स्वभोगार्थत्वं न संभवदुक्तिकम् । तस्य भगवच्छेषतैकस्वरूपत्वं साक्षात्कृतवतो भगवदनुभवव्यतिरिक्तेषु केषुचित् व्यापारेषु प्रवृत्त्यसंभवात् । अत एव भूमविद्याप्रकरणे [3]"आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः" इति मुक्तं प्रकृत्य श्रूयते। अतः पित्रादिप्राप्तिः भगवत्प्रीत्येकोद्देशेन क्रियमाणव्यापारत्वमेव वक्तव्यमिति। यथा च मुक्तव्यापा-राणां भगवत्परिचर्यारूपत्वं तथोपपादितं **व्याससिद्धान्तमार्ताण्डे** द्वितीयपरि-च्छेदेऽस्माभिः ।

## पूर्वपक्षः।

लोके अमोघसङ्कल्पत्वेन प्रसिद्धानां राजादीनामप्यभीष्टार्थप्राप्तौ प्रयत्ना-पेक्षादर्शनात् मुक्तस्याप्यभीष्टार्थप्राप्तिः प्रयत्नसापेक्षैव। न चेश्वरस्य सङ्कल्पादेवे-ष्टार्थप्राप्तिवत् मुक्तस्यापि सङ्कल्पमात्रादेव तत्प्राप्तिः। 'सङ्कल्पादेव' इत्येवकारेण प्रयत्ननैरपेक्ष्यप्रतीतेरिति वाच्यम्। [4]"जक्षत्क्रीडन् रममाणः" इत्यादिना मुक्तस्य

---

[1] छा.८.१२.२. [2] छा.८.२.१. [3] छा ७.२५.२. [4] छा.८.१२.३.

जक्षणक्रीडादिव्यापाराणां श्रवणात् तेषां च कर्मणां बन्धकत्वेन तैः सङ्कल्पप्रतिघातसंभवात् सङ्कल्पादेवेत्यवधारणस्यायोगव्यवच्छेदपरतया सङ्कोचयितव्यत्वात् । ईश्वरस्य तु कर्मवश्यत्वाभावेन सङ्कल्पमात्रादेवेष्टार्थप्राप्त्युपपत्तेरिति ॥

## सिद्धान्तः ।

[1]“सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति” इत्येवकारस्यान्ययोगव्यवच्छेदे स्वारसिकत्वात् तेन ईश्वरस्येव मुक्तस्यापि प्रयत्नान्तरमनपेक्ष्य सङ्कल्पमात्रादेवेष्टार्थप्राप्तिरिति सिद्ध्या, तद्गतजक्षणक्रीडनादिव्यापाराणां पुण्यपापसजातीयानामपि नेच्छाविघातकत्वरूपं बन्धकत्वमित्यवगम्यते । न च तेषां बन्धककर्मत्वे प्रमाणान्तरमुपलभ्यते । अत एव छान्दोग्ये भूमविद्याप्रकरणे [2]“स स्वराड् भवति” इति मुक्तस्याकर्मवश्यत्वरूपं स्वराट्त्वं श्रूयते । तत्र हि ‘स्वराट्’ इत्यस्य ‘स्वयमेव राजा नियन्ता’ इति मुख्यार्थस्य बाधेन अन्यवश्यत्वाभावो नार्थो वक्तव्यः । ततश्च [3]“य आत्मानमन्तरो यमयति” इति परमात्मनियाम्यतया श्रुतस्य प्रत्यगात्मनोऽन्यनियाम्यत्वाभावासंभवात् । मुक्तप्रकरणाच्च कर्मवश्यत्वाभावरूपमेव स्वराट्त्वं वक्तव्यम् । अपहतपाप्मत्वमपि तदनुष्ठितपुण्यपापसजातीयकर्मफलाश्लेषरूपमेव । स्वर्गप्राप्तिफलककर्मफलभूतभोगानामिव मुक्तकृतजक्षणादिव्यापाराणामपि पुण्यपापफलत्वासंभवात् ‘सङ्कल्पादेव’ इत्येवकारस्य स्वरसप्राप्तान्ययोगव्यवच्छेद एवार्थः स्वीकरणीयः । मुक्तस्य ईश्वरस्येव प्रयत्नान्तरनिरपेक्षसङ्कल्पमात्रेणैव भगवदनुभवोपकरणभूतस्वाभीष्टार्थप्राप्तिरिति । “परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति जक्षत्क्रीडन् रममाणः” इत्यत्र परंज्योतिश्शब्दोक्तस्य उत्तमपुरुषत्वं ‘स तत्र पर्येति’ इति मुक्तस्य तदनुभवं चाभिधाय, ‘जक्षत्क्रीडन् रममाणः’ इत्यादिना अनुभवप्रकारनिरूपणात्, ‘उत्तमः पुरुषः’ इत्यनेन भगवतः श्रीनिवासस्य प्रत्यभिज्ञानाच्च, अस्मिन् पद्ये यत्पारिचर्यासक्त इत्युक्तम् ॥

१२२ ॥ इति सङ्कल्पाधिकरणम् ॥ ८ ॥

---

[1] छा. ८. २.   [2] छा. ७. २५.   [3] बृ. ५. ७.

## ३२ ॥ अभावाधिकरणम् ॥ ५ ॥

पूर्वाधिकरणे मुक्तस्य सङ्कल्पमात्रात् भगवत्परिचरणोपयुक्तपित्रादिसृष्टि-रुक्ता, इदानीं मुक्तस्य सङ्कल्पविशेषो निरूप्यते ॥ तत्र बादरिमतमाह—

## अभावं बादरिराह ह्येवम् ॥४-४-१०॥

सिद्धान्तसूत्रे [1]"तन्वभावे सन्ध्यवदुपपत्तेः," "भावे जाग्रद्वत्" इति वक्ष्यमाणत्वात्, अस्मिन् सूत्रे अनन्तरसूत्रे च अभावभावशब्दौ शरीराभावतत्सद्भावपरौ इति निश्चीयते। अत एव सूत्रार्थः— मुक्तस्य शरीराभावं बादरिः आचार्यो मन्यते। तत्र हेतुं आह ह्येवं। एवं-मुक्तमशरीरं श्रुतिः आह हि इति ॥

अथ भावः—छान्दोग्ये प्रजापतिविद्याप्रकरणे [2]"न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति शरीरसम्बन्धे सुखदुःखयोरवर्जनीयता शरीरसम्बन्धाभावे सुखदुःखयोरभावं च प्रतिपाद्य, [2]"अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य" इत्यादिना मुक्तिदशायां शरीरादुत्थानाभिधानात् मुक्तस्य शरीरं नास्तीति ज्ञायते इति ॥

अत्र जैमिनेर्मतमाह —

**भावं जैमिनिर्विकल्पामननात् ॥ ४ ४-११ ॥**

मुक्तस्य शरीरसद्भावं जैमिनिः आचार्यो मन्यते। तत्र हेतुः विकल्पामननात् इति। विविधः कल्पो विकल्पः, विविधत्वमित्यर्थः, तस्य आमननात् श्रवणादिति सूत्रार्थः ॥

अथ भावः छान्दोग्ये भूमविद्याप्रकरणे [3]"स एकधा भवति त्रिधा भवति" इत्यादिना मुक्तस्य त्रिधाभवनादिकं श्रूयते। तच्च आत्मस्वरूपस्य ऐक-

---

[1] ४ ४ १३,१४ । [2] छा ८ १२ १ [3] छा ७ २६ २

नावसभवात् शरीरद्वारकमेव त्रिधाभवनं वक्तव्यमिति तया श्रुत्या मुक्तस्य शरीरसद्भावसिद्धेः सशरीर एव मुक्तः। अशरीरत्वश्रुतिस्तु सुखदुःखहेतुभूतशरीराभावपरेति। तदेवं मुक्तोऽशरीर एवेत्येकं मतं, सशरीर एवेत्यपरं मतमिति मतद्वयं दर्शितम्।

अत्र भगवान् बादरायणः स्वमतमाह—

**द्वादशाहवदुभयविधं बादरायणोऽतः ॥ ४-४-१२ ॥**

[तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥

भावे जाग्रद्वत् ॥ १४ ॥

प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥]

**अतः**–सङ्कल्पात्, मुक्तं, **उभयविधं**-सशरीरमशरीरं च भगवान् **बादरायणो** मन्यते, तत्र दृष्टान्तः **द्वादशाहवत्** इति। *यथा द्वादशाहाख्यः क्रतुः सङ्कल्पभेदेन उभयविधो भवति, तद्वत् इति सूत्रार्थः ॥*

**सतनुः कदाचिदतनुः भूत्वा मुक्तो यथाकामम्।**
**अनुभवति यस्य लीलां तद्ब्रह्म श्रीनिवासनाम भजे ॥१८६॥**
स्पष्टोऽर्थः ॥

अयं भावः— यथा द्वादशाहः क्रतुः एकयजमानसङ्कल्पे अहीननामा भवति, बहुयजमानसङ्कल्पे सत्रनामा भवति, तथा [1]"स यदि पितृलोककामो भवति" इति मुक्तकर्तृकस्वेच्छिकत्वश्रवणात् यदा मुक्तः 'सशरीरः स्याम्' इति सङ्कल्पयति तदा सशरीरो भूत्वा भगवन्तमनुभवति, यदा तु 'अशरीरः स्याम्' इति सङ्कल्पयति तदा अशरीर एव भूत्वा भगवन्तमनुभवतीति शरीरवत्त्वस्य न नियमः। यथा शरीरवत्त्वे अनियमः, तथा शरीरस्रष्टृत्वेऽप्यनियमः।

[1] छा ८.२ १.

यदा ईश्वरो मुक्तस्य शरीरं सङ्कल्पयति, तदा ईश्वरसृष्टशरीरेणैव मुक्तो भगवल्लीलामनुभवति। यथा स्वप्नावस्थो जीवः, [1]"य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः, तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते" इत्यादिश्रुतिसिद्धेश्वरसृष्टशरीरेणैव सुखदुःखभोगमनुभवति तद्वत्। अयं च स्वप्नदृष्टान्त ईश्वरसृष्टशरीरेण भोगमात्रे, न तु सुखदुःखभोगेऽपि, मुक्तस्य दुःखानुभवाभावश्रवणात्। यदा तु 'मुक्तः सङ्कल्पेन सृजतु' इति ईश्वर इच्छति, तदा मुक्तः सङ्कल्पद्वारा ईश्वरसृष्टशरीरेण भगवल्लीलामनुभवति। यथा जाग्रदवस्थो जीवः जीवव्यापारद्वारा ईश्वरसृष्टेन शरीरेण भोगमनुभवति, तद्वत्। ईश्वरो हि लीलाप्रवृत्तः सन् वसुदेवादीन् पितॄन् सङ्कल्प्य स्वयं मनुष्यधर्मा सन् यथा लीलारसमनुभवति, तथा स्वलीलार्थं मुक्तानामपि पित्रादीन् सृजति; मुक्ताश्च ईश्वरसृष्टैः तैः पित्रादिभिः पित्रादिमन्तो भूत्वा मनुष्यधर्माणो भगवदनुभवलीलान्तर्गतं रसमनुभवन्ति। कदाचिन्मुक्ताः ईश्वराभिप्रायमनुसृत्य स्वयमेव स्वसङ्कल्पेन स्वस्य पित्रादीन् सृष्ट्वा मनुष्यधर्माणो भूत्वा भगवदनुभवान्तर्गतं स्वलीलारसं भुञ्जते। भगवदभिप्रायानुरोधेन कृतायाः पित्रादिसृष्टेः भगवति निरतिशयप्रीतिकारित्वात्न भगवत्प्रियतमत्वैकल्यम्; न वा मुक्तानां भोगान्तरपरता। एवं नित्यविभूतावपि [2]"स तत्र पर्येति जक्षत्क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा" इत्यत्र मुक्तव्यापारतया श्रुतानां स्त्रीभिः विहरणादीनां बन्धकत्वाभावस्य [3]"अत एव चानन्याधिपतिः" इति सूत्रोक्तत्वात् भगवदभिप्रायानुरोधेन तैः कृतत्वसंभवाच्च कामपुरुषार्थस्य तत्र सत्त्वेऽपि न विरोधः इति केचित्॥

वस्तुतस्तु [4]"आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः" इत्यादिना मुक्तस्य परमात्मानुभवानन्तर्गतविषयानुभवाभावप्रतिपादनात् स्त्र्यादिभिर्विहरणादीना ताभिः समं भगवत्प्रीत्युद्देशेन भगवतः पुरतो नर्तनगानादिरूपकैङ्कर्यस्यापत्यसंभवात्; भगवच्छेषत्वैकरसस्वरूपस्वयाथात्म्यविदः स्त्र्यादिविषयकामनाया एवासंभवात्; उत्तरत्र अनावृत्तिसूत्रश्रीभाष्ये "अनवधिकातिशयानन्दं ब्रह्मानुभवतो

[1] कठ.२.५.८ [2] छा.८.१२.३. [3] ४.४.९ [4] छा.७.२५.२.

ऽन्यापेक्षातदर्थारंभासंभवात्" इति भाषितत्वाच्च न तत्र स्वर्गादाविव काम-पुरुषार्थानुभवः ॥

नन्वेवं मुक्तस्यानेकशरीरपरिग्रहाभ्युपगमे अणोस्तस्य युगपदनेकशरीर-सम्बन्धासंभवेन युगपदनेकेषां शरीराणां प्रवर्तनानुपपत्तिरिति चेदुच्यते एकस्मिन् प्रदेशे स्थितस्य प्रदीपस्य यथा प्रभया अनेकदेशव्याप्तिः, एवमणोरपि मुक्तस्य प्रभास्थानीयेन निवृत्ततिरोधानतया निरतिशयविकासवता स्वधर्मभूतज्ञानेन युगपदनेकशरीरेषु व्याप्तया तत्प्रवर्तनसंभवात् । अस्यार्थस्य [1]"बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवस्स विज्ञेय स चानन्त्याय कल्प्यते" इति श्रुतिसिद्धत्वाच्च नानुपपत्तिः । अत्र अणोर्जीवस्य मुक्तिदशायामुच्यमानमानन्त्यं न स्वरूपेण, निर्विकारत्वेन श्रुतस्यास्य स्वरूपपरिणामासंभवात्, अपि तु ज्ञानद्वारैवेति वक्तव्यमिति ॥

नन्वेवमपि [2]"प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं" इति बृहदारण्यके श्रुत्या परं ब्रह्म प्राप्तस्य बाह्याभ्यन्तरविषयज्ञानाभावोक्त्या कथं मुक्तस्य ज्ञानेन युगपदनेकशरीरव्याप्तिरिति तु न शङ्कनीयम्-उदाहृतश्रुतेः सुषुप्तिमरणान्यतरविषयकत्वेन मुक्तविषयकत्वाभावात् । सुषुप्तस्य मृतस्य च ब्रह्मप्राप्तिः तद्दशायां ज्ञानाभावश्च श्रुतः । छान्दोग्ये प्रजापतिविद्याप्रकरणे सुषुप्त्यवस्थामुपक्रम्य [3]"नाह खल्वयमेवं संप्रत्यात्मानं जानाति अयमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति" इति तद्दशायां ज्ञानाभाव उक्तः । तस्यामेव दशायां छान्दोग्ये सद्विद्याप्रकरणे [4]"सता सोम्य तदा संपन्नो भवति" इति सुषुप्तस्य ब्रह्मप्राप्तिश्चोक्ता । [5]"वाङ्मनसि संपद्यते" इत्यारभ्य, [5]"तेजः परस्यां देवतायां" इति मरणदशायां ब्रह्मप्राप्तिरुक्ता । [6]"विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" इति मरणदशायां ज्ञानाभावश्चोक्तः, 'विनश्यति'

---

1 श्वे.५.७ 2 बृ ६.३.२१ 3 छा ८.११.१. 4 छा ६.८.१.
5 छा ६.८.६ 6 बृ ४.४.१२.

इत्यस्य ज्ञानाभावपरत्वात्। अतः [1]"प्राज्ञेनाऽऽत्मना सम्परिष्वक्तः" इति श्रुतिः सुषुप्तिमरणयोरन्यतरविषया; [2]"सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इत्यादिश्रुतिषु मुक्तस्य सार्वज्ञ्यश्रवणात्। पश्यः-ब्रह्मसाक्षात्कर्ता, सर्वं वस्तु, पश्यति-साक्षात्करोतीति तदर्थः। तदेवं मुक्तस्य युगपदनेकशरीरपरिग्रहेऽपि ज्ञानद्वारा तानि सर्वाणि शरीराणि व्याप्य तत्प्रवर्तनसम्भवात् नानुपपत्तिरिति ॥

१५५ ॥ इति अभावाधिकरणम् ॥ ५ ॥

---

— ३२ ॥ जगद्व्यापारवर्जाधिकरणम् ॥ ६ ॥

पूर्वाधिकरणे मुक्तस्य सङ्कल्पमात्रेण परमपुरुषानुभवान्तर्गतशरीरादि-सृष्टिरुक्ता; इदानीं तस्य सत्यसङ्कल्पत्वेऽपि जगत्स्रष्टृत्वं नास्तीति निरूप्यते ॥

## जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥४-४-१७॥

[प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥
विकारावर्ति च तथा हि स्थितिमाह ॥ १९ ॥
दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥
भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥
अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥]

मुक्तैश्वर्यं, जगद्व्यापारवर्जं-जगद्व्यापारः-जगन्नियमनं, तद्वर्जं-तद्रहितमित्यर्थः। तत्र हेतुमाह प्रकरणादसन्निहितत्वाच्च इति। परं ब्रह्म प्रकृत्य तत्कर्तृकत्वेन जगत्सृष्ट्याद्यभिधानात्, जगत्सृष्ट्याद्यभिधानप्रकरणे जीवस्याप्रस्तुतत्वाच्चेति सूत्रार्थः ॥

**मुक्तः स भोगमात्रे परमं साम्यं प्रयाति येन समं ।**
**विच्छेदकथारहितं तद्ब्रह्म श्रीनिवासनाम भजे ॥ १८७ ॥**

---

[1] बृ ४-४-१२ [2] छा ७-२६-२-

अत्र भोगमात्रे इति 'मात्र'शब्देन मुक्तस्य जगद्व्यापारे ब्रह्मणा साम्यं व्यवच्छिद्यते। शिष्टं स्पष्टम्॥

आधिकरणरत्नमाला ग्रथिता श्रीदेशिकार्येण।
उल्लासमावहन्ती जयतु श्रीश्रीनिवासहृदयेऽसौ ॥ १८८ ॥

---

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य कलाप्रपूर्णस्य
श्रीदेशिकाचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालायां
चतुर्थाध्यायस्य चतुर्थः पादः ॥
॥ श्रीशारीरकाधिकरणरत्नमाला समाप्ता ॥
श्रीः

---

पूर्वपक्षः।

[1]"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इति मुक्तस्य परब्रह्मणा साम्यं श्रूयते; तथा [2]"स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति" इत्यादिना तस्य सत्यसङ्कल्पत्वं च श्रूयते। तदिदमुभयं मुक्तस्य जगन्नियन्तृत्वरूपं जगदीश्वरत्वं विना नोपपद्यते; मुक्तस्येश्वरत्वाभावे ब्रह्मणा समं साम्ये पारम्यभङ्गप्रसङ्गात्, सङ्कल्पप्रतिघाते सत्यसङ्कल्पत्वभङ्गप्रसङ्गाच्च। अतो मुक्तस्यापि परब्रह्मण इव जगन्नियन्तृत्वरूपमीश्वरत्वमवश्यमभ्युपगन्तव्यम्। अत एव मुक्तं प्रकृत्य [3]"स स्वराड् भवति, तस्य सर्वेषु लोकेषु कामचारो भवति", "इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्" इत्यादिषु तस्य सर्वलोकसञ्चार-कामान्नित्वकामरूपत्वादिकं श्रुतमुपपद्यते। सर्वलोकसञ्चारस्य तन्नियमनमन्तरा

---

[1] मु ३.१.३ [2] छा.८.२.१ [3] छा ७.२५.२

प्रयोजनान्तरानुपलब्ध्या तन्नियमनार्थत्वावगमात्, कामान्नित्वादिना लोकानां तदधीनत्वावगतेश्च ॥

न च मुक्तस्य सर्वलोकसञ्चारस्य तत्र तत्र भोगार्थतयोपपत्तेर्न तन्नियमनार्थत्वं कल्पनीयमिति वाच्यम्, विकारास्पदतया हेयभूतानां लोकानां तदन्तर्गतपदार्थानां च भोग्यत्वासंभवात्। न च लोकानां तदन्तर्वर्तिनां च हेयत्वेन भोग्यत्वासंभवेऽपि स्वस्वामिभूतपरब्रह्मविभूतित्वेन भोग्यताबुद्धिसंभवात् परब्रह्मविभूतिभूतलोकानां तद्विभूतित्वेनानुभवाय तत्तल्लोकसञ्चारोपपत्तिरिति वाच्यं; [1]"स स्वराड् भवति" इति मुक्तस्याधिपत्यन्तरशून्यत्वप्रतिपादनेन तं प्रति ब्रह्मणो मुक्तिदशायां नियन्तृत्वाभावप्रतीतेरिति ॥

## सिद्धान्तः ।

[2]"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्तीति, तद्विजिज्ञासस्व, तद् ब्रह्मेति" इति जगतः सृष्ट्यादिरूपनियन्तृत्वस्य ब्रह्मलक्षणत्वाभिधानात् तस्य परब्रह्मासाधारणत्वं प्रतीयते, असाधारणधर्मस्यैव लक्षणत्वात्। अतः परब्रह्मासाधारणतया श्रुत जगन्नियन्तृत्वरूपं जगदीश्वरत्वं मुक्तस्य न संभवति ; संभवे परब्रह्मासाधारण्यभङ्गप्रसङ्गात्। एवं [3]"भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः", [4]"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः। एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय" [5]"यः पृथिव्यां तिष्ठन्" इत्यारभ्य, [5]"यः पृथिवीमन्तरो यमयति" इत्यादिषु सर्वस्य जगतः तत्तत्कार्येषु प्रवर्तनरूपं तत्तन्नियन्तृत्वं परब्रह्मण एव श्रूयते। एवं [6]"एकः शास्ता न द्वितीयोऽस्ति शास्ता" इति परमात्मव्यतिरिक्तस्य जगन्नियन्तृत्वं निषिद्ध्यते। एवं [7]"मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरं। हेतुनाऽनेन

---

[1] छा.७.२५.२. [2] तै.भृगु १. [3] तै.आन.८.१. [4] बृ.५.८.९. [5] बृ.५.७.३. [6] .. [7] गी.९.१० ११.

यैर्न्तेय जगद्धि परिवर्तते ॥ विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इत्यादिस्मृतिष्वपि परमात्मन एव जगन्नियन्तृत्वमसाधारणमभिधीयते। अतो जगन्नियमनस्य भगवदसाधारणत्वागमात्, मुक्तस्य न जगन्नियन्तृत्वरूपतगदीश्वरत्वं सम्भवति ॥

मुक्तस्य परब्रह्मणा परमसाम्यश्रुतिस्तु अन्यथासिद्धतया न तस्येश्वरसाधनक्षमा। तथा हि [1]"तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इत्यत्र केन कस्मिन्नंशे साम्यमिति जिज्ञासाया, [1]"विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इत्युक्तिभङ्ग्या विद्यानिर्वर्त्यं यत्पुण्यपापविधूननं तन्निर्वर्त्यफले साम्यमिति प्रतीयते। विद्या च ब्रह्मानुभवप्रतिबन्धकं यत्पुण्यपापरूपं कर्म तत्प्रायश्चित्तरूपा। तथा च निर्वर्त्यमानपुण्यपापरूपकर्मविधूननिर्वर्त्यं फलं ब्रह्मानुभव एव। पुण्यपापरूपकर्मणा तत्प्रतिबन्धकत्वं च [2]'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढा" इत्यादिश्रुतिसिद्धम्। अहरहर्गच्छन्त्योऽपि इमाः प्रजा एतं ब्रह्मलोकं परब्रह्म, न विन्दन्ति न प्राप्नुवन्ति, न जानन्तीति यावत्। हि यत्, अनृतेन पुण्यपापरूपकर्मणा प्रत्यूढाः प्रतीपं नीताः, प्रतिरुद्धज्ञाना इति तदर्थः। ततश्च ब्रह्मानुभवप्रतिबन्धकपुण्यपापरूपकर्मणां प्रायश्चित्तरूपया ब्रह्मविद्यया विनाशे, कर्मभिः प्रतिबद्धं यत् ब्रह्मानुभवरूपं फलं तत्प्राप्तेरेव प्रतिबन्धकनिवृत्तिफलत्वात्, ब्रह्मानुभवरूपतथाविधफलांश एव साम्यमत्र विवक्षितमिति। परस्य ब्रह्मणः पूर्वार्धे प्रस्तुततया तेनैव साम्यमिति च निश्चीयते। ब्रह्मानुभवरूपसाम्ये पारम्यं च अनुभूयमाने ब्रह्मणि तद्गुणेषु तद्विभूतिषु च एकदेशस्याप्यपरित्यागेन सर्वविषयकत्वरूपमिति सर्वकल्याणगुणविभूतिविशिष्टब्रह्मानुभवे साम्यमिति लभ्यते। इदमेव च साम्यं [3]"सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके'

[1] मु ३ १ ३ [2] छा ८ ३ २ [3] तै आन १ २

इत्यादिष्वभिधीयते। एवं मुक्तस्य परिपूर्णब्रह्मानुभवसिद्धौ तद्रूपानन्दसाम्यमप्यनयैव श्रुत्या सिद्धम्। एतेन मुक्तौ जीवब्रह्मणोः परमसाम्यश्रुत्या भेदनिरासं वदन्तो निरस्ताः। [1]"ब्रह्मवित् ब्रह्मैव भवति" इत्यादिश्रुतिरपि उक्तश्रुतिसिद्धात्यन्तसाम्यविषयैव॥

तदेवं मुक्तौ परमसाम्यश्रुतेरुक्तरीत्या अन्यथासिद्धतया न तया मुक्तस्येश्वरत्वसिद्धिः। नापि [2]"इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्" इत्यादिसर्वलोकसञ्चारश्रुतिभिस्तस्य जगन्नियन्तृत्वसिद्धिः। तत्र हि [3]"एतमानन्दमयमात्मानमुपसंक्रम्य" इत्युपक्रमात् 'आनन्दमयं परमात्मानमनुसृत्य सञ्चरन्' इत्यर्थलाभात् "येन येन धाता गच्छति तेन तेन सहैव गच्छति" इति श्रुत्यन्तरसिद्धा स्वविभूतिभूतलोकेषु सञ्चरतो भगवतोऽनुयात्रा मुक्तस्य प्रतिपाद्यते। 'कामान्नी' इति तदीयकल्याणगुणानुभवः; 'कामरूपी' इति भगवदनुयात्रानुगुणस्वेच्छाधीनदिव्यरूपवत्त्वं च प्रतिपाद्यते, न तु जगन्नियमनार्थसञ्चारः। अयं चार्थः [2]"कामरूप्यनुसञ्चरन्" [4]"एतत्साम गायन्नास्ते हा वु हा वु हावु" इत्युत्तरवाक्यैर्निर्णीयते। तत्र हि भगवदनुयात्रायां भगवद्गुणलीलादिगानतदनुसन्धानजनितहर्षप्रकर्षकृतनर्तनादिकं प्रतिपाद्यते। एतद्वाक्यस्यार्थश्च अस्मत्कृत-**व्याससिद्धान्तमार्ताण्डे नित्यविभूतिवैभवे** च स्पष्टीकृतः तत्रैव द्रष्टव्यः। विकारास्पदतया हेयभूतानामपि लोकानां स्वस्वामिभूतभगवद्विभूतित्वेनानुभवे न काऽप्यनुपपत्तिः। प्रत्युत स्वामिविभूतित्वेनानुभवः प्रीत्यतिशयमेव जनयति। मुक्तो हि निर्धूतनिखिलविकारमनन्तकल्याणगुणास्पदं सविभूतिकं ब्रह्मानुभवन् तद्विभूतितया सर्वानपि लोकाननुभवति। अतो न तदनुभवस्य सांसारिकानुभवतुल्यताप्रसङ्गः; न वा तदनुभवरूपमुक्तिफलस्यानित्यत्वप्रसङ्गः। मुक्तविषया [5]"स्वराट्" इति श्रुतिर्मुक्तिदशायां न भगवच्छेषत्वनिवृत्तिपरा। [5]"स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्" इति सामानाधिकरण्येन मुक्तस्यापि भगवन्तं प्रति शरीरत्वाभिधानात्॥

---

[1] मु.३.२.९. [2] तै.भृगु.१०.५. [3] तै.भृगु १०.५. [4] तै. [5] तै.नार.

पूर्वत्र [1]"यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायण स्थित" इति भगवत सर्वत्राऽऽत्मतया व्याप्तिमभिधाय तन्निबन्धनसामानाधिकरण्याभिधानप्रकरणे [1]"स ब्रह्मा स शिव" इति ब्रह्मशिवादीनामिव [1]"सोऽक्षर परम स्वराट्" इति 'स्वराट्'शब्देन [1]"स स्वराड् भवति" इति स्वराट्शब्दनिर्दिष्टं मुक्तं प्रत्यभिज्ञाप्य तस्यापि भगवन्नियाम्यतापर्यवसिततच्छरीरत्वाभिधानात् [1]"स स्वराट्" इति स्वराट्छब्द कर्मवश्यत्वाभावपर इति प्रागेवोक्तम्। तदेवमुदाहृतेन [1]"सोऽक्षर परम स्वराट्" इति सामानाधिकरण्येन [2]"य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीर य आत्मानमन्तरो यमयति", [3]"एष ह्येवानन्दयाति" इत्यादिश्रुतिभिर्मुक्तस्य सत्तास्थितिप्रवृत्तीना भगवदायत्तत्वसिद्धे, स्वाभाविकस्यापि सत्यसङ्कल्पत्वस्य कर्मभिस्तिरोहितस्य परमात्मानुग्रहेणाऽऽविर्भावश्रवणाच्च मुक्तैश्वर्यं सर्वमपि भगवदिच्छायत्तमिति तस्य परमपुरुषासाधारणजगन्नियमनरूपमैश्वर्यमिति ॥

नन्वेवं मुक्तस्येश्वरपरतन्त्रत्वे कदाचिदीश्वरस्य परमपदान्निवर्तनसङ्कल्पान्मुक्तस्य पुनरावृत्ति स्यात् ततश्च मोक्षपुरुषार्थस्यानित्यता न स्यादिति चेत्, मैवं—अनन्यथासिद्धश्रुत्येकसमधिगम्यस्यार्थस्य यथाश्रुति प्रतिपत्तव्यतया [4]"स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते", बृहदारण्यके [5]"तत्पुरुषो मानस एत्य ब्रह्मलोकान् गमयति, तेषु ब्रह्मलोकेषु परा परावन्तो वसन्ति, तेषा न पुनरावृत्ति" इत्यादिषु श्रुतिषु भगवत्परतन्त्राणामेव सता मुक्तिस्थानभूतं भगवल्लोकविशेषं प्राप्ताना पुनरावृत्तिनिषेधेन उक्तशङ्काया एवायुक्तत्वात्। अत्र हि द्वितीयश्रुतौ [5]"परावन्तो वसन्ति" इत्यत्र 'परावन्त' इत्यस्य 'परवन्त' इत्यर्थ, परतन्त्रा इति यावत्। दीर्घश्छान्दस। अत्र 'न पुनरावृत्ति' इति पुनरावृत्ति प्रतिषिध्यते। प्रतिषेधश्च प्रसक्तिपूर्वक, प्रसक्तिश्च तल्लोकस्वामिनो भगवत तल्लोकं प्राप्ताना स्वपरतन्त्राणा निवर्तनेच्छया वा पारतन्त्र्यस्य

[1] तै नार [2] बृ ५ ७ २२ [3] तै आन ७ २ १ [4] छा ८ १५ १० [5] बृ ८ २ १५.

दुःखात्मकत्वात् परतन्त्राणां ततः पुनः प्रतिनिवृत्तीच्छया वा स्यात्। ततश्चानेन प्रतिषेधेन भगवतस्तन्निवर्तनेच्छायाः, मुक्तानां ततः प्रतिनिवृत्तीच्छायाश्चानुदयः सिद्धः। तेन तल्लोकाधिपतेर्भगवतः तन्निवर्तनेच्छाहेतुभूतरागद्वेषमदमात्सर्यनिर्दयत्वादिनिखिलदोषास्पृष्टत्वं, आश्रितवात्सल्यादिकल्याणगुणपुष्कलत्वं च स्वाभाविकं सिद्धम्। अत एव हि [1]"समस्तहेयरहितं विष्ण्वाख्यं परमं पदं। क्लमतन्द्रीभयक्रोधकामादिभिरसंयुतः॥ परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे। समस्तकल्याणगुणात्मकोऽसौ" इत्यादिषु भगवतो निरस्तनिखिलदोषत्व कल्याणगुणाकरत्वं चाभिधीयते। अत्र प्रथमश्लोके 'विष्ण्वाख्यं परमं पदं' इत्यत्र 'पद्यत इति पदं' इति व्युत्पत्त्या पदशब्दः परमात्मस्वरूपपरः। तल्लोकं प्राप्तानां भगवत्परतन्त्राणां ततः पुनः प्रतिनिवृत्तीच्छाप्रसक्तप्रतिनिवृत्तिप्रतिषेधेन भगवत्पारतन्त्र्यस्य निरतिशयपुरुषार्थत्वेन दुःखानात्मकत्वं तल्लोकाधिपतेर्भगवतो निरस्तनिखिलदोषतया कल्याणगुणैकतानतया च तदनुभवस्य निस्सीमनिरतिशयानन्दहेतुत्वं तस्य क्षणमात्रविच्छेदे तदसहिष्णुतापादकत्वं, भगवदनुभवव्यतिरिक्तविषये अमृतमास्वादयतः आरनाले इच्छाप्रसराभाववत् सर्वविधेच्छानुत्पादश्च इत्यादयोऽर्थात् सिद्धाः। तथा पारतन्त्र्यस्य संसारदशायां दुःखहेतुताया दर्शनेन मुक्तिदशायां तदनुदयेन च तद्दशायां पारतन्त्र्यजिहासाहेतुभूतरजस्तमोगुणास्पृष्टत्वं, तल्लोकवर्तिनां तल्लोकस्य च [2]"तमसः परस्तात्", [3]"क्षयन्तमस्य रजसः पराके" इत्यादिश्रुत्यन्तरसिद्धम् सत्त्वरजस्तमोरूपगुणत्रयात्मकत्रिगुणद्रव्यविलक्षणद्रव्यरूपत्वं [4]"तेषु लोकेषु पराः परावन्तो वसन्ति" इति वर्तमाननिर्देशेन [4]"न पुनरावृत्तिः" इति पुनरावृत्तिनिषेधेन च तल्लोकस्य नित्यत्व च सिद्धम्॥

तदेवमुदाहृतश्रुत्या भगवतो लोकविशेषः, तस्य बहुत्व तेषां भगवदसाधारण्यं, अप्राकृतत्वं, नित्यत्वं, अर्चिरादिमार्गेण तल्लोकं प्राप्तानां भगवदनुभवजनितनिस्सीमनिरतिशयानन्दयोगः, क्षणमात्रतद्विश्लेषासहत्वं, तिरोधाननिवृत्त्या

[1] वि पु.१ २२.५३. [2] पु.सूक्तं. [3] सामवे.उत्तर.१७.२.१.२. [4] बृ ८.२.१५.

साक्षात्कृतस्वपरयाथात्म्यस्य मुक्तस्य भगवति पारतन्त्र्यस्य निरतिशयपुरुषार्थताध्यवसायः, भगवतो मुक्तानां वा इच्छया ततः प्रतिनिवृत्त्यभावः, इत्यादयो बहवोऽर्थाः सिद्धाः । तदिदं सर्वमभिसन्धायैव भगवता सूत्रकृता [1]"अनावृत्तिः शब्दात्"[1] इति सूत्रितमिति सर्वं समञ्जसम् ॥

१५६ ॥ इति जगद्व्यापारवर्जाधिकरणम् ॥ ६ ॥

---

निस्सीमज्ञानसंपद्वितरणचणया वात्स्यगोपालसूरेः
दृष्ट्या श्रीरङ्गरामानुजमुनिचरणांभोजयोः सेवया च ।
भावं निर्धार्य निर्धारितनिगमशिरस्स्तोमतात्पर्यभूमेः
मीमांसायाममल व्यवृणुत भगवत्प्रीतये देशिकार्यः ॥

ग्रन्थोऽयं द्रमिडेषु लब्धजनुषा श्रीवेङ्कटाद्रेस्तटोपान्ते सद्गुणवारिधेस्तनुभुवा गोपालविद्वन्मणेः ।
श्रीमद्देशिकसूरिणा विरचितः सद्देशिकानुग्रहात्
शालीवाहशके महागुणसमुल्लोभिर्मिते (१८५९) [2]वत्सरे ॥

---

इति श्रीकौशिककुलतिलकस्य महामहोपाध्यायस्य
श्रीरामानुजसिद्धान्तविजयध्वजस्य कलप्रपूर्णस्य
श्रीदेशिकाचार्यस्य कृतिषु शारीरकाधिकरणरत्नमालाप्रकाशे
चतुर्थाध्यायस्य चतुर्थः पादः ॥

**चतुर्थाध्यायः समाप्तः ॥**

---

[1] ४.४.२२. [2] 1937 A D.

# अधिकरणरत्नमालाश्लोकसूची ॥

[*( ) एतदन्तर्गताः पुटसंख्याः चतुर्थाध्यायद्योतकाः]

## अधिकरणरत्नमालाप्रकाशश्लोकसूची ॥

# सूत्रसूची।

[*( ) एतदन्तर्गताः पुटसंख्याः चतुर्थाध्यायद्योतकाः]
[अ.=अध्यायः; पा.=पादः; सू.=सूत्रसंख्या.]

अ

## इ



## ई

उ



ऊ

ज



त

श्रीः ।

# श्रीशारीरकाधिकरणरत्नमाला-प्रकाशोदाहृतप्रमाणसूची ॥

[ *( ) एतद्वेरान्तर्गताः पुटसंख्याः चतुर्थाध्यायद्योतकाः ]

| प्रमाणानि. | आख्यनाम | पुटसंख्या |
|---|---|---|
| | अ | |
| अक्षरात् परतः परः | मु. 2 1 2 | ६३, ६४, ७८ |
| अग्निर्ज्योतिरहः शुक्लः | गी. 8 24 | ३२९, (३६), (३७) |
| अग्निर्मूर्धा | .... | ६२–६६ |
| अग्निर्वै होता | सामवेद. | ३६३ |
| अग्निलोकं | कौषी. 1 21 | *(४२) |
| अग्निहोत्रं जुहुयात् | .... | ३९४ |
| †अग्राह्यो न हि गृह्यते | बृ. 2 4 22 | ३४२ |
| अङ्गुष्ठमात्रः पुरुषो ज्योतिरिव | कठ. 2 4 13 | ८९ |
| अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा | कठ. 2 6 17 | ८९ |
| अङ्गुष्ठमात्रः पुरुषो मध्ये | कठ. 2 4 12 | ८६–८९ |
| अजामेकां लोहितशुक्लकृष्णां बह्वीः | तै. ना. 10 5 | ११२ |
| अजामेकां लोहित........बह्वीः | श्वे. 4 5 | ११२ |
| अजायमानो बहुधा | तै. पु. सू. | ७३, १९७, १९८ |
| अजो नित्यः शाश्वतोऽयं | कठ. 1 2 18 | २१३ |
| अणीयान् व्रीहेर्वा | छा. 3 14 3 | ४५ |
| अणोरणीयान्महतो | कठ. 1 2 20 | ११२ |

† अगृह्यो न हि गृह्यते–पा.

## इ

ऐ

द

## ब

# सूत्रपठितऋषिनामसूची ॥

---

| | | |
|---|---|---|
| बादरायणः | 1 3 25 | ९२ |
| | 1 3 32 | ९५ |
| | 3 2 40 | २८९ |
| | 3 4 1 | ३७६ |
| | 3 4 8; 3 4 19 | ३८० |
| | 4 3 14 | (५०) |
| | 4 4 7 | (६१) |
| | 4 4 12 | (६६) |
| बादरिः | 1 2 31 | ६५ |
| | 3 1 11 | ३१५ |
| | 4 3 6 | (४२) |
| | 4 4 10 | (६५) |
| [वामदेवः | 1 1 31 | ३९] |

# विषयवाक्यसूचिका ॥

छान्दोग्योपनिषद्

# THE THIRTY-TWO BRAHMA-VIDYAS.

The Upanishads, which teach about the Highest Brahman, the individual Soul, the Prakriti and their inter-relation, lay down also the means of attaining to that Brahman which is to be practised by those desirous of Release. These are called the *Brahma-Vidyas* or *Upasanas*—the different forms of meditations on Brahman. They are thirty-two in number and are independent of each other. The meditation on Brahman as the *Consort of Sri* and as endowed with the five attributes—*satya*, *gnana*, *ananda*, *ananta*, and *amala*—is common to all these Vidyas and besides these each Vidya has got one or more qualities of Brahman which are peculiar to it and which distinguish one Vidya from the other. All these Vidyas are discussed in detail in chapters I and III of the Brahma Sutras

The earlier Acaryas like Ramanuja and Vedanta Desika do not appear to have given a complete list of these Vidyas and this has led to some differences as to the names of the Vidyas and as to the Upanishadic texts which deal with them, though all agree that the Vidyas are thirty-two Three lists which are mentioned below have been prepared in recent times and there are some differences between them. (1) An index of these Vidyas and also *Kamya-Vidyas*—along with their respective Upanishadic Texts and with the Brahma-Sutras wherein they are discussed—is given at the end of a Telugu edition of Sri Bhashya.

(2) A. Govindacarya of Mysore has given a list of the Brahma-Vidyas with references to Upanishads in pages 129 and 130 of his English Translation of the *Gita-Bhashya* of Sri Ramanuja. (3) In an appendix to his commentary on *Hastigirimahatmya*, Setlur Sri Narasimhacarya has discussed this question in detail and also given a Tamil translation of the respective Upanishadic Texts. He says that R. Narayana Aiyar has dealt with the same in English in some detail.

The Sri Bhashya in Telugu Script, referred to above, has three Vidyas—*Aja-vidya, Rudra-vidya and Caturmukha-vidya*—which are not found in others, but does not give the *Gayatri-vidya* and the *Paryanka-vidya* of the others. The Paryanka-vidya is often referred to by Desika in his works.

Govindacarya omits the Vidya of *Satya Brahman* in the Sun, but includes an *Akshi-vidya*, a *Nyasa-vidya* and a *Bhargavi-varuni-vidya*.

What is given below is mainly based on the text of the *Adhikarana-ratna-mala* now published and the other lists have also been made use of The present work gives different names for some Vidyas and they are given in the following list.

---

# ब्रह्मविद्याः ॥

सर्वविद्यानाम विषयवाक्यं तद्विषयकब्रह्मसूत्राणि पुटसंख्या.



---

[1] According to the index of Sri Bhashya (Telugu edition)

अन्नविद्या—श्वे. ५-५, तै. नारा. १२-५—ब्रह्मसूत्र १-४-८.

रुद्रविद्या । चतुर्मुखविद्या ॥

[1] According to Govindacarya, the Upanishadic Text that deals with Paramapurusha vidya is
"ऋतं पिबन्तौ. . . . पुरुषान्न पर" (कठ. ३)

१६. नाचिकेतविद्या १-२-९ ४८

"यस्सेतुरीजानानामक्षरं ब्रह्म यत्परं" (कठ. १-२).

१७. न्यासविद्या

1. "वसुरण्यो विभूरसि....ओमित्यात्मानं युञ्जीत" (तै.नार.९१).

2. "यो ब्रह्माणं विदधाति पूर्वं....शरणमहं प्रपद्ये" (श्वे. ६).

१८. पञ्चाग्निविद्या ३-१-१ ; ३-३-३२ २९१, ३२८

1. "तद्य इत्थं विदुर्ये चेमेऽरण्ये" (छा. ५-१०)

2. "य एवमेतद्विदुर्ये चामी अरण्ये" (बृ. ८-२-१५).

१९. परंज्योतिर्विद्या १-१-२५ ३६

"अथ यदतः परो दिवो ज्योतिर्दीप्यते" (छा. ३-१३-७,८)

(४८)

२०. पर्यङ्कविद्या

"अमितौजा पर्यङ्कः....ब्रह्म विद्वान् ब्रह्मैवाभिप्रैति" (कौषी.१)

२१. प्रतर्दनविद्या १-१-२९ ३९

"स होवाच प्राणोऽस्मि... अमृतमित्युपास्स्व" (कौषी. ३.)

२२. प्राणविद्या ३-३-१० ३०१

[1]"यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै" (छा.५-१-१).

२३. बालाकिविद्या १-४-१६ १२२

1. यो वै बालक एतेषां पुरुषाणां कर्ता यस्य वै तत्कर्म स वै वेदितव्यः" (कौषी. ४-१८.)

2. "य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्" (बृ.४-१-१६,१७)

---

[1] Govindacarya gives the following Text as the reference: "प्राण इति होवाच सर्वाणि ह्वा इमानि...प्राणमभ्युज्जिहते" (छा.१-११-५.) So does the Index in the Telugu Sri Bhashya, but the Sutra given is 1-1-24

२४. भूमविद्या १-३-७ ७५

"यो वै भूमा तत्सुखं....भूमा त्वेव विजिज्ञासितव्यः" (छा.७).

२५. मधुविद्या १-३-३० ९६

"असौ वा आदित्यो देव मधु....स य एतदेवामृतं वेद"

(छा. ३-१.)

२६. मैत्रेयीविद्या १-४-१९ १२७

"आत्मा वा अरे द्रष्टव्यः" (बृ. ६-५-६ ; ४-४-५.)

२७. वैश्वानरविद्या १-२-२५ ; ३-३-५५ ६५,३१४

"इममात्मानं वैश्वानरं. ..उपास्ते स सर्वेषु लोकेषु"

(छा. ५-११—२४)

२८. व्याहृतिविद्या (आदित्यमण्डलस्थसत्यब्रह्मविद्या) ३-३-२० ३१२

"तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले"

(बृ. ७-५-१.)

२९. शाण्डिल्यविद्या १-२-१ ; ३-३-१९ ४३, ३११

1. "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत"

(छा.३-१४-१.)

2 "स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपं"

(वाजस. अग्निरह.)

3 "मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये"(बृ.७-६-१).

३०. संवर्गविद्या १-३-३३ ९९

"वायुर्वाव संवर्गो यदा वा अग्नि (छा. ४-३-१—४)

३१. सत्यकामविद्या (षोडशकलब्रह्मविद्या)

"सत्यकामो हि जाबालो... अत ह न किंचन वीयायेति

वीयायेति" (छा. ४-४—९)

[1]३२. सद्विद्या 		१-१-५ 		१७

"सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयं"

(छा. ६-२-१)

---

[1] According to Govindacarya

भार्गवीवारुणीविद्या–"भृगुर्वै वारुणिः . वारुणी विद्या" (तै. भृगु. १-६)

अक्षिविद्या–"य एषोऽक्षिणि पुरुषो दृश्यते एतदमृतमभयमेतद्ब्रह्मेति"

(छा. ४-१५-१).

## काम्यविद्याः ॥

| पृष्ठ. | विद्याविषयसूत्रं | विद्यानाम | विषयवाक्य |
|---|---|---|---|
| ३०० | ३-३-६ | उद्गीथावयवप्रणवविद्या | छा. १-१-२ |
| ,, | ,, | कृत्स्नोद्गीथविद्या | बृ. ३-३-१–७ |
| ,, | ,, | प्रणवे परोवरीयस्त्वादिदृष्टिविद्या | छा. १-९ |
| ,, | ,, | प्रणवे हिरण्मयत्वविशिष्टभगवद्दृष्टिविद्या (अन्तरादित्यविद्यान्तर्भूता) | छा.१-६ |
| ३०१ | ३-३-१० | ज्यैष्ठ्यश्रैष्ठ्यविशिष्टप्राणविद्या | छा. ५-१; बृ. ८-१ |
| ३०९ | ३-३-१८ | प्राणवासस्त्वदृष्टिविद्या | छा. ५-२; बृ.८ १ १४ |
| ३१७ | ३-३-२४ | छान्दोग्यगत पुरुषविद्या | छा. ३-१५–३-१७ |
| | | तैत्तिरीयगत पुरुषविद्या | तै. नार. ८० |
| ३२० | ३-३-२६ | हानोपायनचिन्तनविद्या | छा. ८-१३-१, मु. ३-२-८; कौषी. १-४; शाट्यायन. |
| ३३६ | ३-३-४४ | मनश्चितवाक्चितादिविद्या | वाजस. अग्निरहस्य. |
| ३८५ | ३-४-२९ | प्रणवे रसतमत्वादिदृष्टिविद्या | .छा. १-१ |

---

| | | | |
|---|---|---|---|
| (५) | ४-१-३ | जीवे ब्रह्मदृष्टिविद्या | बृ. ३-४-७ |
| (७) | ४-१-४ | मन प्रभृतिषु ब्रह्मदृष्टिविद्या | छा.३-१८, ७-१-५ |
| (८) | ४-१-६ | उद्गीथादौ आदित्यदृष्टिविद्या | छा. १-३ |

# BIBLIOGRAPHY

Sri Bhashya of Ramanuja—commentary on the Brahma Sutras—has been published several times in different places in different scripts—Nagari, Grantha and Telugu The Sutra prakasika of Sri Sudarsana Bhatta—the learned and elaborate commentary on Sri Bhashya—also has been published more than once along with the text But both of them have become rare and there are practically no books in the field available to the ordinary public Herewith is a list of

I the editions of Sri Bhashya, (a) with and (b) without Srutaprakasika,

II the translations of Sri Bhashya and

III other works on the Brahma Sutras based on Sri Bhashya

## I SRI BHASHYA: a) Text only

i *in Nagari Script*—

1 **SRI BHASHYA** — Nos LXVIII and LXXII (Bombay Sanskrit and Prakrit Series, Department of Public Instruction, Bombay)

Edited with notes in Sanskrit by Vasudev Sastri Abhyankar, *Pandit Fergusson College, Poona* (*Sold at Government Central Press, Bombay*)

**Part I Text only** 788 pages with the Index of Sutras and Index of Srutis quoted in 35 pages 500 copies, published *in 1914 and priced Rs 10*

**Part II Introduction and Notes** विवृति (Vivriti) pages xviii+330 500 copies, published in 1916 by Government Central Press Bombay and priced Rs 6

2 **SRI BHASHYA**—(Bibliotheca Indica Edition)

3 **SRI BHASHYA** (*Text only*). Edited with notes and readings by Rev J J Johnson M A, with the assistance of Mahamahopadhyaya Pandit Bhagavatacarya and Pandit Batuk Nath Sastri 570 pages published in 1915 printed by Bhagavati Prasad, B A, for the proprietors of E J Lazarus & Co, Medical Hall Press, Benares.

4 **SRI BHASHYA** (*Text only*) —Priced Re 1
Pandit Dharmaram Sastri, Vedanta Acarya, Gnana guddi (mukam), Sri Brindavan, Muttra Dt

**5 SRI BHASHYA** (*Text only*)—in two volumes with index of Sutras Edited with sources of quotations in footnotes by Sri Lakshminarasimha Kumara Tatarya and A V Narasimhacarya and printed at the Ananda Press Madras by the Venkateshwar & Co, Madras published in 1909 (*Kali 6011 Saumya Citra Sukla dasami*

Vol. I (First edition)—Chap I pp vii+411+39 (includes first chapters of **Vedantasara** and **Vedantadipa** of Sri Ramanuja and the **Adhikaranasaravali** of Sri Vedanta Desika as a Supplement)—Priced Rs 3

Vol I—Second edition 1937 pp 10+8+419 Rs 3

Vol II Chaps II to IV—First edition published in 1910 (*Kali 6012 Sadharana Ashadha Sukla pancami*) pages xiv+496+73 to 110, includes chapters 2 to 4 of **Vedantasara** and **Vedantadipa** of Ramanuja and **Adhikaranasaravali** of Sri Vedanta Desika as supplement —Priced Rs 3 (now out of stock)

Vol II (*Second edition in the press*)

**(b) Text with Srutaprakasika of Sri Sudarsana Bhatta**

(i) *Nagari Script*

**1 SRI BHASHYA** with **Srutaprakasika** (Vol I Chap I pada i only) with notes by Ramamisra Sastri pages 932, published in (1945 Vikrama) 1889 A D and priced Rs 9—12—0 Printed published and sold by E J Lazarus & Co, at the Medical Hall Press Benares, sold also by Jyeshtbaram Mukundji, Bombay and Ganesh Das & Co Benares

Vol 2 pages 933 to 1748 (From Chap I pada ii to Chap II) Published in 1948 *Vikrama* (1891 A D) Otto Harrasowitz & M Spiragtis Leipzig Luzac & Co London. Price Rs 8—4—0

Vol 3 pages 1749 to 3085 (Chapters III & IV Price Rs. 4—8—0

**2 SRI BHASHYA** with **Srutaprakasika** and **Adhikaranasaravali** *Catus sutri* only (Chap I pada i Sutras 1 to 4) pp 18+272 Printed at the Nirnayasagar Press Bombay Edited and published by T Srinivasa Sarma. Priced Rs. 4

**3 SRI BHASHYA** with **Srutaprakasika** with **Tattva Tika** of Sri Vedanta Desika and with the **Bhava prakasika** of Sri Rangaramanuja—complete in 6 volumes published by Pandit Dharamdharji Sastri Brindavan (Muttra)

4 **SRI BHASHYA** with

(1) **Srutaprakasika** and } of Sudarsana Bhatta,
(2) **Srutapradipika** }
(3) **Bhavaprakasika** of Rangaramanuja,
(4) **Nayaprakasika** of Meghanada Suri,
(5) **Tattva tika** of Vedanta Desika,
(6) **Mula Bhava prakasika** of Rangaramanuja,
(7) **Nyaya sudarsana** of Varadanarayana Bhattaraka,
(8) **Adhikaranasaravali** of Vedanta Desika,
(9) **Adhikarana cintamani** of Varadanatha, and
(10) **Vishaya vakya dipika** of Rangaramanuja

Vol I— published in 1937, pp 450, price Rs 6

Edited by Sri V Anantacarya and V R Krishnamacarya, published by Sri A R Krishnamacarya, Madras Sanskrit Book Depot, Krishnapuram Kodambakkam, Madras

7 **SRI BHASHYA** with **Tattva tika** No 2 of the *Vaishnava-siddhanta grantha ratna mala* —with Introduction and Indexes —edited by His Holiness Srirangasathakopa Mahadesika (Forty second Pontifical Head of the Ahobila Math) now at Srirangam, *printed at the Kabeer Printing Works*, Madras, and published by the Vaishnava Siddhanta Pracara Sabha, Madras in 1938 (The text of Tattva tika is available only upto *Sruti ghatta* in *Mahasiddhanta* of *Jignasa adhikarana* I i 1 Pages iv+24+496+446+50) Priced Rs 5

ii *Grantha Script* —

**SRI BHASHYA** with **Srutaprakasika**—Edited by Bharadvaja Ramanujacarya, printed at the Prakasini Press, Conjeevaram by Tiruvenkata Mudaliar, and published by T R Ramanarayana Pillai, Trichinopoly in 1920

Vol 1 Chap I padas 1 & 2, 16 pages of Adhikarana artha sangraha+560 pages

Vol 2 Chap I padas 3 & 4 and Chaps II, III and IV, pp 624 (Both volumes sold for Rs 4)

Vol 3 **Bhavaprakasika** only—a gloss on Srutaprakasika—of Sri Rangaramanuja edited by V. N Krishnamacarya of Uppilippankoil and printed in Vaidika vardhini Press, Kumbakonam Published in *Simha* of *Parabhava* (August, 1906) Priced Rs 5 (pages 406+130).

iii. *Telugu Script*—

1 **SRI BHASHYA** with **Srutaprakasika** (pp 792) edited by Purana ghattam Alvar Rajagopalacarya and Tirupati Gomatham Srinivasacarya, printed by Chengalvaraya Nayakulu in Vedanta Vidya vilas Press, Madras, and published on Thursday 26th of March 1868 (*Sukla dvitiya Caitra of Vibhava Salt. 1791*

2 **SRI BHASHYA** with **Srutaprakasika** and with the text of *Bhagavad Gita* — *Edited by Chakravarti Ayyangar* Dharmadhikari of Mysore and printed in Vidvatarangini Press Price Rs 4

Vol 1 (1894)—Chap I only—pages 706

Vol 2 (1896)—Chap II IV—pages 717 to 1156

3 **SRI BHASHYA** with **Srutaprakasika** and with **Vedantasara** and **Vedantadipa** of Ramanuja
Printed at G R C Press Madras edited by Gargya Sri Paravastu Ramanujacarya with *Adhikaranartha sangraha* and indexes of Quotations of Brahmavidyas and of Kamyavidyas *Pages 15+1039+26+9 Kali 008 (1908)*

4 **SRI BHASHYA** with **Sruta pradipika**[1] of Sri Sudarsanacarya and **Vishaya vakya dipika** of Sri Rangaramanuja—pp 406, printed in Mysore Padas i and ii of Chap I only

5 **SRI BHASHYA** with **Tattva Tika** of Sri Vedanta Desika—edited by Ghantavataracarya of Perungattur and printed in Sudarsana Press Conjeevaram as No 1 of the Sri Sukti mala Series published in *Visvavasu* (1906) and priced Rs 2 —pp 164+1 ( 

## II TRANSLATION OF SRI BHASHYA

(a) into English —by

1 George Thibaut Edited by F Max Muller as Vol XLVIII of the Sacred Books of the East, printed at the Clarendon Press Oxford (1904) with Indexes of Quotations of Sanskrit words and of Names and Subjects by Dr Winternitz priced 25 Sh pp xii+800

2 M. Rangacarya M A and M B Varadaraja Aiyangar B.A B L. Vol. I (Chap I pada i only) Pages lxxi (an elaborate Analytical Outline of Contents )+441 Printed at the Brahmavadin Press Madras and published in November, 1899 in the *Brahmavadin Series*

---

[1] श्रुतप्रदीपिका

3 Diwan Bahadur V K Ramanujachari printed by A K Sita rama Sastri, at the Vasanta press, Adyar, Madras and published by the author at Kumbakonam

i Vol 1—Chap I (1930), pp xliv+440+1

ii Vol 2—Chap II to IV (1930), pp xlv to lxx+441 to 930+2

iii Vol 3—**Vedic Texts** (considered in Sri Bhashya) with an Index pp 124+ii

iv **The Three Tatvas**—Translation of Sri Bhashya contained in Chap I, i 1 & 4 and in Chap II i 6 which is omitted in Vols 1 and 2 mentioned above pp xxxvi+340

(b) into **Tamil**—This contains the Text of Sri Bhashya in Grantha Script, the same transliterated into Tamil and the translations of Sri Bhashya and of Srutaprakasika

Vol 1—Chap I i 1 **Jignasadhikarana** only Translated by Mahamahopadhyaya T V Srinivasacarya of St Joseph College, Trichinopoly, priced Rs 7—8—0

Vol 2—Chap I i 2 to 4 (1937) Translated by Mimamsa ratna Sri A V Gopalacarya M A, B. L, Advocate, Trichinopoly, with his own footnotes and Adhikarana sangraha, priced Rs 3—8—0 pp ix + 388
Printed at Sri Vilasam Press, Srirangam both published by Tiruppuliambiam T D Ramaswami Naidu, President of Sri Bhashya Tamil Translation Committee, Srirangam

## III OTHER BOOKS ON BRAHMA SUTRAS by *Sri Ramanuja*

i **Vedanta sara**[1]

*a* *in Nagari Script*—cf I i (5) above (Vols 1 & 2)

*b* *in Grantha Script* Edited by Srinivasacarya of Tukkaci, Kumbakonam and printed at Sri Vidya Press, Kumbakonam published in 1894 pp 110.

*c* *in Telugu Script* (1) cf I iii (3) above.
*(2) Another edition*

*d* Translation (1) into English which appeared in the *Brahmavadin* of Madras.

(2) into Tamil—Appearing in monthly instalments as a Supplement to *Vedantadipika*, Madras (Up to August 1938—Chap. I iii 17—pp 80)

---

[1] वेदान्तसार.

ii Vedanta dipa[1]

a in *Nagari Script*: cf I i (5) above (Vols. 1 & 2).

b Do pp 252 Edited by Acarya Bhattanath Svami in the Benares Sanskrit Series, printed at Vidya Vilas Press, Benares and published by the Chowkambha Boook Depot, Benares, 1904

c. in *Telugu Script*: (1) cf I iii (3) above
(2) Another edition.

## IV BOOKS ON BRAHMA SUTRAS by others based on the Sri Bhashya of Ramanuja

(a) i. **NAYAMAYUKHA MALIKA**[2] of Sri Appayya Dikshita No 1 of Visishtadvaita Vaijayanti Series (Nagari Script) Edited by V N Krishnamacarya of Uppiliappankoil and printed in Gopala Vilasa Press, Kumbakonam (1915) pp 383

ii. **SARIRAKA-SASTRARTHA DIPIKA**[3] of Sri Rangaramanuja No 2 of the Visishtadvaita Vaijayanti Series pp 327 (Nagari Script)

iii **BHASHYARTHA MANIPRAVALA DIPIKA**[4] of Karaikkurucci Venkatakrishnamacarya *alias* Ayyamacarya (who later became the fortieth head of the Ahobila Math as His ... ited by Mudumbi ... printed in 1920 ... (Script Grantha

This is an abridged *Manipravala* (Grantha and Tamil mixed) translation of Sri Bhashya based upon earlier comment aries and upon an earlier Manipravala translation as the author acknowledges in p 434 of this work. This contains an exposition of those slokas of Adhikaranasaravali which give the substance of each Pada Pp. 8+436 Priced Re 1—8—0.

(b) i **TATTVA SARA**[5] of ... Edited by ... mentary ... Sundarac ... vardhini Press, Kumbakonam in *Sarvari* (1900) and priced Re 1. (pp. 136)

---

[1] वेदान्तदीप [2] नयमयूखमालिका [3] शारीरकशास्त्रार्थदीपिका.
[4] भाष्यार्थमणिप्रवालदीपिका [5] तत्त्वसार

*Tattva sara* comprises 104 slokas and takes only a few *Adhikaranas*—16 out of 156—for discussion 22 verses (49 to 70) are devoted to refute the view of the Mayavadins and 26 (71 to 96) to reply to the school that holds Siva as the Highest God 4 slokas (42 to 4?) are devoted to an incidental discussion of *Akrti*, and *Aruna adhikaranas* 4 slokas (98 to 101) deal with the *Sadhana*—or the third Adhyaya, 102 with the third Pada of the fourth Adhyaya 103 with the last *adhikarana* of the same 104 is conclusion

ii **NYAYA KALAPA SANGRAHA**[1] of Somesvaracarya. In its 220 slokas it gives the main points of discussion and Siddhanta view in each Adhikarana Pada and Adhyaya This is now with us in Ms form and we propose to print it soon for which three Mss—from Goshtipuram Sri Saumyanarayana Acarya from Mysore and from Adyar Library Madras—have already been compared and edited

iii **ADHIKARANA SARAVALI**[2] of Vedantadesika (in 562 verses)

(1) in *Nagari* (first edition 1909) cf I i 5 above Vols. 1 & 2

(2) Do. (Second edition—1936) now available separately for 8 as from Ananda Press Madras. Pp 108

(3) in *Grantha* Text only printed at Bhagavatavardhini Press Sundappalayam (Coimbatore) along with Tattva mukta kalapa of Vedanta Desika price Re 0—8—0

(4) *in Grantha* Text with the commentary **Prakasika** of Mahamahopadhyaya Nadadur Sundaracarya of Srirangam Priced Rs ? Pp 138+90+128+9?

(5) in *Telugu* Script Text with **Adhikarana Cintamani**[3] of Varadanatha *alias* Kumara Vedantacarya
Edited by Sriperumbudur Nadadur Rangacarya with the assistance of T L Srinivasacarya and printed at Sri Niketam Press Madras in year *Vikrti* priced Rs 3—8—0, pp. 435+5+8 (Has an alphabetical index of the Adhikaranas)

(6) **ADHIKARANA KALPATARU**[4] a commentary by His Holiness Sri Sathakopa Mahadesika (38th head) of the Ahobila Math which is in Ms ready for printing and may be printed soon.

(7) An exhaustive commentary by Diwan Bahadur V K Ramanujacharya the first instalment of which has been published (priced Re 1) and the rest awaiting publication Printed at Sri Komalamba Press Kumbakonam

---

[1] न्यायकलापसंग्रह [2] अधिकरणसारावलि [3] अधिकरणचिन्तामणि

[4] अधिकरणकल्पतरु

(8) **ADHIKARANA RATNA MALA**[1] with Prakasa of Mahamahopadhyaya Kapistalam Desikacarya—the work on hand

iv **SRI BHASHYA VARTIKA**[2] No 122 and 123 of Benares Sanskrit series.

Edited by Ratnagopal Bhatta Secretary Chowkambha Book Depot printed in 1907 at Vidya Vilas Press Benares pp 120

v. **VISISHTADVAITA ADHIKARANA MALA**[3] a work in slokas with commentary

Compiled by Pandit Sudarsanacarya Panjabi, printed and published in 1924 by Manilal Itcharam Desai at the Gujerathi News Printing Press No 20 24 Bakehouse Lane, Fort Bombay Pp 116 Priced Re 1

vi **VEDANTA TATTVA SARA**[4] ascribed to Ramanuja—Second edition 1898 pp 82 Edited with English translation and notes by the Rev J J Johnson C M S Benares printed at the Medical Hall Press Benares and published by E J Lazarus & Co Benares

vii **VYASA SIDDHANTA MARTANDA**[5] of Mahamahopadhyaya Kapistalam Desikacarya Printed at the Law Printing House Mount Road Madras priced Rs 4 and published in 1929 pp vi+2+iv+8+2+216+60

Section i —On a fair consideration of the Brahma-Sutras of the *Samanvaya* or first chapter, the doctrine regarding *Tattva* or final truth is that Para Brahman is no other than Sriman Narayana.

Section ii —After an enquiry into the Sutras of the last three padas of the *Phala* or the fourth Adhyaya it is established that the final goal consists in higher world, in a state of perfect wisdom goodness and bliss and in perfect harmony with the Divine will

Section iii —The above conclusions are reinforced by references to what Sri Vedavyasa himself has said on these matters in his other book the Mahabharata.

Section iv —This is devoted to refute the view held by some that the unbiassed Kapila in laying down the Prima facie view has stated in his Sankhya Sutras that the Advaita Doctrine is the Siddhanta of Vyasa.

---

1 अधिकरणरत्नमाला सप्रकाशा  2 श्रीभाष्यवार्तिकं

3 विशिष्टाद्वैताधिकरणमाला  4 वेदान्ततत्त्वसारः  5 व्याससिद्धान्तमार्तण्ड

viii. **VISHAYA-VAKYA-DIPIKA**[1] of Sri Rangaramanuja—A commentary on the Upanishadic Texts discussed by the Brahma Sutras.

1. Printed and published in Nagari Script by the Lakshmi Venkatesvar Steam Press, Kalyan, Bombay. Priced Rs. 3.
2. Cf. I. *b.* iii. (4) above

---

[1] विषयवाक्यदीपिका

Printed at the Sri Brihadamba State Press, Pudukkottai, 500—5-12-38.